

SWAMI BHASKARA NAND SARASWATI
THE FAMOUS ASCETIC OF BENARES.
श्रीमान् स्वामी भास्करानन्दजी सरस्वती काशी।

श्रीगणेशाय नमः ।

अथ सामवेदीयोपनिषदं छान्दोग्यमारभमाणो भगवान्मनोवृत्तित्वेनाद्वैतज्ञानसाम्यान्मनोजयसाधनत्वेनाद्वैतज्ञानोपयोगित्वाच्चोपासनान्येव तत्र तावद्विवक्षुर्ब्रह्मवाचकत्वेनाम्नायाम्नाय क्रियामूलत्वेन चोङ्कारस्योङ्कारोपासनमेवादावुपादत्ते ओमिति—

ओमित्येतदक्षरमुद्गीथमुपासीत ओमिति ह्युद्गायति तस्योपव्याख्यानम् ॥१॥ एषां भूतानां पृथिवीरसः पृथिव्या आपो रसो ऽपामोषधयो रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः

साम रसः साम्न उद्गीथो रसः २
स एष रसाना ँ्रसतमः परमः
परार्द्ध्योऽष्टमो यदुद्गीथः ॥३॥
कतमाकतमर्क्कतमत्कतम-
त्साम कतमः कतमउद्गीथ
इतिविमृष्टं भवति।४। वागेवर्क्
प्राणः सामोमित्येतदक्षरमुद्-
गीथः तद्वा एतन्मिथुनं यद्वाक्
च प्राणश्चर्क् च साम च ।५।
तदेतन्मिथुनमोमित्येतस्मि-
न्नक्षरे स ँ्सृज्यते यदा वै मि-
थुनौसमागच्छत आप यतो वै
तावन्योन्यस्य कामम् ॥ ६ ॥

आपयिताह वै कामानां भव-
ति य एतदेवं विद्वानक्षरमुद्-
गीथमुपास्ते॥७॥ तद्वा एतदनु-
ज्ञाक्षरं यद्धि किंचानुजानात्यो
मित्येव तदाह एषोएवसमृद्धि-
र्यदनुज्ञासमर्द्धयिताह वै का-
मानां भवति यएतदेवं विद्वा-
नक्षरमुद्गीथमुपास्ते।८। तेने-
यन्त्रयी विद्या वर्तते ओमित्या-
श्रावयत्योमिति शꣳसत्योमि-
त्युद्गायत्येतस्यैवाक्षरस्याप-
चित्यै महिम्ना रसेन ।९। तेनो-
भौ कुरुतो यश्चै तदेवं वेदयश्च

न वेद नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ॥ १० ॥

यतः स्रवत्यऽनोङ्कृतं कर्मेतिन्यायात्सर्वकर्मस्वोमित्युद्गायत्युच्चारयति जनस्तस्मादुद्गीथसंज्ञकमोमित्यक्षरं वक्ष्यमाणं यद्रसतमत्वं सर्वकामावाप्तित्वं समृद्धित्वं तैर्गुणैर्युतमुपासीतभावयेत्। एषां भूतानामित्यादिनाऽत्रखण्डे तस्य प्रणवस्यैवोपव्याख्यानं गुणादेर्वर्णनमस्तीत्याद्यकण्डिकार्थः । ननूक्तगुणकं प्रणवं यो जानाति यो वै न जानात्युभावपि प्रणवपूर्वकं कर्मकुरुतः तयोः कर्मणि च विशेषादर्शनादिदमुपासनं व्यर्थमितिचेन्न यतो ज्ञानकर्मणी भिन्ने तथाच

केवलाद्विद्याश्रद्धायोगैःसहितं कर्मातिवीर्यव-द्भवति सपदि फलदमिति यावदित्यन्त्यक-ण्डिकार्थः । वैदिकोपासनानां सम्प्रति स-म्प्रदायविच्छेदादेव विषममेवाग्रेपि व्या-ख्यानं बोध्यम् ॥

इति छान्दोग्योपनिषत्प्रसादे प्रथमाध्या-यस्य प्रथमः खण्डः ॥ १ ॥

---

अथाध्यात्मप्राणदृष्ट्याप्रणवोपासनमाख्यायि-कयाह देवा इति—

देवा सुरा ह वै यत्र संयेतिर उभये प्राजापत्यास्तद्धदेवा उ-द्गीथमाजहुरनेनैनानभिभ-विष्याम इति ॥ १ ॥ तेह ना-सिक्यं प्राणमुद्गीथमुपासांच-क्रिरे तꣳहासुराःपाप्मनाविवि-

धुस्तस्मात्तेनोभयं जिघ्रति सु-
रभि च दुर्गन्धि च पाप्मना
ह्येषविद्धः ॥२॥ अथ ह वाचमु-
द्गीथमुपासां चक्रिरे ता ँ् हा
सुराः पाप्मना विविधुस्तस्मा-
त्तयोभयं वदति सत्यंचानृतं च
पाप्मनाह्येषा विद्धा ॥३॥ अ-
थ ह चक्षुरुद्गीथमुपासांच-
क्रिरे तद्धाहासुराः पाप्मना
विविधुस्तेनोभयं पश्यति द-
र्शनीयं चादर्शनीयं च पाप्म-
नाह्येतद् विद्धम ॥ ४॥ अथ
श्रोत्रमुद्गीथमुपासांचाक्रिरेतद्-

घासुराः पाप्मना विविधुस्तस्मा-
त्तेनोभय ँ् शृणोति श्रवणीयं
चाश्रवणीयं च पाप्मना ह्येतद्
विद्धम् ॥५॥ अथ ह मन उद्
गीथमुपासांचक्रिरे तद्धा हा
सुराः पाप्मना विविधुस्तस्मा-
त्तेनोभय ँ् संकल्पयते संकल्प-
नीयं चासंकल्पनीयं च पाप्म-
ना ह्येतद्विद्धम् ॥६॥ अथ ह
यएवायं मुख्यः प्राणस्तमु-
द्गीथमुपासांचक्रिरे त ँ् हासु-
रा ऋत्वाविदध्वंसुर्यथा ऽश्मा-
नमाखणमृत्वा विध्व ँ् सेत ७

एवं यथाऽश्मानमाखणमृत्वा विध्वꣳसत एव ꣳ हैवसविध्वꣳसते य एवं विदिपापंकामयते यश्चैनमभिदासति स एषोऽश्माखणः ॥ ८ ॥ नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्माह्येष तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति एवमु एवान्ततोऽवित्वोत्कामतिव्याददात्येवान्तत इति ॥ ९॥ तꣳहाङ्गिरा उद्गीथमुपासांचक्र एतमु एवाऽऽङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः ॥ १० ॥ ते-

न तँ्ह बृहस्पतिरुद्गीथमुपासांचक्र एतमुएव बृहस्पतिं मन्यन्ते वाग्धि बृहती तस्या एष पतिः ॥ ११ ॥ तेन तँ्हाऽऽयास्यउद्गीथमुपासांचक्र एतमुएवाऽऽयास्यं मन्यन्त आस्याद्यदयते ॥ १२ ॥ तेनतँ्ह बकोदाल्भ्यो विदांचकार स ह नैमिशीयानामुद्गाता बभूव सहस्मैभ्यः कामानागायति ॥ १३ ॥ आगाताह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मम् ॥ १४ ॥

सात्त्विकेन्द्रियवृत्तयो देवास्तद्विपरीता असुराः उभये अपि कश्यपस्येव प्रजापतेः श्रौतक्रियाधिकारिणः पुरुषस्य सुताः संये-तिरे परस्पराभिभवरूपसंग्रामं चक्रुः तथाहि देवास्तत्तदिन्द्रियरूपं प्राणमुद्गीथत्वेनो-द्गातृत्वेन प्रणवत्वेन शुभकर्तृत्वेनेति याव-दुपासांचक्रिरे श्रितवन्तः इन्द्रियाणां शुभाः प्रवृत्तयोभूवन्नित्यर्थः ततो सुरैर्विद्धानामि-न्द्रियाणामशुभाः प्रवृत्तयो जाताः ततो मुख्यं प्राणमुद्गीथं विदुः तंतु वेद्धुमसुरानशक्ताः अतस्तस्यैकविधैवप्रवृत्तिरित्याद्युक्तम् ततः प्राणे अङ्गिरसबृहस्पत्ययास्य रूपगुणत्रयव-र्णनम् आख्यायिका पक्षे तु अङ्गिरः प्रभृ-तयः ऋषय उपासकाः । अथ दाल्भ्यसुतो बको मुनिर्नैमिशारण्ये मुनीनां यथोद्गाता बभूवैतद्गुणकप्राणोपासकस्तथान्योपि भ-वतीत्यर्थः ॥ इति द्वितीयःखण्डः ॥२॥

अधिदेवादित्यादिदृष्ट्योद्गीथोपासनं वक्तुमारभतेऽथेति—

अथाधिदैवतम् यएवासौ-
तपतितमुद्गीथमुपासीतोद्य-
न्वा एष प्रजाभ्य ऽउद्गायति
उद्य ं स्तमोभयमपहन्त्यप-
हन्ता ह वै भयस्य तमसो भ-
वति य एवं वेद ॥ १ ॥ स-
मान उ एवायं चासौ चोष्णो
यमुष्णोसौ स्वर इती ममा-
चक्षते स्वर इति प्रत्यास्वर
इत्यमुं तस्माद्वा एतमिमममुं
चोद्गीथमुपासीत ॥२॥ अथ
खलु व्यानमेवोद्गीथमुपासी-

त य द्वै प्राणिति सप्राणोय-
दपानिति सोऽपानः अथ यः
प्राणापानयोः सन्धिः स व्या-
नो यो व्यानः सा वाक् तस्मा-
दप्राणन्ननपानन्वाचमभिव्या
हरति ॥ ३ ॥ या वाक् स-
र्क् तस्मादप्राणन्नन पानन्नृ-
चमभिव्याहरति यर्क् तत्साम
तस्मादप्राणन्ननपानन् साम
गायति यत्साम स उद्गीथः
तस्मादप्राणन्ननपानन्नुद्गाय-
ति ॥ ४॥ अतो यान्यन्यानि
वीर्यवन्ति कर्माणि यथाग्नेर्म-

न्थनमाजेः स रणं दृढस्य ध-
नुष आयमनमप्राणन्ननपान ँ्
स्तानि करोत्येतस्य हेतोर्व्या-
नमेवोद्गीथमुपासीत ॥ ५ ॥
अथ खलूद्गीथाक्षराण्युपा-
सीतोद्गीथ इति प्राण एवो-
त्प्राणेन ह्युत्तिष्ठति वाग्गीर्वा-
चोह गिर इत्याचक्षतेऽन्नंथम-
न्नेहीद ँ् सर्व ँ् स्थितम् ॥६॥
द्यौरेवोदन्तरिक्षं गीः पृथिवी-
थमादित्य एवोद्वायुर्गीरग्निस्थं
साम वेद एवोद्यजुर्वेदोगीर्ऋग्-
वेदस्थं दुग्धेस्मै वाद्गोहं योवा-

चोदोहोन्नवानन्नादो भवति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति ॥७॥ अथ खल्वाशीः समृद्धिरूपसरणानीत्युपासीत येन साम्ना स्तोष्यन्स्यात्तत्सामोपधावेत् ॥ ॥८॥ यस्यामृचितामृचं यदार्षेयं तमृषिं यां देवतामभिष्टोष्यन्स्यात्तां देवतामुपधा वेत् ॥९॥ येन च्छन्दसास्तोष्यन्स्यात्तच्छन्द उपधावेद्येन स्तोमेनस्तोष्यमाणः स्यात्तं स्तोममुपधावेत् ॥ १० ॥ यां

दिशमभिष्टोष्यन्स्यात्तां दिश-
मुपधावेत् ॥११॥ आत्मानम
न्त उपसृत्यस्तु वीतकामं ध्या-
यन्नप्रमत्तो ऽभ्याशोह यदस्मै
स कामः समृध्येत यत्कामः
स्तुवीतेति यत्कामः स्तुवी-
तेति ॥ १२ ॥

अत्राद्यकण्डिकयादित्यदृष्ट्या द्वितीययाप्रा-
णादित्ययोः साम्यादुभयदृष्ट्या ततस्तिसृभि-
र्व्यानदृष्ट्या उद्गीथोपासनम् ततो द्वाभ्या-
मुद्गीथशब्दावयवानाम् उत् गीः थम् ए-
षामक्षराणां क्रमेण प्राणवागन्नदृष्ट्यादिभि-
रुपासनम्। ततः पञ्चभिः समृद्धिकाम उद्-
गाता येन साम्नास्तोतुमिच्छेत्तत्साम त-
त्साम सम्बन्धिऋग्देवछन्दः प्रभृतीन्यात्मा-

नञ्चोऽप्रमत्तो ध्यायन्स्तुवीतेत्युक्तम् ॥

इति तृतीयखण्डः ॥ ३ ॥

---

अमृताभयगुणयुक्तस्य स्वराख्योङ्कारस्योपासनमाहोमिति—

ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥ देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविश ँ स्तेच्छन्दोभिरच्छादयन्यदेभिरच्छादय ँ स्तच्छन्दसां छन्दस्त्वम् ॥ २ ॥ तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्य दृचि साम्नि यजुषि तेनु वित्वोर्ध्वाऋ-

चः साम्नो यजुषः स्वरमेवप्रा-
विशन् ॥ ३ ॥ यदा वा ऋच-
माप्नोत्योमित्येवाति स्वरत्ये-
व ९ सामैवं यजुरेष उस्वरो य-
देतदक्षरमेतदमृतमभयं तत्प्र-
विश्य देवा अमृता अभया अ-
भवन् ॥ ४ ॥ स य एतदेवं
विद्वानक्षरं प्रणौत्येतदेवाक्षर ९
स्वरममृतमभयं बिशति तत्प्र-
विश्य यदमृता देवास्तदमृतो
भवति ॥ ५ ॥

मत्स्यघात्यगाधजलगान्मत्स्यानिव मृत्यु
र्मृत्युभयात्त्रयीकर्मरतान् द्वितीयखण्डोक्त-
देवान्वधार्हान पश्यत्तदातज्ज्ञात्वा त्रयी-

कर्म विहायामृतमभयं स्वरमोङ्कारमुपास्यामराअभया वभूवुर्देवा इत्यर्थः ॥

इति चतुर्थखण्डः ॥ ४ ॥

---

अथामुख्यप्राणवागादीनां रश्मीनां भेदनाऽनेकत्वगुणयुतप्राणादित्यदृष्टिभ्यामुद्गीथोपासने
माहाथेति—

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वरन्नेति ॥ १ ॥ एतमु एवाहमभ्यगासिषं तस्मान्ममत्वमेकोसीतिह कौषीतकिः पुत्रमुवाच रश्मीᳪस्त्वं पर्यावर्त्तयाद्बहवो वै ते भविष्यन्तीत्यधि

दैवतम् ॥ २ ॥ अथाध्यात्मं य एषायं मुख्यः प्राणस्तमुद्गीथमुपासीतोमिति ह्येषस्वरन्नेति ॥३॥ एतमु एवाहमभ्यगासिषं तस्मान्ममत्वमेकोसीतिह कौषीतकिः पुत्रमुवाच प्राणाꣳस्त्वं भूमानमभिगायताद्बहवो वै मे भविष्यन्तीति ॥ ४ ॥ अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति होतृषदनाद्धैवापि दुरुद्गीतमनुसमाहरतीत्यनुमाहरतीति ॥ ५ ॥

उद्गीथ प्रणवावभिन्नौ आदित्यो मुख्यः प्राणश्चोमित्युच्चारयन् गच्छति यतो त उद्गीथः एवमुपासनाभ्यां त्वमेको ममाभूः सुतः त्वन्तु बहुपुत्रार्थं बहुत्वविशिष्टौ तौ ध्यायस्वेति चतसृभिरुक्त्वा प्रणवोद्गीथयोरभेदोक्तेः फलमाहाथेति अभिन्नौ यतो तो होतृषदनं होतुः स्थानं तस्मात्तत्र होत्राकृतात्सम्यक् प्रणवोच्चारणात्स्वकर्मोद्गानं प्रमादतः स्वरादिहीनं समीकरोत्युद्गातेत्यर्थः भेदे प्रणवसम्यक्त्वेनोद्गीथ सम्यकत्वं न स्यादिति भावः ॥

इति पञ्चमखण्डः ॥ ५ ॥

---

अथ सकलैश्वर्यफलकमुद्गीथस्योपासनान्तरं वक्ष्यन्नादौ तदङ्गभूतमुपासनं च चतसृभिः कण्डिकाभिराहेयमित्यादिभिः—

**इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढ ँ सामतस्मा-**

द्दृच्यध्यूढ ँ साम गीयत इय
मेव साग्निरमस्तत्साम ॥१॥
अन्तरिक्षमेवर्ग्वायुः साम तदे
तदेतस्यामृच्यध्यूढ ँ सामत-
स्मादृच्यध्यूढ ँ साम गीयते
ऽन्तरिक्षमेव सा वायुरमस्त-
त्साम ॥ २ ॥ द्यौरेवर्गादित्यः
साम तदेतदे तस्यामृच्यध्यू-
ढ ँ साम तस्मादृच्यध्यूढ ँ
साम गीयते द्यौरेव सादित्यो-
मस्तत्साम ॥ ३ ॥ नक्षत्राण्ये
वर्क् चन्द्रमाः साम तदेतदे
तस्यामृच्यध्यूढ ँ साम तस्मा

दृहृच्यध्यूढᳪँ सामगीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत्साम ॥ ४ ॥ अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेदेततस्यामृच्यध्यूढᳪँ साम तस्मादृच्यध्यूढᳪँसामगीयते ५ अथ य देवैतदादित्यस्य शुक्लं भाः सैव साथ यन्नीलं परः कृष्णं तदमस्तत्सामाथ य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः॥ ६॥

तस्य यथा कप्यासपुण्डरीक-
मेवमक्षिणी तस्योदिति नाम
स एष सर्वेभ्यः पाप्मभ्य उदि-
तउदेतिह वै सर्वेभ्यः पाप्म-
भ्यो य एवं वेद ॥७॥ तस्यर्क्
च साम च गेष्णौ तस्मादुद्-
गीथस्तस्मात्वेवोद्गीतैतस्य हि
गाता स एष येचामुष्मात्परा-
ञ्चोलोकास्तेषां चेष्टे देव का-
मानाञ्चेत्यधिदैवतम् ॥ ८ ॥

पृथिव्येव ऋगग्निरेव साम । ऋचि पृ-
थिवी दृष्टिः साम्न्यग्निदृष्टिः कार्य्येति भावः।
अथ यथाग्निः पृथिव्यां तथा साम ऋच्यारू-
ढं यतस्तस्मादृगारूढमेव साम गायन्ति सा-

मगाः । ऋक्सामनोः संश्लिष्टत्वञ्चैकश-
ब्दाभिधेयतयापि गम्यते । तथाहि । साम
शब्दे सा शब्दः ऋचम् अमशब्दस्त्वग्निं व-
क्तीति। एवञ्च ऋक् सामनी इव पृथ्व्यग्नी अ-
पि न भिन्ने इत्यपि दृष्टिः कार्य्येति भावः ।
एवमग्रिमकण्डिका त्रयार्थोऽपि । अथ रवौ
चिरंदृष्टिसमाधानेऽनु भूयते कृष्णता । आ-
दित्यमण्डलमध्ये हिरण्यवत्प्रकाशमानसर्व
विग्रहो यः पुरुषः परो देवस्तस्य कपेरास
उपवेशनकरणं गुदप्रान्तदेशस्तद्वद्यत्पुण्डरी-
कं तद्वद्रक्ते नेत्रे । सर्वपापेभ्यः पृथग्भूतत्वात्
उत् इति नाम। नामार्थवन्तं तं ध्यायेदिति
भावः। तथा पृथ्व्यग्न्यादिरूपे ऋक्सामनीगे-
ष्णौ गुल्फौ। यत उन्नामा ऋक्सामगेष्णा-
श्च तस्मादुद्गीथसंज्ञा । यत उन्नाम स्वं
गायत्यत उद्गातृसंज्ञा च। आदित्यादूर्द्ध्व-
लोकादीनामीशितृत्वं चेत्यर्थः ॥

इति षष्ठखण्डः ॥ ६ ॥

ऋच्यध्यात्मवाग्दृष्टिरित्याद्युपासनमाहाथेति—

अथाध्यात्मं वागेवर्क् प्राणः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते वागेव सा प्राणोमस्तत्साम ॥ १ ॥ चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते चक्षुरेव सात्मामस्तत्साम ॥ २ ॥ श्रोत्रमेवर्ङ्मनः साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते श्रोत्रमेव सा मनोमस्त-

त्साम ॥ ३ ॥ अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथयन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते अथ यदेवै तदक्ष्णः शुक्लंभाः सैवसाथयन्नीलं परः कृष्णं तदमस्तत्साम ४॥ अथ य एषोन्तरक्षिणिपुरुषोदृश्यते सैवर्क् तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्यरूपं यावमुष्यगेष्णौ तौ गेष्णौ यन्नामतन्नाम ५॥ स एष ये चैतस्मादर्वाञ्चो

लोकास्तेषां चेष्टे मनुष्यकामा
नाप्नोति तद्य इमे वीणायां गा-
यन्त्येतं ते गायन्ति तस्मात्ते
धनसनयः ॥ ६ ॥ अथ य एत-
देवं विद्वान्साम गायत्युभौ स
गायति सोऽमुनैव स एष ये चा-
मुष्मात्पराञ्चो लोकास्ता ँ श्चा-
प्नोति देवकामा ँ श्च ॥ ७ ॥
अथानेनैव ये चैतस्मादर्वाञ्चो
लोकास्ता ँ श्चाप्नोति मनुष्य-
कामा ँ श्च तस्मादु हैवंविदु-
द्गाता ब्रूयात् ॥ ८ ॥ कन्ते काम-
मागायानीत्येष ह्येव कामागा-

नस्येष्टे य एवं विद्वान्साम गायति साम गायति ॥ ६ ॥

अत्रापि चतसृभिः कण्डिकाभिरङ्गोपासनं । ततः प्रधानमुपासनम् । आत्मा चक्षुर्गतश्छायात्मा । अथाक्ष्णिपुरुषश्छायातिरिक्तउपासनागम्य आदित्येइव परमात्मा ऋगाद्यभिन्नः तस्यरूपादिकमादित्यपुरुषरूपादिकमेव अयञ्च मनुष्यलोकादीनामीशिता । ये चाक्षुषमीश्वरं गायन्ति ते धनवन्तो भवन्ति । अथ य उक्तोद्गीथवित्साम गायति स उभावादित्यचाक्षुषपुरुषौ गायत्यतः पुरुषद्वयरूपोभूत्वा सर्वान्कामानवाप्नोति यजमानस्य च सम्पादयतीत्यर्थः ॥ ९ ॥

॥ इति सप्तमखण्डः ॥

अथ परोवरीयस्त्वगुणयुक्तपरमात्मदृष्ट्योद्गीथोपासनमितिहासेनखण्डाभ्यामाह त्रय इत्यादिना ॥

त्रयोहोद्गीथे कुशलाबभूवुः

शिलकः शालावत्यश्चैकिता-
यनो दाल्भ्यः प्रवाहणो जैवलि-
रिति तेहोचुरुद्गीथे वै कुशलाः
स्मोहन्तोद्गीथे कथां वदाम इ-
ति ॥ १ ॥ तथेति हसमुपविवि-
शुः सह प्रवाहणो जैवलिरुवा-
च भगवन्तावग्रे वदतां ब्राह्म-
णयोर्वदतोर्वाचꣳ श्रोष्यामीति
॥२॥ सह शिलकः शालावत्य-
श्चैकितायनं दाल्भ्यमुवाच ह-
न्तत्वापृच्छानीति पृच्छेतिहो-
वाच ॥ ३ ॥ का साम्नोगतिरिति
स्वर इति होवाच स्वरस्य का ग-

तिरिति प्राण इतिहोवाच प्राण-
स्य कागतिरित्यन्नमिति होवा-
चान्नस्य का गतिरित्याप इति
होवाच ॥ ४ ॥ अपां का गति-
रित्यसौ लोक इति होवाचा-
मुष्य लोकस्य का गतिरिति
न स्वर्गं लोकमतिनयेदिति
होवाच स्वर्गवयं लोक ँ सामा
भिसंस्थापयामः स्वर्गस ँ स्ता-
व ँ हि सामेति ॥५॥ त ँ ह शि-
लकः शालावत्यश्चैकितायनं
दाल्भ्यमुवाचाप्रतिष्ठितं वै किल
ते दाल्भ्यसामयस्त्वेतर्हि ब्रू-

यान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति ॥ ६ ॥ हन्ताहं मे तद्भगवतो वेदानीति विद्धीति होवाचामुष्यलोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमति नयेदिति होवाच प्रतिष्ठां वयं लोकꣳ सामाभिसꣳस्थापयामः प्रतिष्ठासꣳस्तावꣳ हि सामेति॥ ७ ॥ तꣳ ह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शालावत्य साम यस्त्वे तर्हि ब्रूया-

न्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहं मे तद्भगवतो वेदानीति विद्धीति होवाच ॥ ८ ॥

इत्यष्टमखण्डः ॥ ८ ॥

अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्वाणि हवा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाशोह्येवैभ्यो ज्यायानाकाशः परायणम् ॥ १ ॥ स एष परो वरीयानुद्गीथः स एषोनन्तः परोवरीयो हास्य

भवति परोवरीयसोह लोका-
ञ्जयति य एतदेव विद्वान्परो
वरीया ँ समुद्गीथमुपास्ते॥२॥
त ँ हैतमतिधन्वा शौनकउदर-
शाण्डिल्यायोक्त्वोवाच यावत्त
एनं प्रजायामुद्गीथं वेदिष्यन्ते
परोवरीयो हैभ्यस्तावदस्मिंल्लो-
के जीवनं भविष्यति॥३॥ तथा-
मुष्मिंल्लोके लोक इति स य ए-
तदेवं विद्वानुपास्ते परोवरीय
एवहास्यास्मिंल्लोके जीवनं भ-
वति तथामुष्मिंल्लोके लोक इ-

ति लोके लोक इति ॥ ४ ॥

इति नवम खण्डः ॥ ९ ॥

दाल्भ्यशिलकौ विप्रौ प्रवाहणो राजाचैते-षूद्गीथोपासनकुशलेषु संवादार्थं क्वचित्सङ्ग-तेषूद्गीथस्य कआश्रयइति पप्रच्छशिलकोदा-ल्भ्यम् तत उद्गीथस्य स्वरस्तस्य प्राणस्तस्या-न्नं तस्यापस्तस्य स्वर्गस्तस्यनान्यागतिरि-ति स्वर्गएवोद्गीथः प्रतिष्ठित इति दाल्भ्योक्ति-माक्षिप्य स्वर्गस्याप्ययं भूलोकोयागादिनाग-तिरिति शिलकोक्तिमपि विनाशिभूलोकप्रति-ष्ठस्तर्हि तवोद्गीथ इत्याक्षिप्यास्यापि लोक स्याकाशः परमात्मागतिरित्युवाच प्रवाहणः एवञ्च परम्परया परमात्म प्रतिष्ठत्वेन पर-मात्मरूपत्वात्सर्वेभ्यो वरीयोभ्यः परोवरीया-ननन्त उद्गीथः एनञ्चोद्गीथं शुनक सुतेति धन्वाशिष्योदरशाण्डिल्याय सफलमुक्तवा-नित्यर्थः ॥ इत्यष्टमनवमखण्डौ ॥९॥

उद्गीथोपासनप्रसङ्गेनप्रस्तावप्रतिहारविषयको-
पासनं वक्तुमाख्यायिकामाह दशमखण्डे
मटचीति—

मटचीहतेषु कुरुष्वाटिकया सहजाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणकउवास ॥ १ ॥ सहेभ्यं कुल्माषान्खादन्तं विभिक्षेत ँ होवाच नेतोन्ये विद्यन्ते यच्च ये मइमउपनिहिता इति ॥ २ ॥ एतेषां मेदेहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीत ँ स्यादिति होवाच ॥ ३ ॥ नस्विदेतेप्युच्छिष्टा इति नवा

अजीविषयमिमान खादन्निति होवाच कामोम उदकपानमिति ॥ ४ ॥ सह खादित्वाति शेषाञ्जायाया आजहार साग्र एव सुभिक्षा बभूव तान्प्रतिगृह्यानिदधौ ॥ ५ ॥ सह प्रातः संजिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि धनमात्रा ९ राजासौ यक्ष्यते समा सर्वैरार्त्विज्यैर्वृणीतेति ॥ ६ ॥ तं जायोवाच हन्तयत इम एव कुल्माषा इति तान्खादित्वामुं यज्ञं विततमेयाय ॥ ७ ॥ तत्रोद्गा-

तृनास्तावेस्तोष्यमाणानुपोप-
विवेश सह प्रस्तोतारमुवाच ८
प्रस्तोतर्यादेवता प्रस्तावमन्वा
यत्ता तां चेदविद्वान्प्रस्तोष्य-
सि मूर्धा ते विपतिष्यतीति ॥
९ ॥ एवमेवोद्गातारमुवाचो-
द्गातर्या देवतोद्गीथ मन्वाय-
त्ता तां चेदविद्वानुद्गास्यसि
मूर्धा ते विपतिष्यतीति ॥१०॥
एवमेव प्रतिहर्त्तारमुवाच प्रति-
हर्त्तर्या देवता प्रतिहारमन्वा-
यत्ता तां चेदविद्वान्प्रतिहरि-
ष्यसि मूर्धा ते विपतिष्यती-

ति तेह समारतास्तूष्णी मासां चक्रिरे ॥ ११ ॥

पाषाणवृष्टिहतान्निरन्नान्कुरून्स्वदेशानपहायोषस्तिश्चक्रस्य सुतोन्नार्थमजातयौवनयाभार्यया सह भ्रमन्हस्तिपकानां ग्रामे मरणापन्नः कस्यचिद् गृहे उवास तत्र कुत्सितान्माषान्खादतो हस्तिपकाच्च खादयाचित्वाथदीयमानं जलन्तुनपपौ उत्क्रमत्प्राणपालनायोच्छिष्टभक्षणस्या दोषेपि स्वतः सुलभमम्बपहायोच्छिष्टाम्भः पानं दोष एवेति यावताप्राणधारणन्तावद्भुक्त्वाधिकं पत्न्यै दत्तवान् तयाचरक्षितां स्तानेव पर्युषितान्माषान्पुनः प्रातरशित्वा कस्यचिद्राज्ञो यज्ञमियाय धनाय तत्र प्रथममुद्गातृसमीपं गत्वा स्तुतिदेशे स्तोतृसमीपे उपविष्टोहेस्तोत्रुद्गातृप्रतिहर्त्तारः स्तुत्युद्गीथ प्रतिहाराणां देवानज्ञात्वाचेत् स्तुत्यादिकरिष्य-

थस्तर्हि वो मूर्धा पतिष्यतीत्युक्तवान् तच्च तूष्णीमासन् ॥ इति दशमखण्डः ॥

देवताज्ञानमाहैकादशेऽथेति—

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच ॥ १ ॥ सहोवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषं भगवतो वा अहमवित्त्यान्या न वृषि ॥२॥ भगवाँस्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या

इति तथेति ह यजमान उवाच ३ ॥ अथहैनं प्रस्तोतोपससाद प्रस्तोतर्यादेवता प्रस्तावमन्वा यत्ता तां चेदविद्वान्प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमासा देवतेति ॥ ४ ॥ प्राण इति होवाच सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वा यत्ता तां चेदविद्वान्प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥५॥

अथ हैनमुद्गातोपससादोद्गा-
तर्या देवतोद्गीथमन्वायत्ता तां
चेदविद्वानुद्गास्यसि मूर्धा ते
व्यपतिष्यतीति मा भगवान-
वोचत्कतमासादेवतेति ॥ ६ ॥
आदित्य इति होवाच सर्वा-
णि ह वा इमानि भूतान्यादि-
त्यमुच्चैः सन्तं गायन्ति सैषा
देवतोद्गीथमन्वायत्ता तां चे-
दविद्वानुदगास्यो मूर्धा ते व्य-
पतिष्यत्तथोक्तस्य मयेति॥७॥
अथ हैनं प्रतिहर्त्तोपससाद प्र-
तिहर्तर्या देवता प्रतिहारमन्वा

यत्ता ताञ्चेदविद्वान् प्रतिहरि-ष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥ ८ ॥ अन्नमिति होवाच सर्वाणि हवा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान्प्रत्यहरिष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति ॥ ९ ॥

अथोषस्तिरयमिति ज्ञात्वा भगवन्भवदलाभे मयैते वृता यज्ञेधुनाभवानेवार्त्विज्यं करोत्वित्युक्तो यजमानेनोषास्तिरोमित्युक्त्वा

मयानुज्ञाता एत एव कुर्वन्तु परन्तु यावदे-भ्यस्तावन्मह्यं च देयं धनमित्युवाच ततः प्रस्तावस्य प्राण उद्गीथस्यादित्यः प्रतिहार-स्यान्नं देवतेत्युषस्तितो ज्ञात्वा स्वस्व कर्म च-क्रुर्मुनयः प्रस्तावादिषु प्राणादिदृष्टिरित्यु-पासनत्रयमितिभावः ॥

इत्येकादशखण्डः ॥

उषस्तेरिवान्नालाभेन दैन्यं माभूदिति प्रका-रान्तरेणोद्गीथोपासनमन्नलाभायाख्यायिक-याहाथात इति—

अथातः शौव उद्गीथस्तद्ध ब-कोदाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज ॥ १ ॥ तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये-श्वान उपसमेत्योचुरन्नं नो भगवानागायत्वशनायाम वा

इति ॥ २ ॥ तान्होवाचेहैव मा प्रातरुपसमीयातेति तद्धव को दाल्भ्योग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार॥३॥ तेह यथैवेदं वहिष्पवमानेन स्तोष्यमाणाः सꣳरब्धाः सर्पन्तीत्येव मा ससृपुस्तेह समुपविश्य हिं चक्रुः ॥४॥ ओ३मदा३ मों३ पिवा३ मों३ देवो वरुणः प्रजापतिः सविता२ऽन्नमिहा२ हरदन्नपते३ न्नमिहा२ हरा२ हरो३मिति ॥५॥

दल्भान्मित्रायां जातो वको मुनिर्ग्लावापरनामा वेदपारायणाय ग्रामाद्बहिर्ह्वरहो

जगाम कदाचित्स्वाध्यायेन तुष्टाऽनुग्रहायो-
द्गीथ देवता श्वेतकुक्कुर रूपाविर्बभूव तमन्ये
श्वानोवयं बुभुक्षिताः स्मोतआगानेनान्नं स-
म्पादयतु भवानित्यूचुरागत्य ततस्तानत्रैव
प्रातरागच्छत मामित्युवाचश्वा वकोपिता-
वत्तत्रैवस्थितः कौतुकदर्शनाय गृहं न गतः
ततो ध्वर्य्वादियजमानान्ता यथान्योन्यं सं-
लग्नाः परिभ्राम्यन्ति तथाते प्रातरागत्य
श्वानो ऽन्योन्यस्यपुच्छं मुखेन धृत्वा परि
भ्रमणं कृत्वोपविश्य पञ्चमकण्डिकारूपं हिं-
कारमुच्चैर्जगुः वयमन्नमत्स्याम जलं पास्याम
आदित्योन्नमिहानयतु हे आदित्यान्नमिहा-
हरेति हिंकारार्थः अयमुद्गीथः श्वभिर्दृष्टः
तत्रान्नप्रदत्वगुणकादित्यदृष्टिः कार्य्येति भा-
वः ॥ इति द्वादशखण्डः ॥

सामावयवोद्गीथोपास्तिप्रसङ्गात्सामावय-
वान्तरस्तोमोपासनमाहायमिति—

# अयं वा वलोको हा उकारो

वायुर्हाइकारश्चन्द्रमा अथ कारः आत्मेहकारोग्निरीकारः ॥१॥ आदित्य ऊकारोनि ह व एकारो विश्वेदेवाः औ होयिकारः प्रजापतिर्हिंकारः प्राणः स्वरोन्नं यावाग्विराट् ॥ २ ॥ अनिरुक्तस्त्रयोदशः स्तोमः संचरो हुंकारः ॥ ३ ॥ दुग्धेस्मै वाग्दोहोन्नवानन्नादो भवति य एतामेव ए साम्नामुपनिषदं वेदोपनिषदं वेद ॥ ४ ॥

गानसिद्धये यान्यनर्थकान्यक्षराण्युपादीयन्ते मध्ये मध्ये तानि स्तोमसंज्ञकानि तथाच । हा । उ । हाइ । अथ । इह । ई । ऊ ।

ए । औहोइ । हिं । स्वरः । या । वाक् । हुम् १३ एषु स्तोमेषु भूलोकादिदृष्टिः कार्येत्यर्थः ॥ इति छान्दोग्योपनिषत्प्रसादे प्रथमोऽध्यायः ।

---

अवयवोपासनमुक्त्वा सम्पूर्णसामोपासनमाह समस्तस्येति—

समस्तस्य खलु साम्न उपासन९ साधु यत्खलु साधु तत्सामेत्याचक्षते यदसाधु तदसामेति ॥ १ ॥ तदुताप्याहुः साम्नैनमुपागादिति साधुनैनमुपागादित्येतदाहुरसाम्नैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥ २ ॥ अथोताप्याहुः सामनोवतेति यत्साधु भवति

साधुवतेत्येव तदाहुरसामनो वतेति यदसाधु भवत्यसाधुवतेत्येव तदाहुः ॥ ३ ॥ स य एतदेवं विद्वान्साधु सामेत्युपास्तेऽभ्याशो ह यदेन ँ साधवो धर्मा आ च गच्छेयुरुप च नमेयुः ॥ ४ ॥

साधु साम शब्दौ समीचीनपर्यायौ प्रसिद्धौ यतोऽतः समस्ते साम्नि साधु दृष्टिः कार्या यश्च साधुगुणयुक्तं सामोपास्ते तं श्रुतिस्मृत्यविरुद्धा धर्मा आगच्छन्तीत्यर्थः ॥

इति प्रथमखण्डः ॥ १ ॥

समस्तसामोपासनभेदानाह लोकेष्विति—

लोकेषु पञ्चविध ँ सामोपासीत पृथिवी हिंकारः अग्निः

प्रस्तावोन्तारिक्षमुद्गीथ आदि-
त्यः प्रतिहारो द्यौर्निधनमि-
त्यूर्ध्वेषु ॥१॥ अथावृत्तेषु द्यौ-
र्हिंकार आदित्यः प्रस्तावोन्त-
रिक्षमुद्गीथोग्निः प्रतिहारः पृ-
थिवी निधनम् ॥ २ ॥ कल्प-
न्ते हास्मै लोका ऊर्द्ध्वाश्चा-
वृत्ताश्च य एतदेवं विद्वाँल्लोके-
षु पञ्चविधं सामोपास्ते ॥३॥

पृथिव्याद्यूर्ध्वं लोकानान्तथाद्युप्रभृत्यधो-
लोकानां हिङ्कारादि पञ्चविध सामसु दृष्टिः
कार्य्या तत्तल्लोकाप्तये अग्निलोकः पृथिव्या
उपर्य्यर्चिरादिमार्गे प्रसिद्धः निधीयते त्रेति
गतागतानां स्थानं निधनम् ॥

इति द्वितीयखण्डः ॥

वृष्टौ पञ्चविध ँ सामोपासीत पुरोवातो हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ॥ १ ॥ उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविध ँ सामोपास्ते ॥ २ ॥

पूर्ववायुर्मेघोद्गमो वृष्टिर्विद्युद्गर्जभवनं वृष्ट्युपसंहारः एषु वृष्ट्यवयवेषु हिङ्कारादि दृष्टिं यः करोति स यथेष्टवृष्टिं लभते कारयति च वृष्टिमवर्षणे ॥

इति तृतीयखण्डः ॥

सर्वास्वप्सु पञ्चविधं सामो-

पासीत मेघोयत्संप्लवते स हिं-
कारो यद्वर्षति स प्रस्तावो याः
प्राच्यः स्पन्दन्ते स उद्गीथो
याः प्रतीच्यः स प्रतिहारः स-
मुद्रो निधनम् ॥ १ ॥ न हा-
प्सु प्रैत्यप्सुमान्भवति य एत-
देवं विद्वान्सर्वास्वप्सु पञ्चवि-
धꣳ सामोपास्ते ॥ २ ॥

उद्गतानां मेघानां घनीभावस्संप्लवः १ वर्षणम् २ प्राच्योगङ्गाद्याः ३ प्रतीच्योनर्मदाद्याः ४ समुद्रः एतद्दृष्टौ हिंकारादिषु कुर्वन् नेच्छन् न जले म्रियते ॥

इति चतुर्थखण्डः ॥

ऋतुषु पंचविधꣳ सामोपासी-

त वसन्तोहिंकारो ग्रीष्मः प्र-
स्तावो वर्षा उद्गीथः शरत्प्र-
तिहारो हेमन्तो निधनम् ॥१॥
कल्पन्ते हास्मा ऋतव ऋतु-
मान्भवति य एतदेवं विद्-
वानृतुषु पञ्चविध ँ सामो-
पास्ते ॥ २ ॥

हिङ्कारादिषु वसन्तादि दृष्ट्या सर्वर्तुभ-
वभोग्यभाग्भवति ॥

इति पञ्चमखण्डः ॥

पशुषु पञ्चविध ँ सामोपा-
सीता जा हिंकारोवयः प्रस्तावो
गाव उद्गीथो श्वाः प्रतिहारः

पुरुषो निधनम् ॥ १ ॥ भवन्ति हास्य पशवः पशुमान्भवति य एतदेवं विद्वान्पशुषु पञ्चविध ँ सामोपास्ते ॥ २ ॥

स्पष्टम् ॥ ॥ इति षष्ठखण्डः ॥

प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो हिंकारो वाक् प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनं परोवरीया ँ सि वा एतानि ॥ १ ॥ परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान्प्राणेषु पञ्चविधं

परोवरीयः सामोपास्ते इति तु पंचविधस्य ॥ २ ॥

परस्य परस्य श्रेष्ठत्वं परोवरीयस्त्वम् । प्राणो घ्राणः तथाच हिंकारादिषु परोवरीयस्त्वगुणकघ्राणादि दृष्ट्या जीवनं श्रेष्ठं लोकाश्च श्रेष्ठा भवन्ति ॥

इति सप्तमखण्डः ॥

अथ सप्तविधस्य वाचि सप्तविधꣳ सामोपासीत यत्किञ्च वाचोहुमिति स हिंकारो यत्प्रेति स प्रस्तावो यदेति स आदिः ॥ १ ॥ यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति त-

न्निधनम् दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान्वाचि सप्तविधं सामोपास्ते ॥ ३ ॥

अथ सप्तविधस्य समस्तस्य साम्न उपासनमुच्यते हुम् १ प्र २ आ ३ उत् ४ प्रति ५ उप ६ नि ७ सप्तैतद्वागवयवदृष्ट्या च हिंकारादिषूपासकस्यान्नमन्नादत्वं नाम दीप्ताग्नित्वञ्च भवति ॥

इत्यष्टमखण्डः ॥

समस्तसाम्न्यादित्यदृष्टिविधानायाहाथेति—

अथ खल्वमुमादित्यꣳसप्तविधꣳसामोपासीतसर्वदासमस्तेन साममाम्प्रतिमां प्रतीति सर्वेण समस्तेन साम ॥ १ ॥

तस्मान्निमानिसर्वाणिभूतान्य-
न्वायत्तानीतिविद्यात्तस्य य-
त्पुरोदयात्सहिंकारस्तदस्य प-
शवोन्वायत्तास्तस्मात्ते हिं कु-
र्वन्ति हिंकारभाजिनोह्येतस्य
साम्नः॥२॥अथ यत्प्रथमोदिते
स प्रस्तावस्तदस्य मनुष्या अ-
न्वायत्तास्तस्मात्ते प्रस्तुतिका-
माः प्रश ँ सा कामाः प्रस्ताव-
भाजिनोह्येतस्य साम्नः ॥ ३ ॥
अथ यत्सङ्गववेलाया ँ स आ-
दिस्तदस्य वया ँ स्यन्वायत्तानि
तस्मात्तान्यन्तरिक्षे ऽनारम्ब-

णान्यादायात्मानं परिपतन्-
त्यादिभाजीनि ह्येतस्य सा-
म्नः ॥ ४ ॥ अथ यत्सम्प्रति म-
ध्यं दिने स उद्गीथस्तदस्य दे-
वा अन्वायत्तास्तस्मात्ते स-
त्तमाः प्राजापत्यानामुद्गीथ-
भाजिनो ह्येतस्य साम्नः ॥ ५ ॥
अथ यदूर्ध्वं मध्यं दिनात्प्राग-
पराह्णात्स प्रतिहारस्तदस्य
गर्भा अन्वायत्तास्तस्मात्ते प्र-
तिहृतानाव पद्यन्ते प्रतिहार
भाजिनो ह्येतस्य साम्नः ॥ ६ ॥
अथ यदूर्ध्वमपराह्णात्प्रागस्-

तमयात्स उपद्रवस्तदस्याऽऽरण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा कक्ष ँ इव श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः ॥ ७ ॥ अथ यत्प्रथमास्तामिते तन्निधनं तदस्य पितरोऽन्वायत्ता स्तस्मात्तान्निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्य ँ सप्तविध ँ सामोपास्ते ॥ ८ ॥

सदा सर्वं वा प्रत्यादित्यः सम इति साम आदित्ये सर्वभूतान्यनुगतानीति जानीयात् तथाहि कालात्मादित्यस्य यदुदया-

त्पूर्वं रूपं तत्र गावो हिंकारशब्दं कुर्वन्ति ॥ १ ॥ यदुदिते तत्र मनुष्याः स्तुवन्ति ॥२॥ उदयादूर्ध्वं यत्तत्रान्तरिक्षं यान्ति पक्षिणः ॥ ३ ॥ ततो मध्यान्हपर्यन्तं यत्तत्केचन देवा उत्कृष्टा भजन्ते ॥ ४॥ मध्यान्हादूर्ध्वं यत्तद्गर्भा भजन्ते ऽतः प्रतिरुद्धानाधः पतन्ति ॥ ५ ॥ अपराह्णतोस्तात्पूर्वं यत्तदरण्यपशवो तोरण्यं गुहाम्बोपद्रवन्ति ॥६॥ यदस्तं गते तत्पितरस्तेन परोक्ष तयैव पितॄन्निदधाति ॥ ॥ ७॥ एतदादित्या वयवानां दृष्टिर्हिंकारादिषु कार्या ॥ ८ ॥

इति नवमखण्डः ॥

स्वक्रिययाहोभिस्सर्वेषामायुषोहरणादादित्यो मृत्युस्तदति क्रमणोपायं सामोपासनं सामावयवेष्वाहाथेति ।

## अथ खल्वात्मसम्मितमति मृत्यु सप्तविध ँ सामोपासीत

हिंकार इति त्र्यक्षरं प्रस्ताव इ-
ति त्र्यक्षरं तत्समम् ॥१॥ आ-
दिरिति द्यक्षरं प्रतिहार इति
चतुरक्षरं तत इहैकं तत्समम् ॥
२॥ उद्गीथ इति त्र्यक्षरमुपद्र-
व इति चतुरक्षरं त्रिभिस्त्रिभिः
समं भवत्यक्षरमतिशिष्यते
अक्षरं तत्समम् ॥ ३ ॥ निध-
नमिति त्र्यक्षरं तत्सममेव भ-
वति तानि हवा एतानि द्वा-
वि१ँ शतिरक्षराणि ॥ ४॥ ए-
कवि१ँ शत्यादित्यमाप्नोत्येक
वि१ँ शो वा इतो ऽसावादित्यो

द्वावि ँ शेन परमादित्याज्जयति तन्नाकं तद्विशोकम् ॥५॥ आप्नोतिहादित्यस्य जयं परोहास्यादित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसंमितमतिमृत्यु सप्तविध ँ सामोपास्ते ॥ ६ ॥

हिंकारादि सप्तनाम सु क्वचित्त्रीणि क्वचिद्द्वक्वचिच्चत्वार्यक्षराणि मिलित्वा द्वाविंशतिः तत्र सप्तसुत्रीणि त्रीणि दत्वातिरिच्यते ऽक्षरमेकम् सप्तानाञ्चत्र्यक्षरत्वेन समत्वात्सामत्वम् तथाचानन्तरोक्त सप्तादित्यावयवत्वेन दृष्टेषु सामावयवेषु सामदृष्ट्या द्वादशमासाः पञ्चर्तवः त्रयो लोकाः आदित्य इचेत्येकविंशमादित्यमेकविंशत्यक्षरैः प्राप्य

द्वाविंशेनमृत्योः परं याति यत्सुखमशोक-
न्तत् ॥ इतिदशमखण्डः ॥

सनामसामोपासनमाह मन इति—

मनो हिंकारो वाक् प्रस्ता-
वश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः
प्राणोनिधनमेतद्गायत्रं प्रा-
णेषु प्रोतम् ॥ १ ॥ स य एव-
मेतद्गायत्रं प्राणेषु प्रोतं वेद
प्राणी भवति सर्वमायुरेति ज्यो-
ग्जीवति महान्प्रजया पशु-
भिर्भवति महान्कीर्त्या महा-
मनाः स्यात्तद्व्रतम् ॥ २ ॥

मन आदीन्द्रियरूपप्राणदृष्ट्यागायत्र-
संज्ञकं हिंकारादि सामोपासीत महामनस्त्व-

मक्षुद्रचित्तत्वं गायत्रोपासकस्य व्रतं स्वभावः स्यात् ॥

इत्यैकादशखण्डः ॥

अभिमन्थति स हिंकारो धूमो जायते स प्रस्तावोज्वलति स उद्गीथोङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनꣳ सꣳशाम्यति तन्निधनमेतद्रथन्तरमग्नौ प्रोतम्॥१॥ स य एवमेतद्रथंतरमग्नौ प्रोतं वेदब्रह्म वर्चस्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न प्रत्यङ्ङग्नि-

माचामेन्न निष्ठीवेत्तद्व्रतम् ॥ २ ॥

अरणिमन्थनाग्न्यादि दृष्ट्वा रथन्तरसंज्ञक हिंकारादि सामोपासकोऽग्नेरभिमुखो न खादेन्निष्ठीवेद्वेतितम् ॥

इति द्वादशखण्डः ॥

उपमन्त्रयते स हिंकारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रति स्त्रीं सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम् ॥ १ ॥ स य एवमेतद्वामदेव्यं मिथुनेप्रोतं वेद मिथुनी भवति मिथुनान्मिथुनात्प्रजा-

यते सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या न काञ्चन परिहरेत्तद्व्रतम् ॥ २ ॥

वार्तया संकेतकरणं धनादिना तोषणं संकेते मिलनं मैथुनायाभिमुखीकरणं मैथुननिर्वृत्तिरिति पञ्चविधमैथुनदृष्ट्या वामदेव्यसंज्ञक हिङ्कारादि सामोपासको न कामपि स्त्रियमागतां मैथुनाय त्यजेत् ॥

॥ इति त्रयोदशखण्डः ॥

उद्यन्हिंकार उदितः प्रस्तावो मध्यं दिन उद्गीथो पराह्णः प्रतिहारोस्तं यन्निधनमेतद्बृहदादित्ये प्रोतम् ॥१॥

स य एवमेतद्बृहदादित्ये प्रो-

तं वेद तेजस्व्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या तपन्तं न निन्देत्तद्व्रतम् ॥ २ ॥

अत्र कालभेदेन पञ्चविधादित्य दृष्ट्या वृहत्संज्ञकपञ्चविधसामोपासनम् ॥

॥ चतुर्दशखण्डः ॥

अभ्राणि संप्लवन्ते स हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वैरूपं पर्जन्ये प्रोतम् ॥ १ ॥ स य एवमेत-

द्वैरूपं पर्जन्ये प्रोतं वेदाविरूपा ँ श्च सुरूपा ँ पशूनवरुन्धे सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या वर्षन्तं न निन्देत्तद्व्रतम् ॥ २ ॥

वैरूपं नाम सामान्त्रान्यत्तु तृतीयचतुर्थखण्डयोर्गतार्थम् ॥

॥ इति पञ्चदशखण्डः ॥

वसन्तो हिंकारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निधनमेतद्वैराजमृतुषु प्रोतम् ॥ १ ॥ स य एवमेतद्वैराजमृतुषु प्रोतं वेद

विराजति प्रजया पशुभिर्ब्रह्म
वर्चसेन सर्वमायुरेति ज्योग्जी-
वति महान्प्रजया पशुभिर्भ-
वति महान्कीर्त्यर्तून्न निन्देत्त-
द्व्रतम् ॥ २ ॥

सामात्र वैराजसंज्ञकम् उक्तार्थमन्यदु-
क्तानार्थञ्च ॥

इति षोडशखण्डः ॥

पृथिवी हिंकारोन्तरिक्षं प्र-
स्तावो द्यौरुद्गीथो दिशः प्रति-
हारः समुद्रो निधनमेताः श-
क्वर्यो लोकेषु प्रोताः ॥ १ ॥ स
य एवमेताः शक्वर्यो लोकेषु
प्रोता वेदलोकी भवति सर्व-

मायुरेति ज्योग्जीवति महा-
न्प्रजया पशुभिर्भवति महा-
न्कीर्त्या लोकान्न निन्देत्तद्-
व्रतम् ॥ २ ॥

शक्वर्य इति बहुवचनान्तं नाम साम्नः अर्थस्तु पूर्ववत् ॥

इति सप्तदशखण्डः ।

अजा हिंकारोऽवयः प्रस्ता-
वो गाव उद्गीथोऽश्वाः प्रतिहा-
रः पुरुषो निधनमेतारेवत्यः
पशुषु प्रोताः ॥ १ ॥ स य ए-
वमेतारेवत्यः पशुषु प्रोताः वेद
पशुमान्भवति सर्वमायुरेति
ज्योग्जीवति महान्प्रजया प-

शुभिर्भवति महान्कीर्त्या प-
शून्न निन्देत्तद्व्रतम् ॥ २ ॥

पूर्ववद्दैवत्य इति साम नाम व्यक्तोऽर्थः पू-
र्ववत् ॥  इत्यष्टादशखण्डः ॥

लोमहिंकारस्त्वक् प्रस्ता-
वो मा ँ समुद्गीथोऽस्थि प्र-
तिहारो मज्जानिधनमेतद्य-
ज्ञायज्ञीयमङ्गेषु प्रोतम् ॥ १ ॥
स य एवमेतद्यज्ञायज्ञीयमङ्गे-
षु प्रोतम् वेदाङ्गीभवति ना-
ङ्गेन विमूर्छति सर्वमायुरेति
ज्योग्जीवति महान्प्रजया प-
शुभिर्भवति महान्कीर्त्या सं-
वत्सरं मज्ज्ञो नाश्नीयात्तद्व्रतं

मज्ज्ञो नाश्नीयादिति वा ॥ २ ॥

यज्ञायज्ञीयसंज्ञकसामोपासकः संवत्सरं सदावानमांसमश्नीयात् ॥

इत्येकोनविंशखण्डः ।

अग्निर्हिंकारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु प्रोतम् ॥ १ ॥ स य एवमेतद्राजनं देवतासु प्रोतं वेदैता सामेव देवतानाᳪं सलोकताᳪं सार्ष्टिताᳪं सायुज्यं गच्छति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान्कीर्त्या ब्रा-

ह्मणान्न निन्देत्तद्व्रतम् ॥ २ ॥

राजनसंज्ञं साम पूर्ववदुपासनादि ॥

॥ इति विंशतिखण्डः ॥

त्रयी विद्या हिंकारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वया ँसि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत्साम सर्वस्मिन्प्रोतम् ॥ १ ॥ स य एवमेतत्साम सर्वस्मिन्प्रोतं वेदसर्व ँ ह भवति ॥ २ ॥ तदेषश्लोको यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यद-

स्ति ॥ ३ ॥ यस्तद्वेद स वेद सर्वं सर्वादिशोवलिमस्मै हरन्ति सर्वमस्मीत्युपासीततद्व्रतं तद्व्रतम् ॥ ४ ॥

त्रयी विद्यादि पञ्चत्रिक दृष्ट्या सामेति सामान्य संज्ञक हिंकाराद्युपासकः यतस्सामेति सामान्यं नाम सर्व विशेषनामसु व्याप्तमिति जानात्यतस्सर्वं लभते सर्वेश्वरो भवतीति यावत् श्लोको मन्त्रोऽप्येतदर्थकः ॥

इत्येकविंशतिखण्डः ।

अथोद्गातुरुपास्तिमुद्गानेतत्तद्विशेषस्य वर्णदेवतादेश्चध्यानात्मिकामाह विनर्दीति—

विनर्दिसाम्नो वृणे पशव्यमित्यग्नेरुद्गीथो निरुक्तः प्रजापतेनिरुक्तः सोमस्यमृदुश्लक्ष्

णं वायोः श्लक्ष्णं बलवदिन्द्र-
स्य क्रौञ्चं बृहस्पतेरपध्वान्तं
वरुणस्य तान्सर्वानेवोपसेवेत
वारुणंत्वेव वर्जयेत् ॥ १ ॥ अ-
मृतत्वं देवेभ्य आगायानीत्या
गायेत्स्वधां पितृभ्य आशां म-
नुष्येभ्य स्तृणोदकं पशुभ्यः
स्वर्गं लोकं यजमानायान्नमा-
त्मन आगायानीत्येतानि मन-
साध्यायन्नप्रमत्तः स्तुवीत ॥ २ ॥
सर्वेस्वरा इन्द्रस्यात्मनः सर्व
ऊष्माणः प्रजापतेरात्मानः स-
र्वेस्पर्शामृत्योरात्मनस्तं यदि

स्वरेषूपालभेतेन्द्र ॰ शरणं प्रप-
न्नो भूवं सत्वा प्रति वक्ष्यती-
त्येनं ब्रूयात् ॥ ३ ॥ अथ य-
द्येनमूष्मसूपालभेत प्रजापति ॰
शरणंप्रपन्नो भूवं सत्वाप्रतिप-
क्ष्यतीत्येनं ब्रूयाद्थयद्येन ॰ स्प-
र्शेषूपालभेत मृत्यु ॰ शरणं प्र-
पन्नो भूवं सत्वाप्रतिधक्ष्यती-
त्येनं ब्रूयात् ॥ ४ ॥ सर्वेस्वरा
घोषवन्तो बलवन्तो वक्तव्या
इन्द्रेबलं ददानीति सर्वेऊष्मा-
णो ग्रस्ता अनिरस्ताः विवृता
वक्तव्याः प्रजापतेरात्मानं द-

द्धानीति सर्वे स्पर्शा लेशेनान-
भिनिहिता वक्तव्याम्मृत्योरा-
त्मानं परिहराणीति ॥ ५ ॥

विनर्दि विविधध्वनिमदग्निदेवत्यमुद्गीथः साम सम्बन्ध्युद्गानं पशुभ्योहितमहं वृणे प्रार्थये इति वदन्तमुद्गातारमुद्दिश्य भेदान्व-च्मीति शेषः अनिरुक्तो निर्विशेषउद्गीथः प्र-जापतिदेवत्यः निरुक्तः स्पष्टः सोमस्य मृ-दुस्निग्धश्चोद्गानंवायोः क्रौञ्चपक्षिनादसमम् अपद्ध्वान्तं भिन्नकांस्यस्वरसमम् वारुणम-पध्वान्तं त्यजेत् देवेभ्यो मृतत्वमहं साधया-नीत्यादिभावयन् आगायेत् अथ स्वराअचः इन्द्रस्यप्राणस्यात्मानो देहावयवा एवं विद-मुद्गातारमस्वरस्त्वयोक्त इति कश्चिद्ब्रूयात्तं प्रत्युद्गाताब्रूयादहमिन्द्रं शरणंगत इन्द्र एव त्वां प्रत्युत्तरं दास्यतीति एवमग्रेप्यर्थः ध-क्ष्यति भस्मीकरिष्यतीत्यर्थः वर्णोच्चारणे

सावधानेन भवितव्यमित्यत्रैवास्योपासनस्य तात्पर्य्यमित्युच्चारणं शिक्षयत्यन्ते स्वराः घोषप्रयत्नेन बलेन च वक्तव्याः ऊष्माणस्तु व्यक्ताः अत्वरिताः विवृतप्रयत्नेन स्पर्शास्तुशनैः तेनेन्द्रे बलदानं प्रजापतयेभिव्यक्तदेहदानं मृत्योः परिहारश्च भवतीति भावयेत् ॥

इति द्वाविंशतिखण्डः ॥

सामावयवस्योद्गीथादिलक्षणस्य प्रणवस्योपास्तिरुक्ताथस्वतन्त्रस्यतस्यतामपूर्वफलांस्तुतयेवक्तुमाहत्रय इति—

त्रयोधर्मस्कन्धा यज्ञो ध्ययनं दानमिति प्रथमस्तपएव द्वितीयो ब्रह्मचार्य्याचार्य कुलवासी तृतीयोत्यन्तमात्मानमाचार्य कुलेव सादयन्सर्व ए-

ते पुण्यलोका भवन्ति ब्रह्मसꣳस्थो मृतत्वमेति ॥ १ ॥ प्रजापतिर्लोकानभ्यतपत्तेभ्यो भितप्तेभ्यस्त्रयीविद्या सम्प्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्तभूर्भुवः स्वरिति ॥ २ ॥ तान्यभ्यतपत्तेभ्योभि तप्तेभ्यओंकारः सम्प्रास्रवत्तद्यथा शङ्कुना सर्वाणि पर्णानि संतृष्णान्येवमोंकारेण सर्वा वाक् संतृष्णोंकार एवेदꣳ सर्वमोंकार एवेदꣳ सर्वम् ॥ ३ ॥

यज्ञदानाध्ययनानि कृच्छ्रादि तपोनैष्ठिक ब्रह्मचर्यं चेति त्रिविधैर्धर्मैः पुण्यलोकाप्तिः ब्रह्मप्रतीक प्रणवोपासकस्तु क्रमेणमुक्तिमेति कुतोतआह लोकेषु करुसार इति लोकान्ब्रह्माध्यातवाँ स्तदात्रयी विद्येति मनसि भातम् तस्यां सारविचारे भूर्भुवः स्वरित्यक्षराणि भातानि तेषु तद्विचारे ओंकारोभातः यतो यथा पत्रनालेन सूक्ष्मशंकुभिस्सर्वे पत्रावयवा व्याप्ता भवन्त्येवमोङ्कारेणाकारद्वारा सर्वावाग्व्याप्ता एवञ्च ब्रह्मविकारोखिलं जगत्तुनामधेयमात्रमित्योंकारस्सर्वं ब्रह्माभिन्नंचेति ध्यानमपिसिद्धम् ॥

इति त्रयोविंशतिखण्डः ॥

अथ कर्माङ्गस्यसाम्नोहोममन्त्रस्योत्थानस्य च विद्यां वक्तुमाह ब्रह्मेति—

**ब्रह्मवादिनोवदन्ति यद्वसूनां प्रातः सवन ँ रुद्राणां माध्यं**

दिन ँ सवनमादित्यानां च विश्वेषां च देवानां तृतीसवनम् ॥ १ ॥ क्वतर्हियजमानस्य लोकइति सयस्तं न विद्यात्कथं कुर्यादथविद्वान्कुर्यात् ॥२॥ पुराप्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्मुखउपविश्यसवासव ँ सामाभि गायति ॥ ३ ॥ लोक३द्वारमपावा३र्णू ३३ पश्येमत्वावय ँ रा३३३३३ हुं ३ आ ३३ ज्या ३ यो ३ आ ३ २ १ ११ इति ॥४॥ अथ जुहोति नमोग्नयेपृ-

थिवीक्षिते लोकक्षिते लोकं मे-
ऽथ यजमानाय विन्दैष वै यज-
मानस्य लोक एतास्मि ॥५॥
अत्र यजमानः परस्तादायुषः
स्वाहा पजहि परिघमित्युक्
त्वोत्तिष्ठति तस्मैवसवः प्रातः
सवन ँ सम्प्रयच्छन्ति ॥६॥ पु-
रामाध्यन्दिनस्य सवनस्यो-
पाकरणाज्जघनेनाग्नीध्रीयस्यो
दङ्मुखउपविश्य सरौद्र ँसा-
माभिगायति ॥ ७ ॥ लो ३
कद्वारमपावा ३र्णू३ ३ पश्येम-
त्वावयं वैरा३ ३ ३ ३ ३हुं३आ ३ ३

ज्या ३ यो३आ ३ २ १ १ १ इ-
ति ॥ ८ ॥ अथ जुहोति नमो
वायवेन्तरिक्षक्षिते लोकक्षिते
लोकं मे यजमानाय विन्दैष
वै यजमानस्य लोक एतास्मि
॥९॥ अत्र यजमानः परस्ता-
दायुषःस्वाहापजहि परिघमि-
त्युक्त्वोत्तिष्ठति तस्मैरुद्रामा-
ध्यंदिन१ सवन१ सम्प्रयच्छन्ति
॥ १० ॥ पुरातृतीयसवनस्यो-
पाकरणाज्जघने नाहवनीय-
स्योदङ्मुखउपाविश्य स आ-
दित्य १ स वैश्वदेव१ सामाभि-

गायति ॥ ११ ॥ लो३कद्वारमपा
वा३र्णू ३३ पश्येमत्वावय ५ स्वा-
रा३३३३हुं३आ३३ज्या३
यो३आ३२१११इति ॥ १२ ॥
आदित्यमथमवैश्वदेवं लो३क
द्वारमपा वा३र्णू३३पश्येमत्वा
वय ५ साम्रा३३३३हुं३आ३३
ज्या३यो३आ३२१११इति ॥ १३ ॥
अथ जुहोतिनम आदित्येभ्य-
श्च विश्वेभ्यश्च देवेभ्यो दिवि-
क्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे
यजमानाय विन्दत ॥ १४ ॥ एष
वै यजमानस्य लोक एतास्म्य

त्र यजमानः परस्तादायुषः स्वाहा पहत परिघमित्युक्त्वो- त्तिष्ठति ॥१५॥ तस्मा आदि- त्याश्च विश्वेच देवास्तृतीय स- वनꣳ सम्प्रयच्छन्त्येष हवैयज्ञ- स्य मात्रां वेद य एवं वेद य एवं वेद ॥ १६ ॥

सवनत्रयदेवैरेव लोकत्रयमाप्यते चे- द्यजमानस्य कथं को लोक इत्याकाङ्क्षायां यो यजमानः प्रातः अप्रगीतत्वेन शस्त्रसंज्ञ- कस्यानुवाकस्यारम्भात्पूर्वं गार्हपत्याग्नेः पृ- ष्ठत उपविश्यो दङ्मुखः सन् वसुदेवताकं सा- महे अग्नेपृथिवी लोक प्रासिद्वारं त्वमपा वृ- णुतदातेन द्वारेण त्वां वयं पश्येमराज्यायेत्य- र्थकं गायति ततः पृथिवी लोकनिवासा-

याग्नये नमः अत्र लोके यजमानो ह्यमायुषः परस्तान्मृत्वा गन्तास्मीत्यर्थकेन स्वाहान्तेन मन्त्रेण जुहोति ततः परिघं लोकद्वारार्गलमपजहि पृथक्कुर्वित्युक्त्वोत्तिष्ठति तस्मै पृथ्वी लोकं प्रातः सवनफलं ददति वसवः६ अग्रेतु आग्नीध्रीयो दक्षिणाग्निः लोक द्वारमन्तरिक्ष लोक द्वारम् पश्येमवैराज्याय अन्तरिक्ष लोक निवासाय वायवे१० लोकद्वारं द्युलोक द्वारम् पश्येम स्वाराज्याय त्वामादित्यम् साम्राज्याय त्वां वैश्वदेवम् द्युलोकनिवासिभ्यो नम इत्याद्यर्थः शेषं पूर्ववत् ॥

इति च्छान्दोग्योपनिषत्प्रसादे

द्वितीयोऽध्यायः ॥

कर्माङ्गविद्यानन्तरं कर्मफलयोग्यस्य साधकत्वात्कर्मफलस्यादित्यस्य विद्यामाहासाविति—

असौ वा आदित्यो देवमधु-तस्य द्यौरेवतिरश्चीनव१ शो-

न्तरिक्षम पूपोमरीचयः पुत्राः ॥१॥ तस्य ये प्राञ्चोरश्मयस्ता एवास्य प्राच्योमधुनाड्यः ऋच एव मधुकृत ऋग्वेद एव पुष्पंता अमृता आपस्तावा एता ऋचः ॥ २ ॥ एतमृग्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳरसोजायत ॥३॥ तद्व्यक्षरत्तदादित्यमभितोश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहितꣳरूपम् ॥ ४ ॥

द्युलोकस्तिर्यग्वंशः तत्र लग्नः सन् अधो लम्बिवद् दृश्यमानमन्तरिक्षमेव मधुकरकृतो

पूपोपमत्वाद्वहुच्छिद्रो पूपः किरणस्था भुव आकृष्टा आपो मधुकर पुत्रा अपूपच्छिद्र-स्थाः किरणाश्छिद्राणि ऋग्मन्त्रा मधु-कराः स ब्राह्मणर्ग्वेदविहितं कर्म पुष्पम् एवञ्च ऋचः कर्माणि निपीड्याग्नौ हुतास्सो-माज्याद्यप आदायामृतरूपा विधाय यश-स्तेजः प्रभृति फलात्मकरसतामापादिताः तच्चरसात्मकं मधुरोहितरूपेणादित्यं गत्वा श्रयत् आदित्ये मधुदृष्टिर्द्युप्रभृतिषु वंशादि दृष्टिः कार्येति भावः एवमग्रे पर्यायत्रये प्यूह्यम् ॥

इति तृतीयाध्यायस्य प्रथमखण्डः ॥

अथ येऽस्य दक्षिणारश्म-यस्ता एवास्य दक्षिणा मधु-नाड्यो यजूꣳष्येवमधुकृतो य-जुर्वेद एव पुष्पंता अमृताआ-

पः ॥ १ ॥ तानि वा एतानि यजु ँ ष्येतं यजुर्वेदमभ्य तप- ँ स्तस्या भितप्तस्य यशस्ते- ज इन्द्रियं वीर्य मन्नाद्य ँ र- सोऽजायत ॥ २ ॥ तद्व्यक्षरत्त- दादित्य मभितो श्रयत्तद्वा ए- तद्य देतदा दित्यस्य शुक्ल ँ रूपम् ॥ ३ ॥

इति द्वितीयखण्डः ॥

अथ येस्य प्रत्यञ्चोरश्मय- स्ता एवास्य प्रतीच्यो मधु- नाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पन्ता अमृता

आपः ॥ १ ॥ तानि वा एतानि सामान्येत ँ सामवेदमभ्यतप ँ स्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य ँ रसोऽजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितो श्रयत्तद्वा एतद्यदेतदादित्यस्य कृष्ण ँ रूपम् ॥ ३ ॥

इति त्रितीयखण्डः ।

अथ येऽस्योदञ्चोरश्मयस्ता-येवास्योदीच्यो मधुनाड्यो थर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पन्ताअमृताआपः १

तेवा एते थर्वाङ्गिरस एतदिति-
हासपुराणमभ्यतप ꣳ स्तस्या-
भितप्तस्य यशस्तेज इन्द्रियं
वीर्यमन्नाद्य ꣳ रसोजायत ॥२॥
तद्व्यक्षरत्तदादित्यमभितो श्र-
यत्तद्वा एतद्यदेतदादित्यस्य परं
कृष्ण ꣳ रूपम् ॥ ३ ॥

अथर्वाङ्गिरस्संज्ञकर्षिभिर्दृष्टामन्त्रा अथ-
र्वाङ्गिरसइत्यर्थः इतिहासपुराणयोस्तु पारि-
प्लवरात्रिषु कर्माङ्गतया विनियोगोश्वमेधे
इति विशेषश्चतुर्थे ॥

इति चतुर्थखण्डः ॥

रक्तशुक्लकृष्णातिकृष्णरूपाणि मधून्यूक्तादित्ये-
समाहितदृष्टेः प्रतीतं चञ्चलामिवतेजोरूपं
पञ्चमं मधुवक्तुमाहाथेति—

अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवा देशा मधुकृतो ब्रह्मैव पुष्पन्ता अमृताआपः ॥१॥ तेवा एते गुह्या आदेशा एतद्ब्रह्माभ्यतप ँ स्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्य ँ रसोजायत ॥ २ ॥ तद्व्यक्षरत्तदादित्यमभितो श्रयत्तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥ तेवा एते रसाना ँ रसावेदाहि रसास्तेषामेते रसास्तानि वा एतान्यमृ-

तानाममृतानि वेदाह्यमृतास्ते-
षामेतान्यमृतानि ॥ ४ ॥

अत्र कर्माङ्गविषयकोपासनाद्युपदेशा एव मधुकराः प्रणव एव पुष्पम् रसानां रसास्सारा इत्यादिस्तुतिः शेषं पूर्ववत् ॥

इति पञ्चमखण्डः ।

अथोक्तमधूनि दृष्ट्वैव येवस्वादयस्तृप्यन्ति
यानि च फलानि लभन्ते तान्तानि चाथै-
तत्सर्वं ये भावयन्ति तेषां च देवतुल्य-
फलानि पञ्चभिःखण्डैर्वक्तुमाह
तद्यदित्यादि—

तद्यत्प्रथमममृतं तद्वसवउप-
जीवन्त्यग्निना मुखेन नवै देवा
अश्नन्ति न पिबन्त्येतदेवा-
मृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥
तएतदेवरूपमभिसंविशन्त्ये-

तस्माद्रूपादुद्यन्ति ॥ २ ॥ स य एतदेवममृतं वेदवसूनामेवैको भूत्वाग्निनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥ स यावदादित्यः पुरस्तादुदेतापश्चादस्तमेता वसूनामेव तावदाधिपत्यꣳ स्वाराज्यं पर्य्येता ॥४॥

इति षष्ठखण्डः ॥

अथयद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन नवै देवाअश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्त्ये-
तस्माद्रूपादुद्यन्ति ॥ २ ॥ स
य एतदेवममृतं वेदरुद्राणामे-
वैको भूत्वेन्द्रेणैव मुखेनैतदे-
वामृतं दृष्ट्वा तृप्यति स एत-
देवरूपमभिसंविशत्येतस्मा-
द्रूपादुदेति ॥ ३ ॥ स याव-
दादित्यः पुरस्तादुदेता पश्चा-
दस्तमेताद्विस्तावद्दक्षिणत उ-
देतोत्तरतोस्तमेतारुद्राणामेव
तावदाधिपत्यꣳ स्वाराज्यं प-
र्येता ॥ ४ ॥

इति सप्तमखण्डः ॥

अथयतृतीयममृतं तदादि-
त्या उपजीवन्ति वरुणेन मु-
खेन न वै देवाअश्नन्ति न पिव-
न्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति १
तएतदेवरूपमभिसंविशन्त्ये-
तस्माद्रूपादुद्यन्ति ॥२॥ सय
एतदेवममृतं वेदादित्यानामे-
वैको भूत्वावरुणेनैव मुखेनैत-
देवामृतं दृष्ट्वा तृप्यति स ए-
तदेवरूपमभिसंविशत्येतस्मा-
द्रूपादुदेति ॥ ३ ॥ सयावदादि-
त्योदक्षिणत उदेतोत्तरतोस्तमे-
ताद्विस्तावत्पश्चादुदेतापुरस्ता-

दस्तमेतादित्यानामेवैतावदा-
धिपत्य ँ स्वाराज्यं पर्येता ॥४॥

इत्यष्टमखण्डः ॥

अथयच्चतुर्थममृतं तन्मरुत-
उपजीवन्ति सोमेन मुखेन नवै
देवा अश्नन्ति न पिबन्त्येतदे-
वामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥
तएतदेवरूपमभिसंविशन्त्ये-
तस्माद्रूपादुद्यन्ति ॥ २ ॥ सय
एतदेवममृतं वेदमरुतामेवैको
भूत्वासोमेनैव मुखेनैतदेवामृतं
दृष्ट्वा तृप्यति स एतदेवरूप-
मभिसंविशत्येतस्माद्रूपादुदे-

ति ॥ ३ ॥ सयावदादित्यः प-
श्चादुदेतापुरस्तादस्तमेता द्वि-
स्तावदुत्तरतउदेता दक्षिणतो-
स्तमेतामरुतामेवतावदाधिप-
त्य ँ स्वाराज्यं पर्यैता ॥ ४ ॥

इति नवमखण्डः ॥

अथ यत्पञ्चमममृतं तत्सा-
ध्याउपजीवन्ति ब्रह्मणामुखेन
नवैदेवाअश्नन्ति न पिवन्त्येत-
देवामृतं दृष्ट्वा तृप्यन्ति ॥१॥
तएतदेवरूपमभिसंविशन्त्ये-
तस्माद्रूपादुद्यन्ति ॥२॥ सय-
एतदेवममृतं वेदसाध्यानामे-

वैको भूत्वा ब्रह्मणैव मुखेनैत-
देवामृतं दृष्ट्वा तृप्यति स ए-
तदेवरूपमभिसंविशत्येतस्मा-
द्रूपादुदेति ॥ ३ ॥ स यावदा-
दित्य उत्तरतउदेता दक्षिणतो-
स्तमेताद्विस्तावदूर्ध्वंउदेतार्वा-
ङस्तमेतासाध्यानामेवतावदा-
धिपत्य ᳟ स्वाराज्यं पर्येता॥४॥

नैतेति गूढार्थाः ॥

इति दशमखण्डः ॥

उक्ताया मधुविद्यायाः क्रममुक्तिफलेपर्यवसानं दर्शयितु मेकादशखण्डमाहाथ तत इति—

अथ ततऊर्ध्वंउदेत्य नैवोदे-
तानास्तमेतैकलएव मध्येस्था-

तातदेषश्लोकः ॥ १ ॥ नवैतत्र
ननिम्लोचनोदियाय कदाचन
देवास्तेनाह ँ सत्येनमाविरा-
धिषिब्रह्मणेति ॥ २ ॥ नह वा
अस्माउदेति न निम्लोचति स-
कृद्दिवाहैवास्मै भवति य एता-
मेवं ब्रह्मोपनिषदं वेद ॥ ३ ॥
तद्धैतद्ब्रह्माप्रजापतय उवाच
प्रजापतिर्मनवेमनुः प्रजाभ्य-
स्तद्धैतदुद्दालकायारुणये ज्ये-
ष्ठाय पुत्राय पिता ब्रह्म प्रो-
वाच ॥४॥ इदं वावतज्ज्येष्ठाय
पुत्राय पिता ब्रह्मप्रब्रूयात्प्रणा-

य्यायवान्ते वासिने ॥ ५ ॥ नान्यस्मै कस्मै चनयद्यप्यस्मा इमामद्भिः परिगृहीतांधनस्य पूर्णां दद्यादेतदेवततोभूय इत्येतदेवततोभूय इति ॥ ६ ॥

प्राणिनामनुग्रहमुदयास्ताभ्यां कुर्वन्नादित्यस्तेषां कर्मफलभोगावसाने नोदेति नचास्तमेति किन्तु स्वरूपे तिष्ठति उक्तमधुविद्योपासकोप्येवमादित्यं प्राप्य जन्ममरणरहितो ब्रह्मात्मतयास्थितो भवतीति भावः एषा च मधुविद्याब्रह्मणः सकाशादुद्दालकस्य पितुश्च प्रवृत्ता एतां ज्येष्ठपुत्राय योग्य शिष्याय वाब्रूयान्नतुधनपूर्णसमुद्रान्तभूमि दायाप्यन्यस्मै ॥

इत्येकादशखण्डः ॥

सूर्यद्वारेव गायत्रीद्वाराब्रह्मात्मज्ञानायाह गायत्रीत्यादि—

गायत्री वा इद ँ सर्वं भूतं य-
दिदं किञ्चवाग्वै गायत्री वाग्वा
इद ँ सर्वं भूतं गायति च त्रा-
यते च ॥ १ ॥ या वै सा गायत्रीयं वा
व सा येयं पृथिव्यस्या ँ हीद ँ
सर्वं भूतं प्रतिष्ठितमेतामेव ना-
तिशीयते ॥ २ ॥ या वै सा पृ-
थिवीयं वाव सा यदिदमस्मि-
न्पुरुषे शरीरमस्मिन्ही मे प्राणाः
प्रतिष्ठिता एतदेव नातिशीय-
न्ते ॥ ३ ॥ यद्वै तत्पुरुषे शरीर-
मिदं वाव तद्यदिदमस्मिन्नन्तः
पुरुषे हृदयमस्मिन्ही मे प्राणाः

प्रतिष्ठिता एतदेवनातिशीयन्ते ॥ ४ ॥ सैषा चतुष्पदा षड्विधागायत्री तदेतदृचाभ्यनूक्तम् ॥ ५ ॥ तावानस्य महिमा ततोज्यायाꣳश्च पुरुषः पादोस्य सर्वाभूतानि त्रिपादस्यामृतं दिवीति ॥ ६ ॥ यद्वैतद्ब्रह्मेतीदंवावतद्योयंवहिर्धापुरुषादाकाशो योवैसवहिर्धा पुरुषादाकाशः ॥ ७ ॥ अयं वावसयोयमन्तःपुरुष आकाशो योवैसोन्तः पुरुष आकाशः ॥ ८ ॥ अयं वावसयोयमन्तर्हृदय

आकाशस्तदेतत्पूर्णमप्रवर्त्तिपूर्णामप्रवर्त्तिनी ᳲश्रियं लभते य एवं वेद ॥ ९ ॥

इदमिदमिति सर्वं गायति त्रायतेच माभैषीरित्यतो गायत्री वाक्वाङ्मात्रं च जगदिति गायत्र्येव सर्वम् किञ्च कथञ्चिद्वाग्भूत पृथिवी शरीर हृदय प्राणरूपासती षड्विधा षडक्षर पादाछन्दोरूपा चतुष्पदा गायत्री यथा शरीराकाशो हृदयम् हृद्या भातश्च चिदाकाशो खण्डं परिपूर्णं ब्रह्म तथा गायत्र्यवच्छिन्नचेतनमपीति भावः एवञ्च गायत्र्यां ब्रह्म दृष्टिः कार्य्येति सिद्धम् ॥

इति द्वादशखण्डः ॥

उपासिताहिद्वारपालाराजानं नयन्त्य तोमनसोन्तः प्रवेशाय हार्दस्य ब्रह्मणोद्वारपालाना मुपासन मुपासनान्तरञ्च वक्तुमाह तस्येति—

तस्य हवा एतस्य हृदयस्य पञ्चदेवसुषयः सयोस्य प्राङ्-सुषिः सप्राणस्तच्चक्षुः स आ-दित्यस्तदेतत्तेजोन्नाद्यमित्यु-पासीत तेजस्व्यन्नादो भवति य एवं वेद ॥ १ ॥ अथयोस्य द-क्षिणःसुषिः सव्यानस्तच्छ्रोत्रꣳ सचन्द्रमास्तदेतच्छ्रीश्च यशा-श्चेत्युपासीत श्रीमान्यशस्वी भ-वति य एवं वेद ॥ २ ॥ अथ-योस्य प्रत्यङ्सुषीः सोपानः सावाक्सोग्निस्तदेतद्ब्रह्मवर्चस-मन्नाद्यमित्युपासीत ब्रह्मवर्च-

स्यन्नादो भवति य एवं वेद ।३।
अथ योऽस्योदङ्सुषिः स समा-
नस्तन्मनः सपर्जन्यस्तदेत-
त्कीर्त्तिश्च व्युष्टिश्चेत्युपासीत
कीर्त्तिमान्व्युष्टिमान्भवति य
एवं वेद ॥ ४ ॥ अथ योऽस्योर्ध्वः
सुषिः स उदानः स वायुः स आका-
शस्तदेतदोजश्च महश्चेत्युपा-
सीतौजस्वीमहस्वान्भवति य
एवं वेद ॥ ५ ॥ ते वा एते पञ्च-
ब्रह्मपुरुषाः स्वर्गस्य लोकस्य
द्वारपाः स य एतानेवं पञ्च
ब्रह्मपुरुषान्स्वर्गस्य लोकस्य

द्वारपान्वेदास्य कुलेवीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेद ॥ ६ ॥ अथ यदतः परोदिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वावतद्यदिदमस्मिन्नन्तः पुरुषज्योतिस्तस्यैषा दृष्टिर्यत्रैतदस्मिञ्छरीरे सꣳस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्यनिनदमिव नदथुरिवाग्नेरिव ज्वलतउप-

शृणोति तदेतद्दृष्टं च श्रुतं चे-
त्युपासीत चक्षुष्यः श्रुतो भव-
ति य एवं वेद य एवं वेद ॥७॥

प्राणादि देवताधिष्ठितानि हृदयस्य पञ्च
च्छिद्राणि द्वाराणि सन्ति तत्र पूर्वद्वारं पत्त-
त्प्राणः स चक्षुषादित्येन च सम्बद्धत्वादभि-
न्नः एवंच चक्षुरादित्यौ तेजोमयावादित्य-
स्तु दृष्टिद्वारान्नद आद्यश्चेति तेजोन्नाद्यगुण-
विशिष्टत्वेन प्राणमुपास्ते यस्तस्य तेजस्व्य
न्नादत्वं गुणफलं द्वार पः प्राणः स्वर्गप्राप्ति
हेतुर्भवतीति मुख्यञ्च फलम् एवमग्रेपर्याय
चतुष्टये बोध्यम् प्राणादय एव पञ्च हार्दस्य
ब्रह्मणः स्वर्गस्यपुरुषाः राजपुरुषाइव तेषां
विज्ञानेधिकंफलम् अथसर्वस्मात्संसारादुपर्य
सङ्गं यज्ज्योतिर्ब्रह्मचित्तदे वेदं यदत्र शरीरे-
न्तः करणे ज्योतिश्चिाच्चिदाभासो वा । देहगं
च ज्योतिः स्पर्शनेनोष्णत्वस्याङ्गुलिभ्यां क-

र्णयोः पिधानेशब्दस्य चोपलम्भाद् दृश्यते श्रूयते चेति दृष्टत्वश्रुतत्वगुणविशिष्टत्वेनाभिन्नं ज्योतिर्यं उपासीत सोपि विश्रुतत्वदर्शनीयत्वादि फलं लभते ॥

॥ इति त्रयोदशखण्डः ॥

विनैव प्रतीकं सगुणब्रह्मणईश्वरस्योपासनं वक्तुमाह सर्वमिति ।

सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत॥ १॥ मनोमयः प्राण शरीरोभारूपः सत्यसंकल्पआकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः

सर्वरसः सर्वमिदमभ्यात्तो वा-
क्यनादरः ॥ २ ॥ एष मआ-
त्मान्तर्हृदयेऽणीयान्व्रीहेर्वा-
यवाद्वासर्षपाद्वाश्यामाकाद्वा
श्यामाकतण्डुलाद्वैषमआत्मा
न्तर्हृदये ज्यायान्पृथिव्याज्या
यानन्तारिक्षाज्ज्यायान्दिवो
ज्यायानेभ्योलोकेभ्यः ॥ ३ ॥
सर्वकर्मा सर्वकामः सर्वगन्धः
सर्वरसः सर्वमिदमभ्यात्तोऽवा-
क्यनादरएषमआत्मान्तर्हृद-
ये एतद्ब्रह्मैतमितः प्रेत्याभि-
संभवितास्मीति यस्यस्याद-

द्धानविचिकित्सास्तीतिह स्मा
ह शाण्डिल्यः शाण्डिल्यः ॥४॥

ऋतुर्वासना तन्मयो यं जीवोतो यद्वासनोत्र भवति तदेति तज्जम् तस्मिल्लीयत इतितल्लम् तस्मिन् अनितिचेष्टत इति तदनम् एषां समाहारः छान्दसः तज्जलान् इदं सर्वं जगत्सगुणं ब्रह्म तथाच शान्तो यतचित्तस्तदेवोपासीत सद्वासनायै मनोमयत्वादिभिरिति सूक्ष्मत्वमहत्वादिभिश्च गुणैर्युक्तो यो मे हृदि आत्मा स एव परमात्[illegible] श्वरो तो मृत्वेश्वर एव भविष्यामीति गु[illegible]नां पुनरुक्तिर्गुणा अपि ध्येया इति सूचनाय॥

॥ इति चतुर्दश खण्डः ॥

पुत्रामरणफलदां सजपां त्रैलोक्यादौ मञ्जूषादि रूपकोशादिदृष्टिं वक्तुमाहान्तरिक्षेति—

अन्तरिक्षोदरः कोशोभूमि

बुध्नो न जीर्यति दिशोह्यस्य स्रक्तयोद्यौ रस्योत्तरं विल ँ स एष कोशोवसुधानस्तस्मिन्विश्वमिद ँ श्रितम् तस्यप्राचीदिग्जुहूर्नामसहमानानामदक्षिणा राज्ञीप्रतीची सुभूतानामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोद ँ रोदिति सोहमेतमेवं वायुं दिशांवत्सवेद मा पुत्ररोदं रुदम् ॥ २॥ अरिष्टं कोशं प्रपद्येऽमुनामुनामुनाप्राणंप्रपद्येऽमुनाऽमुनामुनाभूः प्रपद्येऽ-

मुनामुनामुनाभुवः प्रपद्येमुना मुनामुना स्वः प्रपद्येऽमुनामुना मुना ॥ ३ ॥ स यदवोचं प्राणं प्रपद्य इति प्राणो वा इद ँ सर्वं भूतं यदिदं किञ्चतमेव तत्प्रापत्सि ॥४॥ अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्ये ऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम् ॥ ५ ॥ अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् ॥६॥ अथ यदवोच ँ स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये य-

जुर्वेदं प्रपद्ये सामवेदं प्रपद्ये इ-
त्येव तदवोचं तदवोचम् ॥७॥

त्रैलोक्यं कोशः प्राणिकर्मफलधनाधान-
पात्रं मञ्जूषा चिरस्थायी तस्यान्तरिक्षमुद-
रं भूर्मूलञ्चतस्रोदिशः कोणाः द्यौर्मुखम्
तत्र कोशे सर्वमिदं कर्मफलंस्थितम् कि-
ञ्चास्यकोशस्य प्राच्याद्यायादि शोभागा जु-
हूः ॥ १ ॥ सहमाना ॥ २ ॥ राज्ञी ॥ ३ ॥
सुभूता ॥ ४॥ इत्याख्याः तासां पुत्रो वायुः
एत्रमेता दृष्टीः करोति अरिष्टं कोशमित्यादि
पञ्च मन्त्रांश्च जपति यः स पुत्रनिमित्त-
कं रोदनं न लभते ॥

इति पञ्चदशखण्डः ॥

जीवत्पुत्रस्यापिस्वमरणं चेन्नसुखमिति स्वदीर्घा-
युर्दमुपासनंवक्तुमाहपुरुषइति—

पुरुषो वा वयज्ञस्तस्य यानि
चतुर्विं ᳖ शति वर्षाणि तत्प्रातः

सवनं चतुर्वि ँ शत्यक्षरा गायत्री गायत्रं प्रातः सवनं तदस्यवसवोन्वायत्ताः प्राणावाववसव एते हीद ँ सर्वं वासयन्ति १ तं चेदेतस्मिन्वयसि किंचिदुपतपेत्सब्रूयात्प्राणा वसवइदम्मे प्रातःसवनं माध्यंदिन ँ सवनमनुसं तनुतेति माहं प्राणानां वसूनाम्मध्ये यज्ञो विलोप्सीयेत्युद्धैव ततएत्यगदोह भवति ॥२॥ अथ यानि चतुश्चत्वारि ँ शद्वर्षाणि तन्माध्यंदिन ँ सवनं चतुश्चत्वारि ँ श-

दक्षरात्रिष्टुप्त्रैष्टुभंमाध्यंदिनꣳ
सवनंतदस्यरुद्राअन्वायत्ताःप्रा
णावावरुद्रा एतेहीदꣳ सर्वꣳ रो-
दयन्ति३ तंचेदे तस्मिन्वय-
सिकिंचिदुपतपेत्सब्रूयात्प्राणा
रुद्रा इदम्मे माध्यंदिनꣳ सव-
नंतृतीय सवनमनु सन्तनुतेति
माहं प्राणानाꣳ रुद्राणाम्मध्ये
यज्ञो विलोप्सीयेत्युद्धैव तत ए-
त्यगदोह भवति ॥४॥ अथया-
न्यष्टाचत्वारिꣳ शद्वर्षाणि त-
त्तृतीयसवनमष्टाचत्वारिꣳ श-
दक्षराजगती जागतं तृतीयस-

वनं तदस्यादित्या अन्वाय-
त्ताः प्राणावावादित्या एतहीद-
द ९ सर्वमाददते ॥ ५ ॥ तं चेदे
तस्मिन्वयसि किञ्चिदुपतपे-
त्सब्रूयात्प्राणा आदित्या इदं
मे तृतीय सवनमायुरनु स-
न्तनुतेतिमाहं प्राणानामादि-
त्यानां मध्ये यज्ञो विलोप्सी-
येत्युद्धैव तत एत्यगदोहैव भ-
वति ॥ ६ ॥ एतद्धस्मवैतद्वि-
द्वानाह महिदासऐतरेयः स किं
मए तदुपतपसियो हमनेन न
प्रेष्यामीति सहषोडशं वर्षश-

तमजीवत्प्रह षोडशंवर्षशतंजीवति य एवं वेद ॥ ७ ॥

प्रातःकालीनं कर्मयज्ञस्य प्रातः सवनमुच्यते तत्र स्तोत्रादि गायत्रीछन्दस्कं भवतीति गायत्रसंज्ञा तस्य तच्च यज्ञस्य प्रथमो भागः गायत्री तु चतुर्विंशत्यक्षरा एवं पुरुषस्यायुरपि षोडशाधिकं शतमब्दाः तत्र चतुर्विंशति वर्षात्मकः प्रथमभागः द्वितीयतृतीयभागावप्येवं ज्ञेयौ तथाच पुरुषे यज्ञ [illegible]ः पुरुषायुरवयवेषु प्रातः सवनादिदृष्टयः [illegible]णाख्य पञ्चवायु दशेन्द्रियेषु वसुरुद्रादित्यानां सवनदेवतानां दृष्टयः कार्य्याः तथैकैक मन्त्रस्य लिखितस्य जपश्चकार्य्योमन्त्रार्थानुसन्धानपूर्वको यदितत्तद्भागेमरणशङ्काकारणं किंचिदुत्पद्येत रोगादिदुःखम् । इतरागर्भजो महिदासएतदुपासनेन षोडशोत्तर वर्षशतमजीवत् ॥ इति षोडशखण्डः॥

प्रकारान्तरेण पुरुषस्य यज्ञरूपतोपासनार्थमुच्यते स इति—

सयदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षा ॥ १ ॥ अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति ॥२॥ अथयद्धसति यज्जक्षति यन्मैथुनंचरति स्तुतशस्त्रैरेवतदे[illegible] ३ ॥ अथयत्तपो दानमार्ज[illegible] महि ᳚ सासत्य वचनमितित[illegible] अस्यदक्षिणाः ॥ ४ ॥ तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवावभृथः ॥५॥ तद्धैतद्घोर आ-

ङ्गिरसः कृष्णायदेवकीपुत्रायो-
क्त्वोवाचा पिपास एव स ब-
भूव सोन्तवेलायामेतत्त्रयं प्र-
तिपद्येताक्षितमस्यच्युतमसि-
प्राणस ँ शितमसीति तत्रैतेद्व
ऋचौ भवतः ॥ ६ ॥ आदि-
त्प्रत्नस्यरेतस उद्वयं तमसस्प
ज्योतिः पश्यन्तउत्तर ँ स्वः
श्यन्त उत्तरंदेवं देवत्रासूर्यम-
न्मज्योतिरुत्तममिति ज्यो-
तिरुत्तममिति ॥ ७ ॥

दुःखदाअप्राप्तान्नजलादीच्छा एव दी-
क्षा पानाशनरमणाद्या उपसदःसुखदाः श-
ब्दयुतानिहासभक्षणमैथुनानिस्तुत शस्त्रा-

णि तपोदानार्जवाहिंसासत्यवचनानि धर्म पुष्टिकराणि दक्षिणाः मरणमवभृथः समाप्तिरूपः इत्थं मातापुरुषं यजमानस्सोममुत्पादयिष्यतीत्यत्रसोष्यतीत्येकशब्दप्रयोगाच्च पुरुषो यज्ञ इति ज्ञेयम् किञ्चैतदुपासकोमरणकाले अक्षितमसि ॥ १॥ अच्युतमसि ॥ २ ॥ प्राणसꣳशितमसी ३ ति मन्त्रत्रयंजपेत् इमाञ्चविद्यां घोरनामाऋषिः श्रीकृष्णायोवाच स च देवकीसुतो नयैव्वाप्ताखिलमनोरथोबभूव ॥

इति सप्तदशखण्डः ।

अथान्येश्लिष्टोपासने वक्तुमाह मन इति—

मनोब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतञ्च ॥ १ ॥ तदेतच्च-

तुष्पाद्ब्रह्मवाक्पादः प्राणः पादश्चक्षुःपादः श्रोत्रं पादइत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवादिष्टं भवत्यध्यात्मं चैवाधिदैवतञ्च २ वागेवब्रह्मणश्चतुर्थःपादः सोऽग्निनाज्योतिषाभाति च तपाति च भाति च तपति च कीर्त्या यशसाब्रह्मवर्चसेन य एवं वेद ॥ ३ ॥ प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुनाज्योतिषा भाति च तपाति च भा-

ति च तपति च कीर्त्यायशसा ब्रह्मवर्चसेन य एवं वेद॥४॥ चक्षुरेवब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्यायशसा ब्रह्मवर्चसेन य एवं वेद ॥ ४ ॥ श्रोत्रमेवब्रह्मणश्चतुर्थःपादः सदिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद॥ ६ ॥

वाक्प्राणश्चक्षुः श्रोत्रमिति चतुष्पान्म-

नो ब्रह्म तथाग्निर्वायुरादित्योदिगिति चतु-
ष्पादाकाशोब्रह्म एते चोपासने मनो ब्रह्म-
णः पादा आकाशब्रह्मपादैःक्रमेण लब्धस-
त्ताका इति दृष्टिसहिते यः करोति स उक्ता
नि फलानि लभते ॥

इत्यष्टादशखण्डः ।

उपासनान्तरमाहादित्य इति—

आदित्योब्रह्मेत्यादेशस्तस्यो
पव्याख्यानमसदे वेदमग्रआ-
सीत् तत्सदासीत्तत्समभवत्त-
दाण्डं निरवर्त्तत तत्संवत्सरस्य
मात्रामशयततन्निरभिद्यतते
आण्डकपालेरजतं चसुवर्णं चा
भवताम् ॥१॥ तद्यद्रजत ँ से-
यं पृथिवीयत्सुवर्ण ँ साद्यौर्य-

ज्जरायुते पर्वतायदुल्व ँ समेघो-
नीहारोयाधमनयस्तानद्यो य-
द्वास्ते यमुदक ँ स समुद्रः २
अथयत्तदजायत सोसावादि-
त्यस्तं जायमानं घोषाउलूल-
वोनूदतिष्ठन्त्सर्वाणि च भूता-
नि सर्वे च कामास्तस्मात्तस्यो-
दयं प्रतिप्रत्यायनं प्रतिघोषाउ-
लूलवोनूत्तिष्ठन्ति सर्वाणि च
भूतानि सर्वे च कामाः॥३॥ स
य एतमेवं विद्वानादित्यं ब्रह्मे-
त्युपास्तेभ्याशोह यदेन ँ सा-
धवोघोषा आचगच्छेयुरुप च

निम्रेडेरन्निम्रेडेरन् ॥ ४ ॥

पूर्वमुत्पत्तेरिदं जगदनभिव्यक्तनामरूपत्वाद्बीजात्मना स्थितमप्यविद्यमानमिवैवासीत् ततःसदासीदीक्षणविषयोभूत् । ततः सूक्ष्मक्रमेण स्थूलपञ्चभूतात्मकमभूत् ततो ब्रह्माण्डात्मनैकंसंवत्सरंस्थितम् ततोण्डस्यभेदेपूर्वोत्तरकपाले पृथ्वीस्वर्गरूपेजाते अण्डान्तर्गतगर्भस्य यज्जरायु संज्ञं स्थूलं वेष्टनं तत्पर्वतावभूवुः सूक्ष्मं तूल्वसंज्ञंमेघानीहारश्च अथगर्भस्य देहे यानाड्यस्तानद्यः मूत्राशयस्थजलं समुद्रः यश्चगर्भः स आदित्यः अथगर्भोत्पत्तिसमये सर्वप्राणिसर्वविषयोत्पत्तिनिमित्तकामहान्तोघोषाजाता अत इदानीमपि प्रतिदिनमादित्योदये उक्तघोषाजायन्ते यत एवं प्रभावो ब्रह्मात्मजश्चादित्यस्तस्मात्सदादित्यं ब्रह्मेत्युपास्ते यस्तस्याशुमहती सत्कीर्त्तिर्भवति ॥ इत्येकोनविंशति खण्डः ॥

इतिच्छान्दोग्योपनिषत्प्रसादेतृतीयोध्यायः ।

अथ वायुप्राणयोर्ब्रह्मत्वेनोपासनं वक्तुं श्रद्धा धन शुश्रूषाभिर्विनाविद्यानदेयेति सूचिकामाख्या-यिकामाह जानश्रुतिरिति—

जानश्रुतिर्हपौत्रायणः श्रद्धा देयो वहुदायीवहुपाक्यः आस सह सर्वत आवसथान्मापयां चक्रे सर्वत एव मेत्स्यन्तीति ॥ १ ॥ अथहह ५ सानिशायाम् ति पेतुस्तद्धैव ५ ह ५ सोह ५ स-मभ्युवादहोहोयिभल्लाक्षभल्ला-क्षजानश्रुतेः पौत्रायणस्य समं दिवाज्योति राततं तन्माप्रसा-ङ्क्षीस्तत्वामाप्रधाक्षीरिति २ तमुहपरः प्रत्युवाचकम्वर एन

मेतत्सन्तꣳ सयुग्वानमिवरैक्क-
मात्थेति योनुकथꣳ सयुग्वारै
क्क इति ॥३॥ यथाकृतायविजि-
तायविजितायाधरेयाः संयन्
त्येवमेनꣳ सर्वंतदभिसमैति य-
त्किञ्चप्रजाः साधुकुर्वन्ति य-
स्तद्वेद यत्सवेद समयैतदुक्त
इति ॥४॥ तदुहजानश्रुतिः पौ-
त्रायणउपशुश्रावसहसं जिहा-
न एव क्षत्तारमुवाचाङ्गारेह स
युग्वानमिवरैक्कमात्थेति योनु-
कथꣳ सयुग्वारैक्क इति ५ यथा
कृतायविजितायाधरे याः सं-

यन्त्येवमेनᳲसर्वंतदभिसमैति यत्किञ्चप्रजाःसाधुकुर्वन्ति यस्तद्वेदयत्सवेद समयैतदुक्तइति ॥६॥ सहक्षत्ता न्विष्यनाविदमिति प्रत्येयायतᳲहोवाचयत्रारेब्राह्मणस्यान्वेषणा तदेनमर्छेति ॥७॥ सोधस्ताच्छकटस्यपामानं कषमाणमुपोपाविवेशतᳲहाभ्युवादत्वं नु भगवः स युग्वारैक्क इत्यहᳲस्व ३ रा इति ह प्रतिजज्ञे सहक्षत्ताऽविदामिति प्रत्येयाय ॥ ८ ॥

पुत्रस्यपौत्रोजनश्रुतेः पुत्रः कोपिराजा-

वदान्यः स्वराज्ये बहुधर्मशाला द्विजानां दी-
नानां चान्नभोजनाय चकार अथ कदाचिदन्न-
दानतुष्टानां देवानां निशि हर्म्यतलगतं तं
राजानमभ्याकाशे आपततां हंसानां मध्ये
पृष्ठतो गाम्यग्रे सरमुवाच हंसं भो भल्लाक्षास्या
त्र राज्ञो दिनेन तुल्यं प्रभावज्योतिस्तत्र माग-
मो धक्ष्यसे इति ततः कं नु तुच्छंवर्णयसि श-
कटिनं रैक्कमिवेत्युक्त्वा कीदृशः सरैक्क इति पृ-
ष्टोरैक्कधर्मे सर्वे धर्मा अन्तर्भवन्ति यश्च रै-
क्कोपासितविद्यां वेद तद्धर्मेपीतीदृशो रैक्क
इत्युवाचाग्रेसरः एतद्धंसवचःश्रवणेनालब्धं
निद्र उषस्युत्थापनायागतं स्तुवन्तमाह रा-
जा रैक्कोन्विष्यतां शकटीति ततस्सोरण्ये-
न्विष्य शकटस्याधः पामानं कण्डूयमानं दृ-
ष्ट्वोपविश्य त्वमेवरैक्क इति पृष्ट्वारेहमेवेति श्रु-
त्वाऽऽगत्योक्तवान्राजानम् ॥

इति चतुर्थाध्यायस्य प्रथमखण्डः ।

## तदुह जानश्रुतिः पौत्रायणः

षट्शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तꣳ हाभ्युवाद ॥ १ ॥ रैक्वेमानि षट्शतानि गवामयं निष्कोयमश्वतरीरथोनुम एतां भगवो देवता ꣳ शाधियां देवतामुपास्सइति ॥ २ ॥ तमुहपरः प्रत्युवाचाह हारेत्वाशूद्रतवैव सह गोभिरस्त्विति तदुहपुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥ ३ ॥ तꣳ हाभ्युवादरैक्वेदꣳ सहस्रंगवा-

मयं निष्कोऽयमश्वतरीरथ इयं जायायं ग्रामोयस्मिन्नास्से- न्वेव मा भगवः शाधीति॥४॥ तस्याहमुखमुपोद्गृह्णन्नुवाचा जहारेमाः शूद्रानेनैव मुखे नालापयिष्यथा इति तेहैते- रैक्वपर्णानाम महावृषेषु य- त्रास्मा उवास तस्मैहोवाच ५

ततो जानश्रुती राजा भगवन्निमाः षट्श- तानि गाः सुवर्णकण्ठहारमश्वतरीभ्यां युक्तं रथञ्च गृहाणाथ यामुपास्सेतां देवतां ब्रूहि म- ह्यमित्युवाच ततो हंसैस्तिरस्काराच्छुचात्रागमनादरे शूद्रत्वयैवै तानिगृहाणेत्युक्तो रैक्केण स- हस्रं गवां हारं रथं मम कन्यां यत्र वससितं ग्रामञ्चगृहाणेत्युक्तवान् ततस्तानिगृहीत्वो-

वाच विद्यां रैक्कोथ राजा यत्र यत्र सरैक्क उ-
वास तं तं ग्रामं ददौ ते च ग्रामा रैक्कपर्णा
इति ख्याताः ॥ इति द्वितीयखण्डः ॥

राज्ञैरैक्वप्रोक्तसंबर्गविद्यामाख्यायिकां च वायुप्रा-
णस्तुतिपरां वक्तुमाह वायुर्वेति—

वायुर्वावसंवर्गो यदा वा अ-
ग्निरुद्वायति वायुमेवाप्येति
यदा सूर्योस्तमेति वायुमेवाप्ये
ति यदा चन्द्रोस्तमेति वायुमे-
वाप्येति ॥१॥ यदा प उच्छुष्य
न्ति वायु मेवापियन्ति वायुर्ह्ये
वैतान्सर्वान्संवृक्त इत्यधि दैव
तम् ॥ २ ॥ अथाध्यात्मं प्राणो
वाव संवर्गः स यदा स्वपिति प्रा-
णमेव वागप्येति प्राणं चक्षुः

प्राण॰ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान्सर्वान्संवृङ्क्त इति॥३॥ तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषुप्राणः प्राणेषु ४॥ अथह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी विभिक्षे तस्मा उहनददतुः ॥५॥ सहोवाच महात्मनश्चतुरो देव एकः कः सजगार भुवनस्य गोपास्तं कापेयनाभिपश्यन्ति मर्त्या अभिप्रतारिन्वहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्नदत्तमिति॥६॥ त

दुहशौनकः काये यः प्रतिमन्वा-
नः प्रत्येयायात्मा देवानां जनि-
ता प्रजाना ँ हिरण्यद ँ ष्ट्रोव-
भसोऽनसूरिर्महान्तमस्यमाहि
मानमाहुरनद्यमानो यदनन्न
मत्तीति वै वयं ब्रह्मचारिन्नेदमु
पास्महे दत्तास्मैभिक्षामिति ७
तस्माउहददुस्तेवा एते पञ्चा-
न्ये पञ्चान्ये दश सन्तस्तत्कृतं
तस्मात्सर्वासुदिक्ष्वन्नमेव दश
कृत ँ सैषाविराडन्नादीतयेद ँ
सर्वं दृष्ट ँ सर्वमस्येदं दृष्टं भव-
त्यन्नादो भवति य एवं वेद य
एवं वेद ॥ ८ ॥

अन्तेऽग्न्यादयो वायौ लीयन्ते प्राणे च सुप्तौ वागादय इति संवर्गः संवर्जनं स्वस्मिन्लयप्रापणमित्येतद्गुणको वायुश्च प्राणश्च ध्येयः अथ शौनकाभिप्रतारिणौ भोजनायोपविष्टौ कश्चिद् ब्रह्मविन्मानी ब्रह्मचार्य्यन्नं ययाचे तौ च तत्परीक्षार्थं न ददतुः तदोवाच ब्रह्मचारीय एकश्चतुर्णां ग्रसिता भुवनस्य गोप्तायं च बहुधा सन्तमपि मर्त्त्या न पश्यन्ति यदर्थं चान्नं पचन्ते स कः तस्मै युवाभ्यामन्नं न दत्तमिति ततो ब्रह्मचारिणमागत्य भवदुक्तं प्रजापतिं प्राणं वायुं वावयमुपास्महे इत्युक्त्वान्नं दापितवन्तौ ब्रह्मचारिणे अथ द्यूते कृतत्रेताद्वापरकलिसंज्ञकाऽऽयेषु क्रमेण चतुस्त्रिद्व्येकाङ्का भवन्ति ते च मिलिता दश तथाछन्दश्च विराट् दशाक्षराकृताद्यङ्केषु त्रेताद्यङ्का अन्तर्भवन्तीत्यत्त्कृत्वंकृते विराडन्नमिति श्रुतेस्तु विराज्यन्नत्वम् अग्न्यादयश्चत्वारो वागादयश्च वायुःप्राणश्चे-

ति मिलित्वा दशदशादिग्गताः एवञ्च दश संख्या साम्यादग्न्यादिषु कृतत्वं विराट्त्वमन्नत्वमन्नादत्वञ्च ध्येयम् ॥

॥ इति तृतीयखण्डः ॥

अथ कार्यंजगत्कारणेन ब्रह्मणैकीकृत्य षोड़शधा विभज्य तत्र ब्रह्मदृष्टि विधानं श्रद्धातपश्च ब्रह्मोपासनाङ्गमिति सूचिकयाख्यायिकया विवक्षुः खण्डषट्कं वक्तुमुपक्रमते सत्यकाम इति—

सत्यकामो ह जाबालो जबालां मातरमामन्त्रयांचक्रे ब्रह्मचर्यं भवति विवत्स्यामि किं गोत्रोन्वहमस्मीति ॥ १ ॥ सा हैनमुवाचनाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे

साहमेतन्न वेद यद्गोत्रस्त्वम-
सि जबाला तु नामाहमस्मि स-
त्यकामो नाम त्वमसि स सत्य-
काम एव जाबालो ब्रुवीथा इ-
ति ॥ २॥ स ह हारिद्रुमतं गौ-
तममेत्योवाच ब्रह्मचर्यं भगव-
ति वत्स्याम्युपेयां भगवन्तमि-
ति ३ तꣳहोवाच किं गोत्रोनुसो
म्यासीति सहोवाच नाहमेतद्वेद
भो यद्गोत्रोहमस्म्यपृच्छं मा-
तरꣳ सा मा प्रत्यब्रवीद् बह्वहं च-
रन्ती परिचारिणी यौवने त्वा-
मलभे साहमेतन्न वेद यद्गोत्र-

स्त्वमसि जबाला तु नामाहम-
स्मि सत्यकामो नाम त्वमसी-
ति सोह ँ सत्यकामोजाबालो
लोस्मि भो इति ॥ ४ ॥ त ँ हो
वाच नैतद् ब्राह्मणोविवक्तुमर्ह-
ति समिध ँ सोम्याहरोपत्वाने-
ष्ये न सत्यादगा इति तमुपनी-
य कृशानामबलानां चतुःशता
गानिराकृत्योवाचेमाः सोम्या-
नुसंव्रजेति अभिप्रस्थापयन्नु-
वाच ना सहस्रेणावर्त्तयेति स-
हवर्षगणं प्रोवास ता यदा सह-
स्र ँ संपेदुः ॥ ५ ॥

कश्चन सत्यकामोष्टवर्षों गुरुकुलं जिगमिषुर्मातरमुवाच किं गोत्रोहमिति ततो जबालाहं नामतः त्वं च सत्यकाम इत्येव वेद्मि नान्यद्गृहकृत्याकुलतया यौवने तव पितुर्मरणाच्चेति मातुर्वचः पृष्टो गुरुणा गोत्रं प्रत्युवाच ततो गुरुणा ना ब्राह्मण एवं सत्यवाद्यतस्समिधमानयेत्युक्त्वोपनीय कृशानां गवां चत्वारिशतानिसंघात्पृथक्कृत्वेमाः पालयेत्युक्तस्ततो दूरं वनान्तरं गाः कालयन् सहस्रं गावो यावन्नभविष्यन्ति तावन्नागमिष्यामीत्युक्त्वा जगाम ॥ इति चतुर्थखण्डः ॥

अथ हैनमृषभोभ्युवाद सत्यकाम३ इति भगव इतिह प्रतिशुश्राव प्राप्ताः सोम्यसहस्रꣳ स्मप्रापयनआचार्यकुलम् १॥ ब्रह्मणश्च ते पादं ब्रवाणीति ब्र-

वीतु मे भगवानिति तस्मै होवा-
च प्राची दिक्कला प्रतीचीदिक्क-
ला दक्षिणादिक्कलोदीचीदि-
क्कलैष वै सोम्यचतुष्कलः पादो
ब्रह्मणः प्रकाशवान्नाम ॥ २ ॥
स य एतमेवं विद्वा ँ चतुष्कलं
पादं ब्रह्मणः प्रकाशवानित्युपा-
स्ते प्रकाशवानस्मिँल्लोकेभव-
ति प्रकाशवतोह लोकाञ्जयति
य एतमेवं विद्वा ँ चतुष्कलं
पादं ब्रह्मणः प्रकाशवानित्यु-
पास्ते ॥ ३ ॥

ततो बहुवर्षैस्सहस्रं सम्पन्ना गावस्तदा
गुरौ श्रद्धया तत्र तत्र वने गोचारणतपसा

चतुष्टादिग् देवतानुप्रविश्य गवेन्द्रं वृषभमुवाच हे सत्यकाम नः प्रापयाचार्यकुलम् किञ्च चतसृभिर्दिग्भिः कलाभिः चतुष्कलो-नाम पादः प्रथमो ब्रह्मणो द्वितीयं त्वाग्निस्त्वांवक्ष्यतीति ॥

इति पञ्चमखण्डः ।

अग्निष्टे पादं वक्तेति सह श्वो भूते गा अभिप्रस्थापयांचकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥१॥ तमग्निरभ्युवाद सत्यकाम ३ इति भगव इतिह प्रतिशुश्राव ॥२॥ ब्रह्मणःसोम्य तेपादं ब्रवाणीति ब्रवीतु मे भग-

वानिति तस्मै होवाच पृथिवी कलान्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ३॥ स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवत्यनन्तवतो ह लोकाञ्जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥४॥

ततः प्रातर्गुरुकुलं प्रति गाः कालयन्प्रस्थितः पथि यत्र सायं तत्र गा निरुध्याग्निमुपसमाधायोपविष्टः तस्मै तदाग्निरुवाच पृथिव्यन्तरिक्षं द्यौः समुद्र आभिः कलाभिश्च-

तुष्कलोऽनन्तवान्नाम द्वितीयः पादोऽथ तृतीयं हंसो वक्ष्यतीति ॥

इति षष्ठखण्डः ॥

ह॑ सस्ते पादं वक्तेति स हश्वो भूते गा अभिप्रस्थापयांचकार ता यत्राभिसायं बभूवुस्तत्राग्नि मुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥१॥ त॑ ह॑ स उपनिपत्याभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव ॥२॥ ब्रह्मणः सौम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाचाग्निः कलासूर्यः

कलाचन्द्रः कलाविद्युत्कलैष वै सोम्यचतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३ ॥ स य एतमेवं विद्वाꣳ चतुष्कलंपादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतोह लोकाञ्जयाति य एतमेवं विद्वाꣳश्चतुष्कलंपादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ ४ ॥

अथ द्वितीयेन्हि सायं तथैवोपविष्टाय हंस आदित्यआगत्याग्निसूर्यचन्द्राविद्युद्भिः कलाभिश्चतुष्कलो ज्योतिष्मान्नाम पादश्चतुर्थस्तु मद्गुर्वक्ष्यतीत्युवाच ॥ इति सप्तमखण्डः।

मद्गुष्टे पादं वक्तेति सहश्वो भूते गा अभिप्रस्थापयांचकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥१॥ तं मद्गुरुपनिपत्याभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव ॥२॥ ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राणः कलाचक्षुः कला श्रोत्रं कलामनः कलैष वै सोम्य चतुष्कलःपादो ब्रह्मण आयतन

वान्नाम ॥ ३ ॥ स य एतमेवं विद्वा ँ इचतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिँल्लोके भवत्यायतनवतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ ४ ॥

अथ तृतियेन्हि पुनः सायं तथैवोपविष्टाय जलचरपक्षिविशेषमद्गुरूपी प्राणआगत्यप्राणचक्षुःश्रोत्रमनोभिश्चतुष्कलश्चतुर्थ आयतनवान्नाम पाद इति जगाद ॥

इत्यष्टमखण्डः ॥

प्रापहाचार्यकुलं तमाचार्यो भ्युवाद सत्यकाम३इति भगव

इति ह प्रतिशुश्राव ॥ १ ॥ ब्रह्मविदिव वै सोम्य भासि को नु त्वानुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवाꣳस्त्वेव मे कामे ब्रूयात् ॥२॥ श्रुतꣳ ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापतीति तस्मै हैतदेवोवाचात्र ह न किञ्चन वीयायेति वीयायेति ॥ ३ ॥

चतुर्थेन्हि प्राप्तो हे सत्यकाम ब्रह्मविदिव भासिकस्त्वां ब्रह्मोपदिदेशेत्याचार्येण पृष्टः यद्यप्युपादिदिशुर्देवास्तथाप्याचार्येणैवोपदिष्टा समीचीना भवति विद्येति भवानेवोप-

दिशत्विति प्रार्थनया षोड़शकलब्रह्मविद्याम-
वाप पुनर्गुरोः॥

इति नवमखण्डः ॥

अथकार्यें ब्रह्मोपासन सहितं कारणे ब्रह्मोपासनं
पूर्ववदाख्यायिकयावक्तुमाहोपकोसलइति—

उपकोसलो ह वैकामलायनः
सत्यकामे जाबाले ब्रह्मचर्यमुवा
स तस्य ह द्वादशवर्षाण्यग्नीन्
परिचचार सहस्मान्यानन्तेवा
सिनः समावर्तय ७ स्त ७ हस्मै
वन समावर्तयति ॥ १ ॥ तं जा
योवाच तप्तो ब्रह्मचारी कुशल
मग्नीन्परिचचारीन्मात्वाग्न-
यः परिप्रवोचन्प्रब्रूह्यस्मा इति

तस्मैहा प्रोच्यैव प्रवासांचक्रे ॥ २॥ सहव्याधिना नशितुं दध्रे-तमाचार्यजायोवाच ब्रह्मचा-रिन्नशान किं नु नाश्नासीति सहोवाच वहव इमेस्मिन्पुरुषे कामा नानात्यया व्याधिभिः प्रतिपूर्णोस्मिनाशिष्यामीति ॥ ३ ॥ अथहाग्नयः समूदिरेतप्तो ब्रह्मचारी कुशलं नः पर्यचारी द्धन्तास्मै प्रब्रवामेति तस्मैहो-चुः ॥ ४ ॥ प्राणोब्रह्मकंब्रह्मखं ब्रह्मेति सहोवाच विजानाम्यहं यत्प्राणोब्रह्मकं च तुखं च न वि-

जानामीति ते होचुर्यद्वाव कं त-
देव खं यदेव खं तदेव कमिति
प्राणं च हास्मै तदाकाशं चोचुः

ब्रह्मचर्येण द्वादशवर्षाण्युपकोसलोविद्या
कामस्सत्यकामस्योक्तस्याग्नीन्भेजे गुरुस्त्व-
न्यानध्याप्यगृहानगमयन्नोपकोशलं तदास्व
भक्तनिमित्तोऽग्नीनां त्वयिकोपो माभूदुपदिशा
शुविद्यामित्युक्तोपि जाययानुपदिश्यैव देशा-
न्तरं गतः ततोशनंत्यक्त्वाग्न्यगारस्थं गुरु
पत्नीवचसाप्य कृताशनमतीवोद्विग्नमानस-
मुपकोशलमग्नयः कृपया प्राणो ब्रह्म कं ब्रह्म
खं ब्रह्मेत्यूचुः प्राणे प्राणाश्रयेकं सुखं तदा-
त्मके हृदय खे के सुखे च खात्मके अपरि-
छिन्ने ब्रह्मदृष्टिः कार्येति भावः ॥

इति दशमखण्डः ।

प्रत्येकमाग्निभिरुक्तां स्वस्व विद्यां वक्तुमाहखण्ड-
त्रय मथहैनामिति—

अथ हैनं गार्हपत्योनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये पुरुषो दृश्यते सोहमस्मि स एवाहमस्मीति १ ॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उपवयन्तं भुञ्जामोस्मिꣳश्च लोके मुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

॥ इत्येकादशखण्डः ॥

अथहैनमन्वाहार्य पचनोनु-

शशासापोदिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोहमस्मि स एवाहमस्मीति ॥ १ ॥ स य एतमेवं विद्वानुपास्तेप हते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवाति नास्यावरपुरुषाः क्षीयन्त उपवयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

॥ इति द्वादशखण्डः ॥

अथ हैनमाह वनीयोनुश-

शास प्राण आकाशो द्यौर्विद्-
युदिति य एष विद्युति पुरुषो
दृश्यते सोहमस्मि स एवाह-
मस्मीति॥१॥ स य एतमेवं वि-
द्वानुपास्ते प ह ते पापकृत्यां
लोकीभवति सर्वमायुरेति ज्यो
ग्जीवति नास्यावरपुरुषाः क्षी-
यन्त उपवयंतम् भुञ्जामोस्मिꣳ
श्च लोकेऽमुष्मिꣳश्च य एत-
मेवं विद्वानुपास्ते ॥ २ ॥

पृथिव्यग्निरन्नमादित्य इति चतुर्धाहं
स्थितः तत्रादित्येयः पुरुषः सोहं गार्हपत्यः
यो हंस एवादित्ये पुरुषः एवं य उपास्ते मां
ज्ञात्वा सोपापीमल्लोकी पूर्णायुः स्यातः स

सन्तानोऽत्र परत्र च मया पालितो भवतीति गार्हपत्योऽनुशशासोपकोशलम् ॥ आपोदिशो नक्षत्राणि चन्द्रमा इति चतुर्द्धाहं तत्र चन्द्रमसि यः पुरुष इत्यादि पूर्ववद्दक्षिणाग्निः प्राण आकाशो द्यौर्विद्युदिति चतुर्धाहं तत्र विद्युति यः पुरुष इत्यादि पूर्ववदाहवनीयः

इति त्रयोदशखण्डः ॥

ततो यद्वृत्तं तदाहतेहेति—

तेहोचुरुपकोशलैषासोम्यतेऽस्मद्विद्यात्म विद्याचार्यचास्तु ते गतिं वक्तेत्याजगा महास्याचार्यस्तमाचार्योऽभ्युवादोपकोसल इति १ भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति कोनुत्वानुश-

शासेति कोनुमानुशिष्यादिष्वो-
इतीहापेव निन्हुत इमे नूनमी
दृशा अन्यादृशा इतीहाग्नी न
भ्यूदे किं नु सोम्य किल ते वो
चन्निति ॥ २ ॥ इदमिति ह प्र-
तिजज्ञे लोकान्वाव किल सो-
म्य ते वोचन्नहं तु ते तद्वक्ष्या-
मि यथा पुष्करपलास आपो
न श्लिष्यन्त एवमेवं विदि पा-
पं कर्म न श्लिष्यत इति ब्र-
वीतु मे भगवानिति तस्मै हो
वाच ॥ ३ ॥

संभूयादावात्मविद्या ततः प्रत्येकं गार्ह-

पत्यादि विद्या चैषा स्माभिरुक्ता गतिं त्वा-
चार्य एव वक्ष्यतीति संभूयाग्नय ऊचुः तदै-
वागतेनाचार्येण ब्रह्मविद इव ते मुखं भाति
कस्त्वामवोचदिति पृष्टो भवन्तं विना
को ब्रूयादग्नयस्त्ववोचन्नपि नैवावोचन् य-
तो भवन्तमालोक्य सम्प्रति त्रस्ता इवेति
वदन् लोकानेवाग्नयस्तुभ्यमवोचन्न तु सा-
कल्येन ब्रह्माहन्तु तद्वक्ष्यामि यस्य ज्ञानात्प-
द्मपत्रे आप इव विदि पापं न सम्बन्धं या-
तीत्युक्तोथ समनुशिष्टश्च ॥

इति चतुर्दशखण्डः ॥

कथं समनुशिष्ट इत्यत आचार्योक्तिमाह
य एष इति ।

य एषोऽक्षिणि पुरुषो दृश्य-
त एष आत्मेति होवाचैतदमृ-
तमभयमे तद्ब्रह्मेति तद्यद्यप्य
स्मिन्सर्पिर्वोदकं वासिञ्चति

वर्त्मनी एव गच्छति ॥ १ ॥
एत ँ संयद्वाम इत्याचक्षत ए-
त ँ हि सर्वाणि वा मान्यभि-
संयन्ति सर्वाण्येनं वा मान्य-
भिसंयन्ति य एवं वेद ॥ २॥
एष उ एव वा मनीरेषहि सर्वा-
णि वामानि नयति सर्वाणि वा
मानि नयति य एवं वेद ॥ ३ ॥
एष उ एव भामनीरेष हि सर्वे-
षु लोकेषु भाति सर्वेषु लोकेषु
भाति य एवं वेद ॥ ४ ॥ अथ
यदु चैवास्मिञ्छव्यं कुर्वन्ति य-
दि चनार्चिषमेवाभिसंभवन्त्य

र्चिषोहरह्न आपूर्यमाण पक्षमा पूर्यमाण पक्षाद्यान्षडुदङ्ङेति मासा॒ स्तान्मासेभ्यः संवत्सर॒ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान्ब्रह्मगमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं ना वर्त्तन्ते ना वर्त्तन्ते ५

प्रत्येकमग्निभिः कार्यं ब्रह्मोपासनमुक्तं सम्भूय तु प्रथमं चिदात्मकहृदयाकाशे कारणे तथाक्षिपुरुषे कारणे एवाचार्येणापीति बोध्यम् योक्षिगतः पुरुषः स एवात्मामृतत्वादि हेतोर्ब्रह्म ब्रह्मस्थानत्वादेव चाक्षिगतं पक्ष्मावेव गच्छति न ते नाक्षि संव-

ध्यते । यतोक्षिपुरुषं वामानि शोभनानि संयन्त्यायान्त्यंतस्स संयद्वामः तथावामानि प्राणिभ्यः पुण्यफलानि तथादित्यादिरूपेण भामानि प्रकाशान्नयतीति वामनीर्भामनी श्च सः संयद्वामत्वादि गुणकं त य उपास्ते सोपि तं गुणं लभते अथानयाविद्यया या गतिस्सा तु एवं ब्रह्मविन्मृतोऽकृतमरण निमित्तककर्मकोपि देवयानमार्गस्थानर्चिरादि विद्युदन्तसंज्ञकान र्चिराद्यभिमानिनो देवान् गत्वा ब्रह्मलोकादागत्यामानवैः पुरुषैः सत्यलोके नीतो न पुनरावर्त्तत इति ॥

इति पञ्चदशखण्डः ॥

ब्रह्मणः प्रसङ्गेनर्त्विग्विशेषः स्मृतो ब्रह्मेति यज्ञे किञ्चिदाहैष इति—

एष ह वै यज्ञो योयं पवत एष हयन्निद ५ सर्वंपुनाति यदेष यन्निद ५ सर्वं पुनाति तस्मादेष

एव यज्ञस्तस्य मनश्चवाक्च-
वर्तनी ॥ १॥ तयोरन्यतरां म-
नसा स॰ स्करोति ब्रह्मावाचा
होताध्वर्युरुद्गाताऽन्यतरा॰
स यत्रोपाकृते प्रातरनुवाके पु-
रापरिधानीयाया ब्रह्मा व्यव-
वदति ॥ २॥ अन्यतरामेवव-
र्त्तनी॰ स॰ स्करोति हीयतेऽ
न्यतरा स यथैकपाद् ब्रजन् र-
थो वै केन चक्रेण वर्त्तमानो
रिष्यत्येवमस्य यज्ञो रिष्यति
यज्ञ॰ रिष्यन्तं यजमानोनुरि-
ष्यति स इष्ट्वा पापीयान्भव-

ति ॥३॥ अथयत्रोपाकृते प्रात-
रनुवाकेन पुरापरिधानीयाया
ब्रह्माव्यववदत्युभे एव वर्त्तनी
स ँस्कुर्वन्ति न हीयतेन्यतरा
॥४॥ स यथोभयपाद्व्रजन् रथो
वोभाभ्यां चक्राभ्यां वर्त्तमानः
प्रतितिष्ठत्येवमस्ययज्ञः प्रति
तिष्ठति यज्ञंप्रतितिष्ठन्तं यज-
मानोनु प्रतितिष्ठति स इष्ट्वा
श्रेयान्भवति ॥ ५ ॥

यतश्चलन्सदा सर्वं पुनात्यतो वायुरेव
यज्ञो यज्ञस्य सम्पादको ब्रह्मा ऋत्विक् तत्र
ब्रह्मा तु मौनेन मनसैव यज्ञं संस्करोति हो-
त्रध्वर्यूद्गातारस्तु वाचामंत्रोच्चारणेन अथ य-
दिप्रातरनुवाके प्रारब्धे परिधानीयाभिधा-

या ऋचः पूर्वं ब्रह्मामौनं त्यजति तदाभनः पादहान्यास यज्ञो विनश्यति यथैक पात्पु-रुषो रथश्चैक चक्रः तदनु यजमानोपि ता-दृग्यज्ञ करणपापतोन्यथातु न ॥

॥ इति षोडशखण्डः ॥

ब्रह्मकर्ममौनच्युतिप्रसङ्गेन यज्ञच्युतिप्राय
श्चित्तं प्रायश्चित्तविद्ब्रह्मस्तुतिं च वक्तुमाह
प्रजापतिरिति ।

प्रजापतिर्लोकानभ्यतपत्ते-षां तप्यमानाना ँ रसान्प्रावृह-दग्निंपृथिव्यावायुमन्तरिक्षादा दित्यं दिवः ॥१॥ स एतास्ति-स्रो देवता अभ्यतपत्ता सां त-प्यमानाना ँ रसान्प्रावृहदग्ने र्ऋचोवायोर्यजू ँ षि सामान्या दित्यात् ॥२॥ स एतांत्रयीं वि-

द्यामभ्यतपत्तस्यास्तप्यमाना
या रसान्प्रावृहद्भूरित्यृग्भ्यो-
भुवरिति यजुर्भ्यः स्वरिति सा
मभ्यः ॥ ३ ॥ तद्यदृक्तो रिष्ये
द्भूः स्वाहेति गार्हपत्ये जुहुया
दृचामेव तद्रसेनर्चां वीर्येणर्चां
यज्ञस्य विरिष्टꣳ संदधाति ॥४॥
अथ यदियजुष्टो रिष्येद्भुवः
स्वाहेति दक्षिणाग्नौ जुहुयाद्य
जुषामेवतद्रसेन यजुषां वीर्येण
यजुषां यज्ञस्य विरिष्टꣳ संद-
धाति ॥ ५ ॥ अथ यदिसामतो
रिष्येत्स्वः स्वाहेत्याहवनीये

जुहुयात्साम्नामेव तद्रसेनसाम्नां
वीर्येणसाम्नां यज्ञस्य विरिष्टꣳ
संदधाति ॥ ६ ॥ तद्यथालवणे
न सुवर्णꣳ संदध्यात्सुवर्णेन र-
जतꣳ रजतेन त्र पुत्रपुणा सीसꣳ
सीसेन लोहं लोहेन दारु दारु
चर्मणा ॥ ७ ॥ एवमेषां लोका
नामासां देवतानामस्यास्त्रय्या
विद्याया वीर्येण यज्ञस्य विरि-
ष्टꣳ संदधाति भेषजकृतोहवा
एष यज्ञो यत्रैवं विद्ब्रह्मा भव-
ति ॥ ८ ॥ एषह वा उदक् प्र-
वणो यज्ञो यत्रैवं विद्ब्रह्माभव-

त्येवं विद ँ ह वा एषाब्रह्माण मनुगाथा यतो यतआवर्त्तते तत्तद्गच्छति ॥९॥ मानवोब्रह्मैवैक ऋत्विक्कुरूनश्वाभिरक्षत्येवं विद्धवै ब्रह्मा यज्ञं यजमान ँ सर्वा ँ श्चर्त्विजोभि रक्षाति तस्मादेवं विदमेव ब्रह्माणं कुर्वीत नानेवं विदं नानेवं विदम् १०

पूर्वममानवो ब्रह्मालोकादीन् ध्यात्वा ध्यात्वा लोकादिभ्यः सारभागानुद्धृतवान् तथा हि पृथिव्या अग्निमग्नेः ऋचः ऋग्भ्यो भूरिति तथान्तरिक्षाद्वायुं वायोर्यजूंषि यजुर्भ्यो भुव इति तथादिव आदित्यमादित्यात्सामानि सामभ्यः स्वरिति एवं च ऋग्वेदनिमित्तकच्युतौ सत्यामृग्वेदरसमहाव्याहृत्या गा-

र्हपत्येऽग्नौ जुहुयात् एवमन्यच्युति द्वयेपि बोध्यम् । सुवर्णादि त्रुटि संयोजनं यथा क्षारादिनाभवति तथैतद्यज्ञ त्रुटि सन्धानं व्याहृतिभिः । अथसद्वैद्येन नैरुज्यमिव प्रायश्चित्तवित्यत्र मानवो ब्रह्मा सयज्ञो ऽच्छिद्रो देवयानमार्ग प्राप्तिहेतुर्भवति तेन ब्रह्मणा । एकएवचाभिज्ञो ब्रह्मायज्ञर्त्विग्यजमानान्सर्वानभिरक्षति प्रायश्चित्तोपदेशेनेति नानभिज्ञः कार्यो ब्रह्मा ॥

इति च्छान्दोग्योपनिषत्प्रसादे सप्तदशखण्डश्चतुर्थोऽध्यायः ॥

सगुणब्रह्मोपासकानामर्चिराद्युत्तरगतिमुक्त्वा कर्मिणां पितृयानाख्य धूमादिदक्षिणगतिं कर्मोपास्त्युभयहीनानामाश्वा शुजननमरणरूपांगतिं च विवक्षुः ऋत्विजां ब्रह्मणः श्रैष्ठ्य प्रसङ्गेन प्राणश्रैष्ठ्य माह यो हेति—

**योहवै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च हवैश्रेष्ठश्च भवति**

प्राणोवाव ज्येष्ठश्चश्रेष्ठश्च १॥
योहवै वसिष्ठं वेदवसिष्ठोह-
स्वानां भवति वाग्वाववसिष्ठः
॥ २ ॥ योहवै प्रतिष्ठां वेदप्रति
ह तिष्ठत्यस्मिꣳश्च लोके मु-
ष्मिꣳश्च चक्षुर्वाव प्रतिष्ठा ३
योहवै सम्पदं वेदसꣳहास्मै का
माः पद्यन्ते दैवाश्च मानुषाश्च
श्रोत्रंवाव संपत् ॥ ४ ॥ योहवा
आयतनं वेदायतनꣳह स्वानां
भवति मनोहवा आयतनम् ५
अथह प्राणाअहꣳश्रेयसि व्यू-
दिरेहꣳश्रेयानस्म्यहꣳश्रेयान

स्मीति ॥६॥ तेहप्राणाः प्रजा-
पतिं पितरमेत्योचुर्भगवन्कोनः
श्रेष्ठ इति तान्होवाच यस्मिन्व
उत्क्रान्ते शरीरं पापिष्ठतर मि
व दृश्येत सवः श्रेष्ठ इति ७॥
साहवा गुच्चक्राम सा संवत्सरं
प्रोष्यपर्यैत्योवाच कथमशक-
तर्ते मज्जीवितुमिति यथाक-
लाअवदन्तः प्राणन्तः प्राणेन
पश्यन्तश्चक्षुषा शृण्वन्तः श्रो-
त्रेणध्यायन्तो मनसैवमिति प्र
विवेशहवाक् ॥८॥ चक्षुर्हौच्च-
क्रामतत्संवत्सरं प्रोष्यपर्यैत्यो

वाच कथमशकततें मज्जी-
वितुमिति यथान्धा अपश्य-
न्तः प्राणन्तः प्राणेन वदन्तो
वाचा शृण्वन्तः श्रोत्रेणध्याय-
न्तो मनसैवमिति प्रविवेशह
चक्षुः ॥९॥ श्रोत्रꣳहोच्चक्राम
तत्संवत्सरं प्रोष्य पर्यैत्योवाच
कथमशकततें मज्जीवितुमिति
यथाबधिराअशृण्वन्तः प्राण-
न्तः प्राणेन वदन्तो वाचा प-
श्यन्तश्चक्षुषा ध्यायन्तो मनसै-
वमिति प्रविवेशह श्रोत्रम् १०
मनोहोच्चक्रामतत्संवत्सरं प्रो

ष्य पर्यैत्योवाच कथमशकतर्ते
मज्जीवितुमिति यथाबाला अ-
मनसः प्राणन्तः प्राणेन वदन्तो
वाचा पश्यन्तश्चक्षुषा शृण्व-
न्तः श्रोत्रेणैवमिति प्रविवेशह
मनः ॥११॥ अथ ह प्राण उ-
च्चिक्रमिषन्स यथासुहयः प-
ड्वीशशङ्कून्संखिदेदेवमितरा-
न्प्राणान्समखिदत्त ँ हाभिस
मेत्योचुर्भगवन्नेधित्वं नः श्रेष्ठो
सिमोत्क्रमीरिति ॥ १२ ॥ अ-
थैहैनं वागुवाच यदहं वासिष्ठो
स्मित्वं तद्वासिष्ठोसीत्यथहैनं

चक्षुरुवाच यदहं प्रतिप्रतिष्ठा
स्मित्वं तत्प्रतिष्ठासीति १३॥
अथहैन ँ श्रोत्रमुवाच यदह ँ
संपदास्मित्वन्तत्संपदसीत्यथ है
नं मन उवाच यदहमायतनम-
स्मित्वं तदायतनमसीति १४
नवैवाचो न चक्षूषि ँ नश्रोत्राणि
नमना ँ सीत्याचक्षते प्राणा
इत्येवाचक्षते प्राणो ह्येवैतानि
सर्वाणि भवति ॥ १५ ॥

देहे प्रथमजत्वाज्ज्येष्ठत्वं प्राणाधीनस्थि-
तिकत्वाद्वागादीनां श्रेष्ठत्वमित्युभयगुणकः
प्राणः । वसन्ति वासयन्ति च वाक् पटव
इति वाग्वसिष्ठत्वगुणा । दृष्टा च समविषमा-

द्दौ स्थितिं कुर्वन्तीति प्रतिष्ठात्व गुणं चक्षुः श्रुत्वा हि शास्त्रं कर्मणा फलं सम्पद्यते इति सम्पत्त्वगुणंश्रोत्रम् । इन्द्रियैः सर्वविषयवि-ज्ञानानि मनस्याधीयन्ते इत्यायतनत्वगुणं मन इत्येवमुपासकस्तत्तद्गुणफलं लभते । अथेमे प्राणेन सह श्रेष्ठत्वे विवदमानाः य-स्मिन्निर्गते देहोऽस्पृश्योभवेत्स श्रेष्ठ इति ब्र-ह्मणोक्ताः क्रमेण वर्षं निर्गता अपिः शिष्टाः सुखेनस्थिताः प्राणोत्क्रमणसमये तु सर्वे इमे स्थातुमसमर्थाः त्वमेव श्रेष्ठ इति प्राण-मूचुः। वागादिस्वामी श्रेष्ठ्यादि गुणकः प्रा-णोऽहमस्मीतिभावयेदिति भावः ॥

इति पञ्चमाध्याये प्रथमखण्डः ।

सर्वंसर्वैरद्यमानं प्राणस्यान्नं तथापूर्वंपश्चाच्च यदा चमनंभोजनात्तद्वास इति दृष्टिं मन्थाख्यं कर्म च कर्त्तव्यतया प्राणोपासकस्य वक्तुमाह सहेति—

सहोवाच किं मेऽन्नं भविष्य-

तीति यत्किंचिदिदमाश्वभ्यआ
शकुनिभ्य इति होचुस्तद्वाए-
तदनस्यान्नमनो ह वै नाम प्र-
त्यक्षं न हवा एवं विदिकिंच-
नानन्नं भवतीति ॥ १॥ सहो-
वाच किं मेवासो भविष्यती-
त्याप इति होचुस्तस्माद्वा ए
तदशिष्यन्तः पुरस्ताच्चोपरि-
ष्ठाच्चाद्भिः परिदधति लम्भु
कोह वा सो भवत्यनग्नोह भव-
ति ॥ २ ॥ तद्धैतत्सत्यकामो
जावालोगोस्तुतये वैयाघ्रपद्या
योक्त्वोवाच यद्यप्येनच्छुष्का

यस्थाणवे ब्रूयाज्जायेरन्नेवास्मि-
ञ्छाखाः प्ररोहेयुः पलाशानी-
ति ॥ ३॥ अथ यदिमहज्जिग-
मिषेदमावास्यायां दीक्षित्वा
पौर्णमास्या ँ रात्रौ सर्वौषधस्य
मन्थं दधिमधुनोरुपमथ्यज्ये-
ष्ठायश्रेष्ठायस्वाहेत्यग्नावा-
ज्यस्यहुत्वामन्थे संपातमवन
येत् ॥४॥ वसिष्ठायस्वाहेत्य
ग्नावाज्यस्यहुत्वामन्थेसम्पात
मवनयेत्प्रतिष्ठायै स्वाहेत्य-
ग्नावाज्यस्यहुत्वामन्थेसम्पात-
मवनयेदायतनाय स्वाहेत्यग्ना

वाज्यस्य हुत्वामन्थे सम्पातम
वनयेत् ५ अथ प्रतिसृप्याञ्ज-
लौ मन्थमाधाय जपत्यमो ना-
मास्यमा हि ते सर्वमिद ँ स हि
ज्येष्ठः श्रेष्ठो राजाधिपतिः
स मा ज्यैष्ठ्य ँ श्रैष्ठ्य ँ राज्य-
माधिपत्यं गमयत्वहमेवेद ँ
सर्वमसानीति ॥ ६ ॥ अथ ख-
ल्वेतयर्चा पच्छ आचामति तत्स
वितुर्वृणीमह इत्याचामति वयं
देवस्य भोजन मित्याचामति
श्रेष्ठ ँ सर्वधातममित्याचा-
मति तुरं भगस्य धीमहीति सर्वं

पिबति निर्णिज्यक ँ संचमसं-
वापश्चादग्नेः संविशतिचर्म्मणि
वा स्थण्डिलेवा वाचं यमोप्रसा
हः स यदि स्त्रियं पश्येत्समृद्धं
कर्मेति विद्यात् ॥७॥ तदेषश्लो-
को यदाकर्मसु काम्येषु स्त्रि-
य ँ स्वप्नेषुपश्यति समृद्धिं
तत्र जानीयात्तस्मिन्स्वप्ननि-
दर्शने तस्मिन्स्वप्ननिदर्शने ८

प्राणोपासनं यदि स्थाणुरपि कुर्यात्तर्हि
ततोपि शाखादीनि प्ररोहेयुरिति प्रशंसा ।
अथमहत्त्वकामः पूर्वं नियमं विधाय पूर्णिमा
यां यथा शक्ति अन्विष्यग्रामारण्यौषधीनां
किंचित्किंचिद्भागमादायापिष्ट्वौदुम्बरे पात्रेनि-
निधाय तत्राज्याहुति सम्पातंकृत्वाग्नेस्स-

काशात्किंचित्पृथग्भूत्वा तत्पात्रमञ्जलौकृत्वा मन्त्रं जपेत् ततः पिष्टं त्रिः पिबेत्ततः पात्रं प्रक्षाल्य सर्वं पीत्वाग्नेः पश्चाद्भागे पूर्वशिरा मौनी भूमौ शयानः स्वप्ने स्त्रियं यदि पश्येत्तर्हि सफलं काम्यं कर्म कृतं जानीयात् ॥

इति द्वितीयखण्डः ।

अथाग्निविद्यां विवक्षुर्मुमुक्षुवैराग्याय संसारगतीनां प्रदर्शिकामाख्यायिकामाह

श्वेतकेतुरिति—

श्वेतकेतुर्हारुऽऽणेयः पञ्चालाना॰ समितिमेयाय त॰ ह प्रवाहणो जैवलिरुवाच कुमारानु त्वाशिषत्पितेत्यनु हि भगव इति ॥ १ ॥ वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति वेत्थ यथा पुनरावर्तन्त ३ इति न

भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना३ इति न भगव इति ॥२॥ वेत्थ यथासौ लोको न सम्पूर्यत३इ- ति न भगव इति वेत्थ यथा प- ञ्चम्यामाहुतावापः पुरुषव- चसो भवन्तीति नैव भगवइति ॥ ३ ॥ अथानु किमनुसिष्टोऽ वोचथायो ही मानिन विद्या- त्कथ॰ सोनुसिष्टो ब्रुवीतेति स- हायस्तः पितुरर्धमेयायत ॰ हो वाचानतु शिष्यवावाकिलमा भगवानब्रवीदनुत्वाशिषमिति

॥४॥ पञ्चमाराजन्यवन्धुः प्र-
श्नानप्राक्षीत्तेषां नैकंच नाश-
कं विवक्तुमिति सहोवाच य-
थामात्वं तदैतानवदो यथाहमे
षां नैकं च न वेद यद्यहमिमा-
नवेदिष्यं कथं तेनावक्ष्यमि-
ति ॥५॥ सहगौतमोराज्ञोर्धमे-
याय तस्मैहप्राप्तायाहीं चकार
सहप्रातःसभागउदेयायत ᳕ हो
वाच मानुषस्य भगवन्गौतम
वित्तस्यवरं वृणीथाइति सहो-
वाच तवैव राजन्मानुषं वित्तंया
मेव कुमारस्यान्ते वाचमभाष-

थास्तामेव मेब्रूहीति सह कृ-
च्छ्रीबभूव ॥६॥ त ᳙ हचिरं व-
सेत्याज्ञापयांचकार त ᳙ होवा
च यथामात्वं गौतमावदोयथे
यं न प्राक्त्वत्तः पुराविद्या ब्रा-
ह्मणान्गच्छति तस्मादु सर्वेषु
लोकेषु क्षत्रस्यैव प्रशासनमभू
दिति तस्मैहोवाच ॥ ७ ॥

पञ्चालदेशीय सभायामागतमारुणिसुत
श्वेतकेतुं प्रवाहणो राजा हेकुमारपितुः सि-
ष्योसीत्युवाच ततोस्मिशिष्य इत्युक्तो स्मा-
ल्लोकात्प्रजायद्गच्छन्ति ॥ १ ॥ पुनश्चात्र
यथा यान्ति ॥ २ ॥ तथाकर्म्युपासकयोर्द-
क्षिणोत्तरमार्गार्थिनोर्यतो वियोगोभवति ३

किञ्चपितृलोको यथा न पूर्णो भवति ।४।
तथापुनः पुनर्हुता आपः पञ्चम्यामाहुतौ
यथापुरुषा भवन्ति ॥ ५ ॥ तज्जानासी-
त्युक्तवान् ततः श्वेतकेतुर्नेत्युक्त्वा कथं
तर्ह्यनुशिष्टोस्मि पित्रेत्युक्तं त्वये त्युक्तो
राज्ञापितरमुवाचगत्वा कथं नुपितस्सर्वम-
याठयंत्वामित्यवोचद्भवान् यतोराज्ञः प-
ञ्चप्रश्नेश्वेकमपि वक्तुमहं नाशकमिति त-
तः पिताहमपिनजानामीत्युक्त्वा तमेवप्रवा-
हणं गतोराज्ञासत्कृतः श्वः सभांगतो भग-
वन्मनुष्यो पयोगिधनं याचस्वेत्युक्तो मम
पुत्रं यत् पृष्टवानसितदेवधनं देहीत्युवाच
ततोब्राह्मणोयं विद्या च न विना शुश्रूषादिदे-
येति कृच्छ्रंगतो राजावत्सरं वसेत्युक्त्वा क्ष-
त्रियेष्वेवेयं विद्यास्थिता ऽतऊर्ध्वन्तु ब्राह्म-
णानपि गमिष्यतीत्याश्राव्यवत्सरान्ते ता-
मुवाचतस्मै ॥

इति तृतीयखण्डः ।

इतरोत्तराणां पञ्चमोत्तर संबन्धित्वेन पंचम प्रश्नोत्तरमेवादौ वदति पंचभिः खण्डैः ।

असौवावलोको गौतमाग्नि स्तस्यादित्य एवसमिद्रश्मयो धूमोहरर्चिश्चन्द्रमाअङ्गारान-क्षत्राणि विस्फुलिङ्गाः ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धांजुव्हति तस्याआहुतेः सोमोराजा संभवति ॥ २ ॥

इति चतुर्थखण्डः ।

पर्जन्योवाव गौतमाग्निस्त-स्यवायुरेव समिदभ्रं धूमोवि-द्युदर्चिरशनिरङ्गारा ह्रादन-योविस्फुलिङ्गाः ॥ १ ॥ त-

स्मिन्न्ने तस्मिन्नग्नौदेवाः सो-
म ँ राजानंजुव्हति तस्याआ-
हुतेर्वर्ष ँसंभवति ॥ २ ॥

इति पंचमखण्डः

पृथिवीवाव गौतमाग्निस्त-
स्याः संवत्सर एव समिदाका
शोधूमोरात्रिरर्चिर्दिशोङ्गारा
अवान्तरादिशोविस्फुलिङ्गाः
॥ १ ॥ तस्मिन्न्ने तस्मिन्नग्नौ
देवावर्षंजुव्हति तस्या आहुते
रन्न ँ संभवति ॥ २ ॥

इति षष्टखण्डः

पुरुषोवावगौतमाग्निस्तस्य

वागेव समित्प्राणोधूमोजिव्हा
र्चिश्चक्षुरङ्गाराः श्रोत्रंविस्फु-
लिङ्गाः ॥ १ ॥ तस्मिन्ने त-
स्मिन्नग्नौ देवाअन्नं जुव्हति
तस्याआहुतेरेतः संभवति॥२॥

इति सप्तमखण्डः

योषावावगौतमाग्निस्तस्या
उपस्थ एव समिद्यदुपमन्त्र-
यते सधूमोयोनिरर्चिर्यदन्तः
करोतितेङ्गारा अभिनन्दावि-
स्फुलिङ्गाः ॥ १ ॥ तस्मिन्ने
तस्मिन्नग्नौदेवारेतो जुव्हति
तस्या आहुतेर्गर्भः संभवति॥२॥

अग्निहोत्रे श्रद्धयाहुता आज्याद्यापोपूर्वरूपसूक्ष्मरूपेण जीवैकतांगताद्युलोकाग्नौ सोमरूपेण परिणता भवन्ति सोमावयवाश्चापः पर्जन्याग्नौ वृष्टिरूपेण वृष्टिरन्नात्मना पृथिव्याग्नौ अन्नं च पुरुषाग्नौ रेतोरूपेण तच्चस्त्रियामग्नौ गर्भात्मना ॥

इत्यमष्टमखण्डः ।

पञ्चमप्रश्नोत्तरमुपसंहरन्नन्यदपि वैराग्यायाहेतीति ॥

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति सउल्वावृतोगर्भो दश वा नव वा मासानन्तःशयित्वायावद्वाथ जायते॥१॥सजातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यतएवेतोयतः संभूतो भवति ॥ २ ॥

एवमापः पुरुषशब्द वाच्या भवन्ति पुरुषश्चोदरे मातुर्मलमूत्राशये नव दश वा मासान्स्थित्वा जातश्चायुषोन्ते मृतः पुनरग्नावेव नीयते यतोऽग्निभ्य एवोक्तरीत्योत्पन्नः ॥

इति नवमखण्डः ।

अथैवमग्निभ्यः प्रजातप्रजासंबन्धिनामस्मा-
ल्लोकात्प्रजायद्गच्छन्तीत्यादि प्रश्नानामुत्तरं
वक्तुमाह तद्य इति ॥

तद्य इत्थं विदुः ये चे मेऽरण्ये श्रद्धातप इत्युपासते तेर्चिषमभिसंभवन्त्यर्चिषोहर-ह्न आपूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासा ए स्तान् ॥ १ ॥ मासेभ्यः संवत्सर ए संवत्स-रादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो वि-द्युतं तत्पुरुषो मानवः स एनान्ब्रह्मगमयत्ये-षदेवयानः पन्था इति ॥ २ ॥ अथ य इमे-ग्रामइष्टापूर्त्तेदत्तामित्युपासते ते धूममभिसं भवन्ति धूमाद्रात्रि ए रात्रेरपरपक्षमपरपक्षा-द्यान्षड्दक्षिणैति मासा ए स्तान्नैते संवत्स-रमभिप्राप्नुवन्ति ॥ ३ ॥ मासेभ्यः पितृ-लोकं पितृलोकादाकाशाच्चन्द्रमसमेषसोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति ॥ ४ ॥ तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पु-नर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वा-युर्भूत्वाधूमो भवति धूमोभूत्वाऽभ्रं भवति॥५॥

अभ्रं भूत्वा मेघो भवति मेघोभूत्वा प्रवर्षति त इह व्रीहियवा ओषधि वनस्पतयस्तिल-माषा इति जायन्तेऽतो वै खलुदुर्निष्प्रप-तरं यो योह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति ॥ ६ ॥ तद्य इह रमणीयचरणा अभ्याशोहयत्ते रमणीयां योनिमापद्येरन्ब्राह्म-णयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽ-थय इह कपूयचरणा अभ्याशोहयत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिम्वा ॥ ७ ॥ अथैतयोः प-थोर्नकतरेण चनतानीमानि क्षुद्राण्यसकृ-दावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वे-त्येतत्तृतीय ᳵ स्थानं तेनासौ लोको न संपू-र्यते तस्माज्जुगुप्सेत तदेष श्लोकः ॥ ८ ॥ स्तेनोहिरण्यस्य सुरां पिव ᳵ श्चगुरोस्तल्प-मावसन्ब्रह्महाचैते पतन्ति चत्वारः पञ्चम-श्चाचर ᳵ स्तैरिति ॥९॥ अथ ह य एतानेवं पञ्चाग्नीन्वेदनसहतैरप्याचरन्पाप्मनालि-

प्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥ १० ॥

द्युलोकादयः पञ्चाग्नयः तेभ्यो जातत्वाद्वयमप्यग्निस्वरूपा इत्युपासका ये गृहस्थाः येचनैष्ठिका ब्रह्मचारिणः श्रद्दधानाः तथा वानप्रस्थास्तथा लिङ्गमात्रसाराः संन्यासिनो वा तपस्व्युपासकास्तेर्चिरादिमार्गेण सत्यलोकं यान्ति अथ ये श्रौतस्मार्त्तकर्ममात्रनिष्ठाः ते धूमादिमार्गेण संवत्सररहितेन चन्द्रमण्डलं प्राप्य यावत्सुकृतं तत्रोषित्वा पुनस्तेनैव मार्गेणाकाशादिक्रमेणाकाशादि रूपाभूत्वा भूत्वावरोहन्तोन्नरेतोरूपास्सन्तः संचितेषु शुभानां फलोन्मुखत्वे सपदि शुभां योनिमन्यथात्वशुभां प्रपद्यन्ते अथोपास्तिश्रौतस्मार्त्तकर्मभ्यां भ्रष्टास्तूक्तमार्गद्वयमस्पृश्यैवेहैवा श्वाशुक्षुद्रजन्तु—योनिषु जननमरणगतिं तृतीयां लभन्ते एवमावृत्तिमत्वा त्तिस्रोपि गतयो निन्द्या एवातिकष्टदाः। अथ गताः पुनरायान्ति कर्मोपास्तिहीनास्तु न यान्त्यतः पितृलोको न पूर्यत इति चतुर्थमुत्तरम्। मार्गाभ्यां सत्यचन्द्रलोकौ यान्तीत्युक्त्या प्रथमम्। चन्द्रमण्डलादवरोहणोक्त्या द्वितीयम्। कर्म्युपा-

सकयोर्दाहो मरणं च समानोदाहानन्तरन्त्वेको-
दक्षिणमुत्तरमेको यातीति वियोगः पुनश्च मास-
स्थाने संयुज्य ततः कर्मी तु पितृलोकमुपासकस्तु
संवत्सरं यातीति वियोग इति तृतीयमुत्तरम् ।
अथ ब्राह्मणहिरण्यहर्त्ता १ ब्राह्मणस्सुरापी २
मातृगामी ३ ब्रह्महा ४ एषां संसर्गेणापि न प-
तति पञ्चाग्निविद्यः ॥

इति दशमखण्डः ।

अथ विद्यायादानमादानं च यथा कार्य्यं त-
त्सूचिकयाख्यायिकया वैश्वानरविद्यामभिधातु-
माह प्राचीनेति ॥

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौ-
लुषिरिन्द्रद्युम्नो भाल्लवेयोजनः शार्कराक्ष्यो
बुडिलआश्वतराश्विस्ते हैते महाशाला महा
श्रोत्रियाः समेत्य मीमाꣳसांचक्रुः को न आ-
त्मा किं ब्रह्मेति ॥ १ ॥ तेह सम्पादयांचक्रु-
रुद्दालको वै भगवन्तोयमारुणिः सम्प्रतीम-
मात्मानं वैश्वानरमध्येति तꣳहन्ताभ्याग-
च्छामेति तꣳहाभ्याजग्मुः ॥ २ ॥ सहसं-

प्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥ १० ॥

द्युलोकादयः पञ्चाग्नयः तेभ्यो जातत्वाद्वयमप्यग्निस्वरूपा इत्युपासका ये गृहस्थाः येचनैष्ठिका ब्रह्मचारिणः श्रद्दधानाः तथा वानप्रस्थास्तथा लिङ्गमात्रसाराः संन्यासिनो वा तपस्व्युपासकास्तेर्चिरादिमार्गेण सत्यलोकं यान्ति अथ ये श्रौतस्मार्त्तकर्ममात्रनिष्ठाः ते धूमादिमार्गेण संवत्सररहितेन चन्द्रमण्डलं प्राप्य यावत्सुकृतं तत्रोषित्वा पुनस्तेनैव मार्गेणाकाशादिक्रमेणाकाशादि रूपाभूत्वा भूत्वावरोहन्तोन्नरेतोरूपास्सन्तः संचितेषु शुभानां फलोन्मुखत्वे सपदि शुभां योनिमन्यथात्वशुभां प्रपद्यन्ते अथोपास्तिश्रौतस्मार्त्तकर्मभ्यां भ्रष्टास्तूक्तमार्गद्वयमस्पृश्यैवेहैवा श्वाशुक्षुद्रजन्तुयोनिषु जननमरणगतिं तृतीयां लभन्ते एवमावृत्तिमत्वा त्तिस्रोपि गतयो निन्द्या एवातिकष्टदाः। अथ गताः पुनरायान्ति कर्मोपास्तिहीनास्तु न यान्त्यतः पितृलोको न पूर्यत इति चतुर्थमुत्तरम्। मार्गाभ्यां सत्यचन्द्रलोकौ यान्तीत्युक्तया प्रथमम् । चन्द्रमण्डलादवरोहणोक्त्या द्वितीयम् । कर्म्युपा-

सकयोर्दाहो मरणं च समानोदाहानन्तरन्त्वेको-
दक्षिणमुत्तरमेको यातीति वियोगः पुनश्च मास-
स्थाने संयुज्य ततः कर्मी तु पितृलोकमुपासकस्तु
संवत्सरं यातीति वियोग इति तृतीयमुत्तरम् ।
अथ ब्राह्मणहिरण्यहर्त्ता १ ब्राह्मणस्सुरापी २
मातृगामी ३ ब्रह्महा ४ एषां संसर्गेणापि न प-
तति पञ्चाग्निविद्यः ॥

इति दशमखण्डः ।

अथ विद्यायादानमादानं च यथा कार्य्यं त-
त्सूचिकयाख्यायिकया वैश्वानरविद्यामभिधातु-
माह प्राचीनेति ॥

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौ-
लुषिरिन्द्रद्युम्नो भाल्लवेयोजनः शार्कराक्ष्यो
वुडिलआश्वतराश्विस्ते हैते महाशाला महा
श्रोत्रियाः समेत्य मीमा ᳪ सांचक्रुः को न आ-
त्मा किं ब्रह्मेति ॥ १ ॥ तेह सम्पादयांचक्रु-
रुद्दालको वै भगवन्तोयमारुणिः सम्प्रतीम-
मात्मानं वैश्वानरमध्येति त ᳪ हन्ताभ्याग-
च्छामेति त ᳪ हाभ्याजग्मुः ॥ २ ॥ सहसं-

पादयांचकार प्रक्ष्यन्ति मामिमे महाशाला-
श्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये ह-
न्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥ तान्हो-
वाचाश्वपतिर्वै भगवन्तो यं कैकेयः संप्रती
ममात्मानं वैश्वानरमध्येति त ँ हन्ताभ्या-
गच्छामेति त ँ हाभ्याजग्मुः ॥ ४ ॥ तेभ्यो-
ह प्राप्तेभ्यः पृथगर्हाणिकारयांचकार सह-
प्रातः संजिहान उवाच नमेस्ते नो जनपदेन
कदर्यो नमद्यपो नानाहिताग्निर्ना विद्वान्न-
स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तो
हमस्मि यावदेकैकस्मात्त्विजे धनं दास्या-
मितावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त
इति ॥ ५ ॥ ते होचुर्येनहैवार्थेन पुरुषश्चरे-
त्त ँ हैववदेदात्मानमेवेमं वैश्वानर ँ संप्र-
त्यध्येषितमेव नो ब्रूहीति ॥ ६ ॥ तान्होवाच
प्रातर्वः प्रतिवक्तास्मीति तेहसमित्पाणयः
पूर्वाह्णे प्रतिचक्रमिरेतान्हानुपनीयैवैतदु-
वाच ॥ ७ ॥

प्राचीनशालः सत्ययज्ञ इन्द्रद्युम्नो जनो बुडिल एतेधनविद्यावन्तः क आत्मा किं ब्रह्मभेदोनयोरभेदोवेति मिथो विचारयन्तोप्यनिश्चित्येममात्मानं वैश्वानरं जानाति स इत्युद्दालकं जग्मुः सोपि तथैवाश्वपतिं राजानं तैस्सह जगाम राजा तु सत्कृत्य तान्परेद्युः प्रातरुवाच भो ब्राह्मणाः धर्मोत्रदेशेनाधर्म इति कृत्यभावाद्यज्ञं चिकीर्षुरस्मि वसन्तु भवन्तोपि दिदृक्षया धनं च लप्स्यते ततस्तेयदर्थमागतास्तदेव देहीति प्रार्थनयाश्वस्तर्हि वैश्वानरमात्मानं वक्ष्यामीत्युक्ताः समित्पाणयो गतास्तदातानुवाच राजाभिसमीक्ष्य गताभिमानात्॥

इत्येकादशखण्डः ।

औपमन्यवकं त्वमात्मानमुपास्स इति दिवमेवभगवो राजन्निति होवाचैष वैसुतेजा आत्मावैश्वानरोयं त्वमात्मानमुपास्से तस्मात्तवसुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धात्वेष आत्मन इतिहो-

वाच मूर्धा ते व्यपतिष्यद्यन्मां नागमिष्य इति ॥ २ ॥

इति द्वादशखण्डः ।

अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते ॥ १ ॥ प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धो भविष्यो यन्मां नागमिष्य इति ॥ २ ॥

इति त्रयोदशखण्डः ।

अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कं त्वमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्व-

ल्य आयन्ति पृथग्रथश्रेणयोऽनुयन्ति ॥१॥
अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं
भवत्यस्य ब्रह्मवर्चसं कुलेय एतमेवमात्मानं
वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इतिहो-
वाच प्राणस्तउदक्रमिष्यद्यन्मां नागमिष्य
इति ॥ २ ॥

इति चतुर्दशखण्डः ।

अथ होवाच जन ७ शार्कराक्ष्य कं त्वमा-
त्मानमुपास्स इत्याकाशमेव भगवोराजन्निति
होवाचैष वै वहुलआत्मा वैश्वानरोयं त्वमा-
त्मानमुपास्सेतस्मात्त्वं वहुलोसि प्रजयाच
धनेन च ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियम-
त्स्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं
कुलेयएतमेवमात्मानं वैश्वानरमुपास्ते स-
न्देहस्त्वेष आत्मन इति होवाच सन्देह-
स्तेऽव्यशीर्यद्यन्मां नागमिष्य इति ॥ २ ॥

इति पञ्चदशखण्डः ।

अथ होवाच बुडिलमाश्वतराश्विं वैयाघ्रपद्यकं त्वमात्मानमुपास्स इत्यप एव भगवोराजन्निति होवाचैषवैरयिरात्मा वैश्वानरोयं त्वमात्मानमुपास्से तस्मात्त्व ऽरयिमान्पुष्टिमानासि ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुलेयएतमेवमात्मानं वैश्वानरमुपास्तेवस्तिस्त्वेषआत्मन इति होवाच वस्तिस्तेव्यभेत्स्यद्यन्मां नागमिष्य इति ॥२॥

इति षोड़शखण्डः ।

अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवोराजन्निति होवाचैषवै प्रतिष्ठात्मा वैश्वानरोयं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोसि प्रजया च पशुभिश्च ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुलेयएतमेव मात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन । इति होवाच पादौ

ते ऽयम्लास्येतां यन्मां नागमिष्य इति ॥२॥

अथ प्राचीनशालप्रभृतिष्वागतेषु षट्सु प्रत्येकं कमात्मानं वैश्वानरं त्वमुपास्से इति पृष्ट्वा श्रुत्वा चोपांस्यं बाढमतएवैतत्फलं त्वयिदृश्यते इत्याद्युक्तंवापरत्त्वेतत्त्वदुपास्यं वैश्वानरस्यै तदङ्गं न तु वैश्वानरः तथा चैकस्याङ्गस्यास्य पृथक्करणागत्त्वाप्ये तदङ्गभङ्गो भाव्यतः सुष्ठुक्तं यन्मामागत इत्युवाचाश्वपतिः अयम्भावः द्यौरादित्यो वायुराकाशश्चापः पृथिवीचेति षट्षणामुपास्तेर्विषयाः क्रमेण सुतेजाविश्वरूपः पृथग्वर्त्मा वहुलोरयिः प्रतिष्ठा इति संज्ञका वैश्वानराः प्रधान वैश्वानस्य मूर्द्धाचक्षुः प्राणो मध्यदेहो मूत्राशयः पादावित्ययवा इति ॥

इति सप्तदशखण्डः ।

अथाङ्गिसमस्तवैश्वानर विद्यां वक्तुमाह

तानिति—

तान्होवाचैते वै खलुयूयं पृथगिवेममात्मानं वैश्वानरं विद्वा ए सोन्नमत्थयस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमु-

पास्ते ससर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वा-
त्मस्वन्नमात्ति ॥ १ ॥ तस्य हवा एतस्या-
त्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्व-
रूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो
वस्ति रेव रयिः पृथिव्येव पादावुर एव वे-
दिर्लोमानि वर्हिर्हृदयं गार्हपत्यो मनोन्वा-
हार्यपचनआस्य माहवनीयः ॥ २ ॥

अहमहमित्याभिमुख्येन स्फुरन्तं प्रत्यगात्मानं द्युमूर्द्धादि पृथिवी पादान्तं रूपप्रदेशैर्मितमेकं त्रैलोक्यात्मकं सर्वात्मकत्वेन सर्वनररूपत्वाद्वैश्वानर संज्ञकं परमात्मानं यो भावयति ससर्वात्मा सन्सर्वत्रान्नमत्ति ॥

इत्यष्टादशखण्डः ।

अथ वैश्वानर विद्याङ्गं प्राणाग्निहोत्रं दर्शयति पंचभिः खण्डैः—

तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीय ए सयां
प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वा-
हेति प्राणस्तृप्यति ॥ १ ॥ प्राणे तृप्यति

चक्षुस्तृप्यति चक्षुषितृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधि तिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येनतेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इत्येकोनविंशतिखण्डः ।

अथयां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति ॥ १ ॥ व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधि तिष्ठन्ति तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति विंशतिखण्डः ।

अथयां तृतीयां जुहुयात्तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति ॥ १ ॥ अपाने तृप्यति वाक् तृप्यति वाचि तृप्यन्त्यामग्नि-

स्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इत्येकविंशतिखण्डः ।

अथयां चतुर्थीं जुहुयात्तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥ समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधि तिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति द्वाविंशतिखण्डः ।

अथ यां पञ्चमीं जुहुयात्तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥ उदाने तृप्यति त्वक् तृप्यति त्वचि तृप्यन्त्यां वा-

युस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्या-
काशे तृप्यति यत्किञ्च वायुश्चाकाशश्चाधि
तिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्र-
जया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसे-
नेति ॥ २ ॥

ममोरःस्थलमेव स्थण्डिलं तत्र लोमान्येवा स्तीर्णकुशाः हृन्मनोमुखान्येव गार्हपत्याऽन्वाहार्यपचनाहवनीयाग्नय इति बुद्ध्योपासको भोजनकाले प्रथमं प्राणाय स्वाहेत्यादिनाममन्त्रैः प्राणव्यानापानसमानोदानेभ्यः स्वभोज्यान्ने नावदानप्रमाणेनैकैकाहुतिं स्वमुखे कुर्यात्तेन प्राणादीनां तृप्तिर्भवत्युपासकस्य च प्रजादिफललाभेन ॥

इति त्रयोविंशतिखण्डः ।

वैश्वानरविद्यां तदङ्गाग्निहोत्रं च स्तौतिसय-
इत्यादि खण्डेन—

स य इदम विद्वानग्निहोत्रं जुहोति यथा-
ङ्गारानपोह्य भस्मनिजुहुयात्तादृक् तत्स्यात् १
अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य

सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥ तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैव ँ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥ ३ ॥ तस्मादु हैवं विद्यद्यपि चण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुत ँ स्यादिति तदेष श्लोकः ॥ ४ ॥ यथेह क्षुधिता बाला मातरं पर्युपासत एव ँ सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ५

प्रसिद्धाग्निहोत्रस्य कर्त्ताल्पफलं लभते विद्यया सह तदङ्गाग्निहोत्रस्य कर्त्ता तु विद्यायामङ्गेचोक्तानि फलानि सकलाघहानिं च किञ्च चाण्डालायाप्युच्छिष्टं दत्वा न पापेन लिप्यते सत्यप्युच्छिष्टदाननिषेधे यत आत्मनो वैश्वानरत्वेनोपासक एव भुङ्क्ते चाण्डालात्मनापि अतएव सर्वभूततृप्तिरस्योपासकस्य भोजनेनाग्निहोत्ररूपेणोच्यते ॥

इति छान्दोग्योपनिषत्प्रसादे पञ्चमध्याये चतुर्विंशतिखण्डः पञ्चमोध्यायश्च ॥

श्रीगणेशाय नमः ।

लाघवं राघवं रामं वासुदेवं मनोहरम् ।
सर्वाद्यन्तमजं शान्तं शिवमद्वैतमाश्रये ॥१॥

अत्र तावन्नचलन्नीरगतप्रतिबिम्बो बिम्ब-प्रतिबिंबस्वरूपनिर्द्धारणोपयोगीति चित्तसमाधानादिफलकानेकविधोपासनानीश्वरेण सामवेदीयच्छान्दोग्योपनिषद्ध्याय पंचकेनोक्त्वाथपरमार्थतो खण्डसदद्वितीय चिद्वस्तुप्रतिपादमेच्छायामेकवैश्वानरोपासकभोजनेन सर्वभूततृप्तिमनन्तरोक्तां विनात्मैकत्वमघटमानां मन्यमानेनात्मैकत्वं यथा तदर्थं षष्ठप्रपाठकमुपाददता तत्रतावदरुणापत्यमारुणिरुद्दालकः श्वेतकेतोः पितातदाऽऽख्यायिकोपादीयते विश्वासमनः समाधानाभ्यामद्वैतसतत्वाववोधसौकर्याय श्वेतकेतुर्हेति ।

श्वेतकेतुर्हाऽऽरुणेय आस तꣳह पितोवाच श्वेतकेतो वस ब्रह्मचर्यं नवै सौम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिवभवतीति ॥१॥

ब्रह्मचर्यमध्ययनाय गृहाण गुरुकुले ।

हे सौम्य प्रियमूर्ते यतो न कोपि मत्कुलजोन-धीत्य ब्राह्मणवृत्तिशून्योस्ति ॥१॥

अनन्तरवृत्तान्तमाह स इति ।

स ह द्वादशवर्ष उपेत्य चतुर्वि ँ शतिवर्षः सर्वान्वेदानधीत्य महामना अनूचानमानी-स्तब्ध एयाय त ँ ह पितोवाच श्वेतकेतो यन्नु सोम्येदं महामना अनूचानमानीस्तब्धोस्यु ततमादेशमप्राक्ष्यः ॥ २ ॥

श्वेतकेतुर्गुरुमुपेत्य द्वादशभिर्वर्षैश्चतुरो वेदान-धीत्य स्वसर्वज्ञत्वयुक्तमनाः अध्ययनप्राप्तगर्वः अनम्रस्वभावो गृहमागतवान् ।

यद्यस्मादीदृशोसीति उ तर्कयामि तत इदं ब्र-वीमि तमुततमथादेशमुपदेशं कदाचिद् गुरुं पृ-ष्टवानसि ॥ २ ॥

तं कमित्यपेक्षायामाह येनेति ।

येनाश्रुत ँ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति । कथं नु भगवः स आदेशो भवतीति ॥ ३ ॥

येनादेशेन श्रुतेनोहितेन निश्चितेनेत्यर्थः ।

अथ चकितः पुत्र आह भगवन्कथं केन प्रकारेण स इति ॥ ३ ॥

प्रकारमाह पिता यथेति ।

यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञात ँ स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ॥ ४ ॥

ज्ञातेन कारणेन मृद्रूपेण सर्वं मृत्कार्यं ज्ञायते यतो घटपटादिविकारो नामैव वचनेनोच्चारणमात्रं न तु मृदोन्यत्किंचित्सद्वस्तु ॥ ४ ॥

निश्चयायान्यदपि दृष्टान्तद्वयमुक्त्वोपसंहराति यथेति ।

यथा सोम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञात ँ स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ॥ ५ ॥ यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञात ँ स्याद्वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यमेव ँ सोम्य स आदेशो भवतीति ॥ ६ ॥

लोहमणिर्हेम ५ नखच्छेदनशस्त्ररूपकृष्णालोहेन । प्रथमदृष्टान्तवदन्यत् । एवमेतद्दृष्टान्तप्रकारेण । समदुक्तः ॥ ६ ॥ पुत्र उवाच नेति ।

न वै नूनं भगवन्तस्त एतदवेदिषुर्यद्ध्येतदवेदिष्यन्कथं मेनावक्ष्यन्निति भगवाँस्त्वेव मेतद्ब्रवीत्विति तथा सोम्येति होवाच ॥७॥

तेमद्गुरवो नैतद्भवदुक्तं वस्तु जानन्ति कथमन्यथा शिष्याय मे नोक्तवन्तस्तस्माद्भवानेव ब्रवीत्विति। अथ तथास्तु वदिष्यामीत्युवाच पिता॥७॥

इतिच्छान्दोग्योपनिषत्प्रसादे षष्ठाध्यायस्य प्रथमः खण्डः ॥

अथैकज्ञानेन सर्वज्ञानतासिद्धये सर्वस्य कार्यतैकस्य कारणता चोच्यते सदेवेति—

सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम् तस्मादसतः सज्जायत ॥ १ ॥

इदमिदमिदमिति गृह्यमाणमखिलं जगदग्रेपूर्वमुत्पत्तेः सदेवसत्तामात्रं नत्विदं तदित्यादि किंचिद्वचनार्हम् यतस्तदातत्सदेकमेवाद्वितीयं क्रमेण

सजातीयस्वगतविजातीयभेदैः शून्यम् चिन्मात्रकारणात्मकमासीदिति भावः। एके बौद्धास्तुतत्कारणमाहुः असदेवाभावमात्रं पूर्वं ततः सदिदञ्जगदजायतेति ॥ १ ॥

बौद्धमतासंभवेन स्वमतं द्रढ़यति कुत इति ।

कुतस्तु खलु सोम्यैवꣳ स्यादिति होवाच कथमसतः सज्जायेतेति । सत्त्वेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ २ ॥

कुतः कस्मात्प्रमाणादेवमभावाद्भावोत्पत्तिः स्यादप्रमाणमिदं मतमिति भावः । किञ्च कथं जायेत तदानीमुपादानान्तरस्या सत्त्वेनाभावस्योपादानतायाश्चासंभवादिति भावः ॥ २ ॥

सदद्वैतत्वाय सृष्टिमाहतदैक्षतेति ।

तदैक्षत बहु स्यां प्रजायेयेति तत्तेजो सृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोसृजत। तस्माद्यत्र क्व च शोचति स्वेदते-वा पुरुषस्तेजसएव तदध्यापो जायन्ते ॥३॥

अनादिजविक्रमाभिरुद्बुद्धशक्तिकं तत्सदीश्वराभिधमालोचितवदहं बहु भवेयं कथमित्याकाङ्-

क्षायां प्रकर्षेण तत्तद्रूपेणोत्पद्येयेति । ततस्तत्स-
त्तेजः ससर्ज मृद्घट इव तेजोरूपं बभूव तत्तेजो
सृजतेत्यतः प्राक् आकाश समीरसृष्ट्यनन्तरनि-
त्यध्याहार्यम् कदाचित्तेजआदिकैव सृष्टिरिति वा
भावः । अथ तेजः स्वरूपेणोच्चणं कृत्वाऽपः ससर्ज ।
यस्मादापस्तैजस्यस्तस्मात्पुरुषो यदा कदाचिच्छोक
प्रस्वेदयुतो भवति तत्तदा तापतेजस एवापोधि-
जायन्त इति ज्ञेयम् ॥ ३ ॥

भूत्पत्तिमाह ता इति ।

ता आप ऐक्षन्त वह्यः स्याम प्रजायेमहीति
ता अन्नमसृजन्त तस्माद्यत्र क्व च वर्षति
तदेव भूयिष्ठमन्नं भवत्यद्भ्य एव तदध्यन्नाद्यं
जायते ॥ ४ ॥

सदाऽऽत्मिका आपोन्नं भुवं ससृजुः यस्मादबू-
जमन्नं तस्माद्यत्र वृष्टिस्तत्रैव वह्वन्नं भवति । न-
भूमात्रं किन्तु तदन्नाद्यं व्रीहियवादिकमप्यद्भ्य
एवाधिजायते ॥ ४ ॥

इति द्वितीयखण्डः ।

भूतसृष्टिमुक्त्वा भौतिकसृष्ट्यर्थमाह तेषामिति ।

तेषां खल्वेषां भूतानां त्रिण्येव वीजानि भवन्त्यण्डजं जीवजमुद्भिज्जमिति ॥ १ ॥

तेषामनन्तराध्यायोक्तानां जीवानाम् । अण्डजानामण्डजं जरायुजानां जरायुजमुद्भिज्जानामुद्भिज्जं वीजं कारणमिति विवेकः ॥ १ ॥

वीजान्येव सृष्ट्यादौ कथं प्रसिद्धानीत्यत आह सेयमिति—

सेयं देवतैक्षतहन्ताह मिमास्तिस्रोदेवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति ॥ २ ॥

सोक्ता सद्रूपाहन्तेदानीमिमास्तेजोवन्नाख्या जीवरूपेण प्रविश्य तत्तन्नामरूपे अभिव्यक्ते कुर्यामित्यैक्षत ॥ २ ॥

कथमकरोत्तदाह तासामिति ।

तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवते मास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत् ॥ ३ ॥

तासां तिसृणामेकैकां त्रिगुणां कुर्यामित्यनुस-

न्धायतेजोवन्नानि प्रत्येकं द्विधा विधायैकैकार्द्धं तूष्णी त्यक्त्वा द्वितीयार्द्धानि पुनः प्रत्येकं द्विधा विधाय स्वस्वेतरयोस्तूष्णीं त्यक्तयोरर्द्धयोर्योजनेन स्थूली-कृततेजोवन्नैः स्थूलदेहं निर्माय तत्र जीवेनाऽत्रि वृत्कृतभूतत्रयरचितलिङ्गदेहेन सचित्प्रतिबिंबेन प्रविश्याभिव्यक्तिं गत्वा देवदत्तादिनाम्नो रूपस्या कृतेश्चाहन्ताममताध्यासेनाभिव्यक्तिकृदभवदि-त्यर्थः ॥ ३ ॥

अथ देहभावमगतेषु तेजोवन्नेषु त्रिवृत्कृतत्व संभावनायाह तासामिति—

तासां त्रिवृतं त्रिवृतमेकैकामकरोत् यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृ-देकैका भवति तन्मे विजानीहीति ॥ ४ ॥

यद्यप्येकैकां त्रिवृतमकरोत्तथापि यथा तेजो-वन्नेषु प्रत्येकं त्रिवृत्कृतत्वं बुद्ध्यारूढं स्याच्तद्वर्णनं मे मत्तस्त्वं जानीहि । इतिः पूर्तौ ॥ ४ ॥

इति तृतीयखण्डः ।

वर्णनमुपक्रमते यदग्नेरिति—

यदग्ने रोहित ए रूपं तेजसस्तद्रूपं य-

च्छुक्लं तदपां यत्कृष्ण तदन्नस्य अपागा-
दग्नेरग्नित्वम् वाचारम्भणं विकारो नामधेयं
त्रीणि रूपाणीत्येव सत्यम् ॥ १ ॥

त्रिवृत्कृतत्वेन स्थूलस्येन्धनोपाधि संवन्धेन
चक्षुर्विषयस्याग्नेः रक्तादिरूपमत्रिवृत्कृतानां रू-
परसगन्धात्मकानां तेजोवन्नानामस्तीति रूपत्र-
याभावेऽग्निर्नाम न किंचिद्दृश्यत इति गतमग्नित्वम्
तथा च विकारः कार्यमग्निः वचनेनाभिव्यक्तम-
ग्निरित्याकारकनाममात्रम् । रूपाणि कारणमेव
सत्यं वस्त्वित्यर्थः ॥ १ ॥

प्रपञ्चाय पर्यायान्तराण्याह यदादित्यस्येत्यादिना।

यदादित्यस्य रोहित रूपं तेजसस्त-
द्रूपं यच्छुक्लं तदपां यत्कृष्ण तदन्नस्य अ-
पागादादित्यादादित्यत्वं वाचारम्भणं वि-
कारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्॥२॥
यच्चन्द्रमसो रोहित रूपं तेजसस्तद्रूपं य-
च्छुक्लं तदपां यत्कृष्ण तदन्नस्य अपागा-
च्चन्द्राच्चन्द्रत्वं वाचारम्भणं विकारो नामधेयं
त्रीणि रूपाणीत्येव सत्यम् ॥ ३ ॥ यद्विद्यु-

तोरोहित ँ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्ण तदन्नस्य अपागाद्विद्युतो विद्युत्त्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥ ४ ॥

यद्यदुपादानकं न तत्ततोतिरिच्यत इत्येषां भावोर्थाश्च पूर्ववत् । २ । ३ ॥ ४ ॥

प्राचामप्येवमेव निश्चय इत्याहैतदिति—

एतद्धस्म वै तद्विद्वा ँ सआहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदा हरिष्यतीति ह्येभ्यो विदां चक्रुः ॥ ५ ॥

हि यत एभ्योऽग्न्यादि दृष्टान्तेभ्योऽखिलं परमकारणसद्रूपं विदितवन्तो तस्तत्साद्विद्वांसः पूर्वे प्राचीना महाशालाः कुलीना एतदाहुः हस्मवै । किम् । नोस्माकं कश्चनकोप्यद्यकिमपि वस्त्वविज्ञातं न वदिष्यतीति । उपदेशपरम्परया परमकारणतया सर्वं ज्ञास्यन्तीति भावः ॥ ५ ॥

पूर्वे महान्तो यद्यद्वस्तु पश्यन्तिस्म तत्र तत्राग्न्यादिष्विव भौतिकत्वमेव विदितवन्त इत्याहयद्विति—

यद्रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदांचक्रुर्यदु शुक्लमिवाभूदित्यपाᳪ रूपमिति तद्विदां चक्रुर्यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदां चक्रुः ॥ ६ ॥

अथादृष्टमपि सर्वं जागतं वस्त्वेव मे तेषां भूतानामेव समुदाय इति ज्ञातवन्त इत्याहयद्विति ॥

यद्वऽविज्ञातमिवाभूदित्येतासामेव देवतानाᳪ समास इति तद्विदां चक्रुः ॥७॥

समासः समुदायः ॥ ७ ॥

पुरुषोदरगतेष्वन्नादौ यथा ते त्रिवृत्त्वं निश्चितवन्तस्तथात्वं मत्तोजानीहीत्याह यथेति—

यथानु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैकाभवति तन्मे विजानीहीति ॥ ८ ॥

देवतास्तेजोवन्नानि । इतिः समाप्तौ ॥ ८ ॥

इति षष्टाध्यायस्य चतुर्थःखण्डः ।

प्रत्येकं तेजोवन्नमयत्वमाहान्न मित्यादित्रिभिः ।

अन्नमशितं त्रेधाविधीयते तस्य यः स्थविष्ठोधातुस्तत्पुरीषं भवति योमध्यमस्तन्मा-

७ संयोणिष्ठस्तन्मनः ॥ १ ॥ आपः पीता स्त्रेधा विधीयन्ते तासां यः स्थविष्ठोधातु-स्तन्मूत्रं भवति योमध्यमस्तल्लोहितं योणिष्ठः स प्राणः ॥ २ ॥ तेजोऽशितं त्रेधाविधीयते तस्य यः स्थाविष्ठोधातुस्तदस्थि भवति यो मध्यमः समज्जायोणिष्ठः सावाक् ॥ ३ ॥

त्रेधा विधीयते जाठराग्निवायुभ्यां स्थूलाल्प स्थूलातिसूक्ष्मरूपास्त्रयो भागाः क्रियन्ते धातु-र्द्रव्यं भाग इति यावत् । लोहितं रुधिरम् । ते-जोघृतादि । मज्जास्थ्यन्तर्गतो धातुः । भक्ष्यपेय घृतादिभिः क्रमेण मनःप्राणवचनेषु सामर्थ्या तिशयप्रसिद्धेर्मनआदीनामन्नादिकार्यत्व मनु मतमिति भावः । १ । २ ॥ ३ ॥

मनआदीनामन्नादि कार्यत्वे संशया दाहान्नेति ।

अन्नमय ७ हि सोम्यमन आपोमयः प्रा-णस्तेजोमयीवागिति भूय एव मा भगवा-न्विज्ञापयत्विति तथा सौम्येति होवाच ॥४॥

इति यदुक्तं तद्भूयः पुनर्मां वोधयतु भवा-

नितिप्रच्छकमुवाच पिता तथास्तु सोम्य श्वेत-केतो इति ॥ ४ ॥

इति पञ्चमःखण्डः ।

प्रागप्रतीतोपि नवनीतरूपोदध्नः सूक्ष्मभागो मन्थनेनोपरिगतो भवति कालान्तरे च घृतं भवति यथा तथान्नादीनामपि जाठराग्निवायुभ्यां मन्थनेन पृथग्भूताणुभागामनआदिरूपेण परिणता भवन्तीत्याह दध्न इत्यादि चतुर्भिः ।

दध्नःसोम्यमथ्यमानस्य योणिमास ऊर्ध्वः समुदीषति तत्सर्पिर्भवति ॥ १ ॥ एव मेव खलु सोम्यान्नस्याश्यमानस्य योणिमास ऊर्ध्वः समुदीषति तन्मनो भवति ॥ २ ॥ अपा ँ सोम्य पीयमानानां योणिमास ऊर्ध्वः समुदीषति सप्राणो भवति ॥ ३ ॥ तेजसः सोम्याश्य मानस्य योणिमास ऊर्ध्वः समुदीषति सावाग्भवति ॥४॥ १। २। ३ ॥४॥

अन्नेन प्राणादावपि बलोपलम्भान्मन एव कथमन्नमयमिति संशय्यानन्तरखण्डान्त्यमाहान्नेति—

अन्नमय ँ हि सोम्यमन आपोमयः प्राण-
स्तेजोमयी वागिति भूयएव मा भगवान्वि-
ज्ञापयत्विति तथा सोम्येति होवाच ॥५॥

उक्तोर्थः ॥ ५ ॥ इति षष्ठःखण्डः ।

अन्नेन मनोमनस चाखिलं प्राणादि शक्तिमद्भ-
वतीति सर्वाः शक्तयः पुरुषस्यान्नजाएवेति द-
र्शयितुमुपक्रमते षोड़शेति—

षोड़शकलः सोम्यपुरुषः पञ्चदशाहानि
माऽशीः काममपः पिवाऽऽपोमयः प्राणो
न पिवतो विच्छेत्स्यत इति ॥ १ ॥ स ह
पञ्चदशाहानि नाऽऽशाथ हैनमुपससाद किं
ब्रवीमि भो इत्यृचः सोम्य यजू ँ षिसामा-
नीति सहोवाच नवैमाप्रतिभान्ति भो इति २

हे सोम्य षोड़शभिर्दिनैः पूर्णश्चन्द्र इव पूर्ण-
शक्तिः पुरुषोपि षोड़शकलः तस्मात्पंचदश दि-
नानि त्वं माभुङ्क्ष्व जलं तु यथेष्टं पिव तेन प्रा-
णो न नङ्क्ष्यति यत आपोमयः इत्युक्तं पित्रा ॥१॥
श्रुत्वा सश्वेतकेतुः पुत्रः नाश न भुक्तवानथ षोड़-
शेह्नि एनं पितरं जगाम किं ब्रवीमिभोः पित

इत्युक्तवानथर्ग्यजुःसामानि ब्रूहीति सपितोवाच ततो न मामांप्रति तानि भान्ति मनस्यायान्ति भो इति पुत्रः ॥ २ ॥

पितुरुक्तिमाहतमिति—

त९ होवाच यथा सोम्यमहतोऽभ्याहितस्यै कोङ्गारः खद्योतमात्रः परिशिष्टःस्यात्तेन ततोपिनवहुदहेदेव९ सोम्य ते षोडशानां कलानामेकाकलातिशिष्टास्यात्तयै तर्हिवेदान्नानुभवस्य शानाथ मे विज्ञास्यसीति ॥ ३ ॥

हे सोम्याभ्याहितस्येन्धनदीप्तस्य महदग्नेः खद्योतकीटपरिमाणएकोङ्गारः शिष्टोयदाभवेत्तदा तेनाङ्गारेण ततोप्यङ्गारादप्यल्पं वस्तु न वहुसाकल्येन दह्येत यथा तथेदानीन्तवैककलामात्रस्य न वेदाभान्तीति भुङ्क्ष्वतावदथानन्तरं मे वचनेन सर्वं ज्ञास्यसीति तं पुत्रमुवाच ॥ ३ ॥

अथ पुत्रकृतिमाह सहेति—

सहाऽऽशाऽथ हैनमुपससादत९ हयत्किंचपप्रच्छ सर्व९ हप्रतिपेदे ॥ ४ ॥

स पुत्रआशभुक्तवानथैनं पितरं गतः तं पिता यत्पप्रच्छ तत्सर्वमुक्तवान् ततः ॥ ४ ॥

त ँ होवाच यथा सोम्य महतोभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्राज्वलयेत्तेन ततोपि वहुदहेत् ॥५॥ एव ँ सोम्य ते षोड़शानां कलानामेका कलातिशिष्टाभूत्साऽन्नेनोपसमाहिताप्राज्वाली तयै तर्हि वेदाननुभवस्यन्नमय ँ हि सोम्य मन आपोमयः प्राणस्तेजोमयीवागिति तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ६ ॥

हे सोम्य यद्यग्नेः शिष्टमं शं तृणैः सहितं कृत्वा प्रज्वालयेत्तर्हि तेनाग्निनाधिकमपि वस्तु दहेत्पुरुषस्तथा ते वशिष्टैककलाऽन्नेन प्रज्वलितातस्तया प्रज्वलितया कलया समर्थेन मनसेति यावत् वेदान्स्मरसि तस्मादन्नमयं मनइत्युवाच पिता ततस्तात्पितुरुक्तमन्नमयत्वादिमनआदेर्ज्ञातवान् श्वेतकेतुः ॥ ६ ॥

इति सप्तमःखण्डः ।

एकविज्ञानेन सर्वविज्ञानाय सतः सकाशात्सृष्टि-

मभिधायात्मनः सदात्मतां तद्विज्ञान फलंवो-
धयिष्यन्नुपक्रमते उद्दालक इति ।

उद्दालकोहाऽऽरुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा संपन्नो भवति तस्मादेनं ँ स्वपितीत्याचक्षते स्व ँ ह्यपीतो भवति ॥ १ ॥

हे सोम्य स्वप्नस्य सुषुप्तेरन्तं स्वरूपं मे मत्तस्त्वं जानीहि । मनोदेहादिव्यापारैः श्रान्तो श्रमाय यत्र यदैषपुरुषः स्वपिति । नामप्रसिद्धमेतत् । तदा सद्ब्रह्म तेनाविद्याऽऽवृते नैकतां याति स्थूलसूक्ष्मोपाध्यभिमानाभावात्सस्स्वरूपतां यातीति भावः । सत्स्वरूपमेव वस्तुतः स्वस्वरूपमतः स्वमपीतो भवति स्वस्वरूपतामेव गच्छति । हि यतः स्वमपीतो भवति तस्मादेनं पुरुषं स्वपितीति वदन्ति॥१॥

स्वस्वरूपाश्रयणमन्तरेण न सुखाय किंचिदिति
सदृष्टान्तमाह स यथेति—

स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्र-

यत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वान्यत्राऽऽयतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनꣳहि सोम्य मन इति ॥ २॥

व्याधबद्धः पक्षी दिक्षु पतन्नलब्धशरणो बन्धनदेश एव विश्राम्यति यथैवं जाग्रत्स्वप्नयोः श्रान्तं मनः प्राणं प्राणतादात्म्यं सुषुप्तिमेव श्रयते । हि यतो मनः प्राणाधीनम् । मनस्तादात्म्यमापन्नो जीवः स्वजीवनहेतुप्राणं विस्त्रचैतन्यं तदा श्रयते तदुपसत्तिं यातीति यावत् ॥ २ ॥

प्रकारान्तरेण सत्स्वरूपं दिदर्शयिषुराहाशनेति ।

अशना पिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषो शिशिषति नाम आप एव तदशितं नयन्ते तद्यथा गोनायोश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितꣳसोम्य विजानीहिनेदममूलं भविष्यतीति ॥ ३ ॥

अथाशितुं पातुमिच्छे त्वं जानीहि । यदा यं पुरुषोश्नाति पिबति तदा तदन्नमापोरसरूपं कुर्वन्ति । अतएव ता अपः अशनाया इति वदन्ति गोपालं

गोनायमिव । अथ तत्रान्नरसे एतच्छरीरं शुङ्ग-मङ्कुरमुत्पन्नम् तथा चेदं शरीरं कार्यत्वान्ननि-र्मूलमिति जानीहि ॥ ३ ॥

तर्हि किं मूलमिति पुत्राकाङ्क्षायामाह तस्येति ।

तस्य क्व मूलꣳस्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनापोमूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छतेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छसन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रातिष्ठाः ॥४॥

तस्य शरीरस्यान्नादन्यत्र क्व मूलं स्यादन्न-मेव मूलं कारणं देहस्येति भावः । एवं तत्तत्का-र्येण तत्तत्कारणान्वेषणं कुर्वन्परमकारणं सदन्वि-च्छतथा च सर्वजगतः कारणं स्थितिकाले आय-तनमाश्रयोन्ते प्रतिष्ठालयस्थानं च सदेवेत्यर्थः॥४॥

उक्तार्थमेव दार्ढ्याय वैशद्येन पुनः कथयन्प्रा-णेन्द्रियादीनां शरीरान्तरे गमनप्रकारं कथ-यत्यथेत्यादि द्वाभ्याम्—

अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोश्वनायः

पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतित ँ सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ५ ॥ तस्य क मूल ँ स्यादन्यत्राद्भ्योऽद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छतेजसा सोम्यशुङ्गेन सन्मूल-मन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः यथा नु खलु सोम्येमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवति अस्य सोम्यपुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ॥ ६ ॥

पीतं जलादि जाठरं तेजः शोषणादिनारक्तादिभावं नयत्यतस्तेज उदन्या इति वदति जनः। तत्र रक्तादिभावे एतच्छरीरमेवोत्पन्नं कार्यं जानीहीत्यादि पूर्ववज्ज्ञेयम् ॥ ५॥ पुरुषेण भुक्तानि तेजोवन्नानि देवताः प्रत्येकं त्रिवृदिति पूर्वमेवोक्तं भवति । अथ प्रयतो म्रियमाणस्यान्तकाले वागादि लीयते मनोमात्रव्यापारवान्भवति ततः प्रा-

णमात्रचेष्टातदभावेप्यौष्ण्यं देहे तस्यापि परस्यां परमात्मनि स्वकारणे सदात्मके सुषुप्ताविव लये मृत इत्युच्यते ॥ ६ ॥

एवं प्रबोधितं सदेवत्वमित्याह सय इति—

स य एषोणिमा ऐतदात्म्यमिद ँ सर्वं तत्सत्य ँ स आत्मातत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ७ ॥

योणिमासूक्ष्मता परमकारणं सत् एतद्रूपतैव सर्वं जगदिति सदेवसत्यमात्माचेति सदेवत्वमसि इति श्रुत्वाऽसंभावनाविपरीतभावनाभ्यामेवं चेत्सति लीनो भवामीति कुतो न जानन्तीति संशयग्रस्तत्र्याह पुनर्मां बोधयत्विति । तथास्त्वित्युवाच ततः पिता ॥ ७ ॥

इत्यष्टमःखण्डः ।

उक्तसंशयमपाकरोति यथेत्यादि त्रिभिः—

यथा सोम्य मधुमधुकृतोनिस्तिष्ठन्ति नानात्पयानां वृक्षाणा ँ रसान्समवहारमेकता ँ रसं गमयन्ति ॥ १ ॥ ते यथा तत्र न

विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्मीत्येव-
मेव खलु सोम्येमाः सर्वाः प्रजाः सति सं-
पद्यनविदुःसति संपद्यामह इति ॥ २ ॥ त
इह व्याघ्रो वा सि ९ हो वावृकोवावराहोवा-
कीटो वा पतङ्गो वाद ९ शोवामशको वा यद्य-
द्भवन्ति तदा भवन्ति ॥ ३ ॥

मधुकृतो मक्षिकाः मधुकुर्वन्ति नामानैकदि-
ग्गतानां वृक्षाणां रसानेकत्रनयन्ति तत्रैकीभावे
यथा ते रसारूपरसगन्धैर्न विविच्यन्ते तद्वत्सद-
सद्विवेकहीना एवाहरहः सतिलीयन्ते अतएव सु-
षुप्तेः प्राग्व्याघ्रोहमित्यादिकायायस्य वासना सै-
वोत्थितस्यानुवर्तते । सतिसद्विवेकेन लयेतुमुक्ति-
रेव स्यादिति भावः । १ । २ ॥ ३ ॥

उक्तार्थकमेवाह स य इति—

स य एषोणिमा ऐतदात्म्यमिद ९ सर्वं त-
त्सत्य ९ स आत्मातत्त्वमसि श्वेतकेतो इति
भूय एव मा भगवान्विज्ञापयत्विति तथा सो-
म्येति होवाच ॥ ४ ॥

सतिलयश्चेत्पूर्वं लये वा तज्ज्ञानाभावेप्युत्थि-

तस्य सत आगच्छामीति वोधोगृहादागच्छामीति वक्तुतोनेति । संशयः पुनः प्रश्ने वीजम् ॥४॥

इति नवमःखण्डः ।

सतोपरिज्ञानमेवोक्तविधवोधाभावेपि हेतुरिति सर्वं पूर्ववदाहेमा इति त्रिभिः—

इमाः सोम्य नद्यः पुरस्तात्प्राच्यःस्यन्दन्ते पश्चात्प्रतीच्यः ताः समुद्रात्समुद्रमेवा पियन्ति समुद्र एव भवति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ॥ १ ॥ एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छाम ह इति तइह व्याघ्रो वासिꣳहोवावृकोवावराहोवाकीटो वा पतङ्गो वा दꣳशो वा मशको वायद्यद्भवन्ति तदा भवन्ति ॥ २ ॥ स य एषोणिमा ऐतदात्म्यमिदꣳसर्वं तत्सत्यꣳस आत्मातत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ३

प्राग्धारानद्यः पुरस्तात्पूर्वादिशि प्रत्यग्धाराश्च पश्चिमदिशि या वहन्ति ता मेघद्वारा समुद्रादेवा-

गत्य समुद्रमेव यान्तीति ताः सर्वा अपि समुद्र एव भवत्यथापि ता न विदुरित्यादि पूर्ववत्। एवमपि भुवोजाता घटादयो भुवि लये विनश्यन्ति नत्व-हरहश्शयने मरणे वा जीवा इति संशयो बीजं पुनः प्रश्ने ॥ १ । २ । ३ ॥

इति दशमःखण्डः ।

जीवो नाम चिदाभासः स च नाऽनाद्यविद्याकार्यं सवासनादि लिङ्गं विहायास्ति लिङ्गं च स्थूलं वि-नेति संघातो जीवो वृक्षादिवत् वृक्षश्च नाल्पघाते नश्यति किन्तु मूलमर्मान्यतएतिघात एवैवं जीवोपीत्युत्तरयितुमाहास्येति त्रिभिः ।

अस्य सोम्य महतो वृक्षस्य यो मूलेभ्या-हन्याज्जीवन्स्रवेद्यो मध्येभ्याहन्याज्जीवन्स्रवे-द्योऽग्रेभ्या हन्याज्जीवन्स्रवेत्स एष जीवेनात्म-नाऽनु प्रभूतः पेपीयमानो मोदमानस्तिष्ठति १ अस्य यदेका शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यति एवमेव खलु सोम्य विद्धीति

होवाच ॥ २ ॥ जीवापेतं वावकिलेदं म्रियते न जीवो म्रियत इति स य एषोणिमैतदात्म्यमिद ँ सर्वं तत्सत्यं स आत्मातत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ३

मूलादिष्वाघाते रसमात्रं स्रवति वृक्षस्तु जीवात्मना व्याप्तः पादैः पिबन्हृष्ट एव तिष्ठति ॥१॥ अथ जीवेन लिङ्गशरीरेण क्रमशस्त्यक्तस्तु शुष्यत्येव । तथा निद्रामात्रेण सुप्तौ सदाश्रयाविद्याऽऽवरणरूपलय एव न मृतिः ॥२॥ अथात्यन्तमसंघातादिना जीवेन लिङ्गात्मना रहितं त्विदं स्थूलशरीरं म्रियते वृक्षवदेव। जीवोलिङ्गं तुन म्रियते किन्तु जन्मान्तरं लभते । जीवत्वनिवृत्तिस्तु मूलाविद्यानिवृत्त्यैवेति भावः । अविद्यानिवृत्तिस्त्वविद्याश्रयचिद्बिम्बविद्ययैवेति स य एषोणिमेत्यादि पूर्ववत् । नन्वतिस्थूलंजगत्सत्त्वति सूक्ष्ममिति न तयोः कार्यकारणभावः संभवति तथा च दुर्घटाचिद्बिम्बस्य सतो विद्येति संशये पृच्छति भूयो भूय इति ॥ ३ ॥

इत्येकादशःखण्डः ।

स्थूलं प्रतिसूक्ष्मस्य कारणतां प्रत्यक्षयति न्यग्रोधेत्यादि—

न्यग्रोधफलमत आहरेतीदं भगव इति भिन्द्धीति भिन्नं भगव इति किमत्र पश्यसी-त्य एव्य इवेमाधाना भगव इत्यासामङ्गैकां भिन्द्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति ॥ १ ॥ तꣳ होवाच यं वै सोम्यैतमणिमानं ननिभालयस एतस्य वै सोम्यैषोणिम्न एवं महान्यग्रोधस्तिष्ठति श्रद्धत्स्वसोम्येति ॥ २ ॥ स य एषोणिमै तदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥

अतो वटवृक्षादेकं फलमानय पुत्र । आनीतमिदं भगवन् । विदारय फलम् । विदीर्णम् । फलान्तः किं पश्यसि । सूक्ष्मा इव धानावीजानि पश्यामि । हेङ्गैकं वीजं भिन्द्धि । भिन्नम् । वीजमध्ये किं पश्यसि । न किमपि ॥ १ ॥ यं वी-

जमध्ये स्थितमपि परमाणुभागं न पश्यसि ए-
तस्यैव सूक्ष्मकारणस्यायं महावट एवं शाखादि
प्रकारेण कार्यं वर्त्तते तः सतो जगज्जातमिति नि-
श्चयं कुरु ॥ २ ॥ सत्कारणं तर्हि किं नोपलभ्यत
इति संशये पुनः पृच्छति भूय इति ॥ ३ ॥

इति द्वादशखण्डः ।

वटबीजे परमाणुभागस्यानुपलम्भेपि त्र्यणुकादि-
भावेनोपलम्भादस्तित्ववदन्यत्राप्यदृश्य का-
रणस्य भाव एव नाभाव इत्याशयक आह
लवणमित्यादिभिः—

लवणमेतदुदकेऽवधायाथ मा प्रातरु-
पसीदथा इति सह तथा चकार त ँ होवाच यद्दोषालवणमुदकेऽवाधा अङ्गतदाहरेति तद्धावमृश्य न विवेद ॥ १ ॥ यथा
विलीनमेवाङ्गास्याऽन्ता दाचामेति कथमिति
लवणमिति मध्यादाचामेति कथमिति ल-
वणमित्यन्तादाचामेति कथमिति लवणमि-
त्यभिप्रास्यैतदथमोपसीदथा इति तद्धतथा
चकार तच्छश्वत्संवर्त्तते त ँ होवाचात्र वा-

वकिलसत्सोम्य न निभालयसेऽत्रैव किलेति २

स य एषोऽणिमैतदात्म्यमिद ँ सर्वं तत्सत्य ँ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥

निशि नीरे लवणं क्षिप्त्वा प्रातरागच्छ माम् । दोषारात्रौ क्षिप्तमानय हे अङ्ग लवणमित्युवाच तथा कृत्वाऽऽगतं पिता । अथ तल्लवणं न लेभे चक्षुः कराभ्याम् ॥ १ ॥ यथा यद्यपि विलीनमेव लवणं तथाप्यस्य जलस्योपरितोमध्यतोऽधस्ताच्च किंचिदाचम्यतामित्युक्त आचम्य कथं किं विधमिति पृष्टः त्रिर्लवणमित्युवाच पुत्रः । अथैतज्जलं त्यक्त्वाऽऽगच्छ माम् । जले तल्लवणं सदा वर्तते इति विद्वान् तत्पितुर्वचस्तथा चकाराऽऽगतः । तदा तमुवाच पिता हे सोम्यात्र तेजोवन्नादिकार्ये सत्कारणं यद्यपि न पश्यसि तथाप्यत्रैवोपायान्तरेण जले लवणमिव ज्ञास्यसीति शेषः ॥२॥ उपायान्तरजिज्ञासयाह भूय इति ॥३॥

इति त्रयोदशखण्डः ।

दृष्टान्तेनोपायान्तरं वोधयति यथेत्यादिभिः ।

यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोतिजने विसृजेत्स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वाप्रत्यङ्वा प्रध्मायीताभिनद्धाक्ष आनीतोभिनद्धाक्षो विसृष्टः॥१॥ तस्य यथाभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति सग्रामाद्ग्रामं पृच्छन्पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवेहाऽऽचार्यवान्पुरुषो वेद तस्य तावदेवचिरं यावन्न विमोक्ष्येऽथ संपत्स्य इति २ स य एषोऽणिमैतदात्म्यमिद ँ सर्वं तत्सत्य ँ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥

चोरैर्नेत्रं वध्वा गन्धारदेशादानीय निर्जने वने त्यक्तोदिग्भ्रमात्पूर्वादिमुखो भूत्वा भूत्वा वद्धनेत्र एवानीतस्तथैव च त्यक्तोऽस्मीत्युच्चैः क्रोशेत्तर्हि श्रुत्वाऽभिवद्धं विमुच्यात्र दिशि गन्धारदेश एतां दिशं गच्छेत्युक्तः केनचिद्विवेकी धीमाँश्च चेत्पृच्छन् गन्धारानाप्नोति तथा कर्मचोरैः सदात्मात्मदेशाद

विवेक पटवद्धविवेकदृष्टिर्देहवनेतादात्म्यमापन्नो मुमुक्षुरावेदितदुःखादाचार्यान्नित्यानित्यत्वबोधनेन लब्धदृष्टिः सन्मयमिदं सर्वमित्युपदेशं च लब्ध्वात्मदेशं जानाति । स्वदेशसंपत्तौ तु तावद्विलम्बोयावदारब्धदेहं त्यक्ष्यति ततस्तु संपत्स्यते एव । कथं संपत्स्यत इति जिज्ञासया पुनः प्रश्नो भूय इति ॥ १ ॥ २ ॥ ३ ॥

इति चतुर्दशखण्डः ।

मरणसत्संपत्त्योरेक एव प्रकार इत्याह पुरुषमित्यादि—

पुरुषꣳ सोम्योतोपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥ १ ॥ अथ यदास्य वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥२॥ स य एषोणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ३

हे सोम्योपतापिनमुताऽऽसन्नमरणमपि पुत्रादयो मां जानासि संप्रतीत्यादि पृच्छन्तः सर्वतः समीपे भवन्ति स तु वागादिलयात्पूर्वं जानाति तदनन्तरं तु यथा वासनं सतोऽसतो वा भावं यातीति भावः । १ । २ । सद्भावं गताः पुनर्जायन्ते नवेति संशयादाह भूय इति ॥३॥

इति पञ्चदशखण्डः ।

अथैकस्य सतो विज्ञानेनाखिलस्यासतस्सदात्मकत्वेनिश्चयवतः कारणीभूताविद्याविलयतो यावज्जीवमभ्यासमार्दवेन नटमायिकपदार्थेष्विव सत्यपि भेदाद्यभासे न पुनः सलिङ्गभङ्गे संभवतीत्याशयेन सत्याभिसन्धिर्मुच्यत एव न पुनर्जन्मादिना तप्यत इति सदृष्टान्तमाह पुरुषं सोम्येत्यादिना—

पुरुष ऌ सोम्योतहस्तगृहीतमानयन्त्यपहार्षीत्स्तेयमकार्षीत्परशुमस्मै तपतेति स यदि तस्याकर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसंधोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेथ हन्यते १

अथ यदि तस्याकर्ताभवति तत एव सत्य-
मात्मानं कुरुते ससत्याभिसंधः सत्येनात्मा-
नमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न द-
ह्यतेथ मुच्यते ॥२॥ स यथा तत्रनाऽदाह्येत
ऐतदात्म्यमिद ँ सर्वं तत्सत्य ँ स आत्मात-
त्त्वमसि श्वेतकेतो इति तद्धास्य विजज्ञाविति
विजज्ञाविति ॥ ३ ॥

चोरोयमित्युक्तं राजभटाहस्ते गृहीत्वानीयायं
चोरो न किंचिदहार्षमिति तु वदतीत्यग्नावरुणं
कुरुतपरशुमस्मै । अथ सचोरश्चेत्तत एव नाहं
चोर इत्युक्ते रेवस्वमनृतं कुरुते तथाचानृतानुस-
न्धानः सन्ननृतेन सत्यं चोरस्वरूपमाच्छाद्य प-
रशुहर्ता दह्यतेऽनन्तरं राज्ञा हन्यते च ॥ १ ॥ सो-
ऽचोरश्चेन्न दह्यते इति राज्ञा त्यज्यते ॥२॥ तथा च
यथा न दह्यते स तथाऽखिलपरमकारणा सन्मा-
त्रानुसंधाताप्यत ऐतदात्म्यमित्यादि । अथास्य
पितुस्तदेतदुक्तं हस्फुटं ज्ञातवान् पुत्रः ॥

इति च्छान्दोग्योपनिषत्प्रसादे षोड़शःखण्डो-
ध्यायश्च षष्ठः ॥

कारणत्वेन बोधितं सदद्वैतं प्रकारान्तरेण बोधयिष्यन्ब्रह्मविद्यामाहात्म्यख्यापनायाख्यायिकामाहाधीहीति—

अधीहि भगव इति होपससाद सनत्कुमारं नारदः त ँ होवाच यद्वेत्थतेनमोपसीद ततस्तऊर्ध्वं वक्ष्यामीति सहोवाच ॥ १ ॥

सनत्कुमारमुपगतो धीह्युपदिशात्मज्ञानं किल भगवन्निति प्रार्थयन् यद्यावदात्मविषये वेत्थजानासि तेन सहायाहि माम् । तावद्वदेति यावत् तत उपरि ते वक्ष्यामीत्युक्तः सनारदउवाच १

ऋग्वेदं भगवोध्येमियजुर्वेद ँ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्य ँ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या ँ सर्पदेवजनविद्यामेतद्भगवोध्येमि ॥ २ ॥

इति हासपुराणैः सह पञ्चवेदान् । एषां वेदं व्याकरणम् । श्राद्धकल्पम् । गणितम् । उत्पातज्ञानम् । निधिशास्त्रम् । तर्कशास्त्रम् । नीतिशा-

त्रम् । निरुक्तम् । ब्रह्मवेदस्तद्विद्यां शिक्षाकल्पाद्याम् । तन्त्रशास्त्रम् । धनुर्वेदम् । ज्यौतिषम् । सर्पविद्यां गारुड़म् । नृत्यगीतादि ज्ञानानि । एतत्सर्वं भगवन् जानामि ॥ २ ॥

आत्मविषये तु न किञ्चिज्जानामीत्यादि प्रार्थयते सोहमिति—

सोहं भगवो मन्त्रविदेवास्मिनात्मवित् श्रुतꣳ ह्येव मे भगवद्दृशेभ्यः तरति शोकमात्मविदेति सोहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयत्विति तꣳ होवाच यद्वैकिंचैतदध्यगीष्ठानामैवैतत् ॥३॥

तथा च शास्त्रज्ञ एव नात्मज्ञोहम् । हि यत आत्मविच्छोकं तरति कथं मुच्येयेति न शोचतीति भवत्सदृशेभ्यः श्रवणं मेस्त्येव । अहं तु शोचामि । ततो मां नय शोकपारमिति वदन्तमुवाच यदेतदुक्तमधीतमेतत्सर्वं नामैव नाममात्रं वाचारम्भणश्रुत्याकार्यजातमपि नाममात्रमेवेति भावः ॥ ३ ॥

यतएतत्सर्वं नामैवातोनामब्रह्मेति भावयेत्याह नामेति—

नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्योराशिर्दैवोनिधिर्वाकोवाक्यमेकायनं देवविद्याब्रह्मविद्याभूतविद्याक्षत्रविद्यानक्षत्रविद्यासर्पदेवजनविद्यानामैवैतन्नामोपास्स्वेति । ४ । ४ ।

फलं वदन्नामातिरिक्तबृहद्वस्तुजिज्ञासामाह स इति—

स यो नामब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य कामचारो भवति यो नाम ब्रह्मेत्युपास्ते अस्ति भगवो नाम्नो भूय इति नाम्नो वावभूयोस्तीति तन्मे भगवान्ब्रवीत्विति ५

यावन्नाम्नोगतिस्तावदुपासकस्यापि यथेष्टगतिरिति नामब्रह्मोपासनफलम् । अथ नामतोपि भूयोबृहदस्ति किंचिदिति पृष्ट आहास्तीति तर्हि मे मह्यं तद्वदेत्युवाच नारदः ॥ ५ ॥

इतिच्छान्दोग्योपनिषत्प्रसादे सप्तमाध्यायस्य प्रथमःखण्डः ।

नामतो वागिन्द्रियस्य युक्तयावृहत्त्वमुपासनं चाह वागिति—

वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेद ᳩ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्य ᳩ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या ᳩ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाश्च मनुष्याँश्च पशूँश्च वया ᳩ सि च तृणवनस्पतीन् श्वापदान्याऽऽकीटपतङ्गपिपीलिकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च यद्वै वाङ्ना भविष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपास्स्वेति ॥ १ ॥

वयांसि पक्षिणः । श्वापदानि मृगविशेषान् । आ कीटादि । हृदयज्ञं प्रियम् । वाग्वै वागिन्द्रियमेव वेदाद्यऽप्रियान्तं सकलमिति यावत् बोधय-

तीति यदि वागिन्द्रियं न स्यात्तर्हि धर्माद्यपि वि-
ज्ञापितं बोधितं नस्यादिति च वाग्भूयसीनामतो
तोवाग्ब्रह्मेत्युपास्स्व भावय ॥ १ ॥

फलं वागन्यबृहज्जिज्ञासां चाह स य इति—

स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचोगतं
तत्रास्य यथा कामचारो भवति यो वाचं ब्र-
ह्मेत्युपास्ते अस्ति भगवो वाचो भूय इति
वाचो वावभूयोस्तीति तन्मे भगवान्ब्रवी-
त्विति ॥ २ ॥

अर्थस्त्वनन्तरखण्डान्त्यगद्यार्थविधः ॥ २ ॥

इति द्वितीयःखण्डः ।

वाचो भूय आह मन इति—

मनो वाव वाचो भूयो यथा वै द्वेवाऽऽमल-
केद्वेवाकोलेद्वौवाऽक्षौमुष्टिरनुभवत्येवं वाचं
च नामच मनोनुभवति स यदा मनसाम-
नस्यति मन्त्रानधीयीयेत्यथाधीते कर्माणि
कुर्वीयेत्यथकुरुते पुत्राँश्च पशूँश्चेच्छेयेत्य-
थेच्छत इमं च लोकममुं चेच्छेयेत्यथेच्छते

मनोह्यात्मामनो हि लोको मनो हि ब्रह्ममन उपास्स्वेति ॥ १ ॥

स प्रसिद्धः पुरुषो यदा मन्त्राध्ययनादीनिमनसामनस्यति मनोगतं करोति तदा तत्तन्द्रियव्यापारो जायते तावदरामलकविभीतकादि फलं मुष्टिरिव वागिन्द्रियं नाम च मनःस्वाधीनं करोतीति ताभ्यां मनो भूयः मन एवात्मा कर्ता लोको ब्रह्मचेति मनो ब्रह्मेति भावय ॥ १ ॥

फलं जिज्ञासान्तरं चाह पूर्ववत्स इति—

स यो मनो ब्रह्मेत्युपास्ते यावन्मनसोगतं तत्राऽस्य कामचारो भवति यो मनो ब्रह्मेत्युपास्ते अस्तिभगवो मनसो भूय इति मनसो वावभूयोस्तीति तन्मे भगवान्ब्रवीत्विति २।२

इति तृतीयःखण्डः ।

मनसा भूयांसमाह संकल्प इति—

संकल्पो वावमनसो भूयान् यदा वै संकल्पयतेथ मनस्यत्यथवाचमीरयति तामुनाम्नीरयति नाम्निमन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥

इदं कर्तुं युक्तमिति वृत्तिः संकल्पस्तत इदं कुर्वीयेति वृत्तिर्मनस्यनं ततोऽध्ययने तु वागिन्द्रियप्रेरणं तच्च न सामान्यमऽस्पृश्यविशेष इति तां वाचमु वितर्के नाम्निशब्दे प्रेरयति ततो मन्त्रोच्चारणं मन्त्रैश्च कर्मावगमइत्युत्तरोत्तरं पूर्वपूर्वाधीनम् यच्च यदधीनं तत्तदन्तर्गतमित्येतदखिलं संकल्पान्तर्गतमिति संकल्पो भूयानित्यर्थः ॥ १ ॥

मनत्र्आदेः संकल्पान्तर्गतत्वोक्तिपूर्वकं पुरुषे कार्यस्य संकल्पपूर्वकत्वदृष्टेरन्यत्रापि संकल्प सत्तानुमेयेत्याह तानीति—

तानि ह वा एतानि संकल्पैकायनानि संकल्पात्मकानि संकल्पे प्रतिष्ठितानि समक्लृपतां द्यावा पृथिवी समकल्पेतां वायुश्चाकाशं च समकल्पन्तापश्च तेजश्च तेषा संक्लृप्त्यै वर्ष संकल्पते वर्षस्य संक्लृप्त्या अन्नं संकल्पते अन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते प्राणाना संक्लृप्त्यै मन्त्राः संकल्पन्ते मन्त्राणा संक्लृप्त्यै कर्माणि संकल्पन्ते कर्मणा संक्लृप्त्यैलोकः संकल्पते

लोकस्य संक्लृप्त्यै सर्वं संकल्पते स एष संकल्पः संकल्पमुपास्स्वेति ॥ २ ॥

एतेषां मन आदीनां संकल्प एवायनं लयस्थानमात्मास्वरूपं चोत्पत्तिसमये प्रतिष्ठास्थितिश्च स्थितिकाले तस्मादेते संकल्पान्तर्गता इति भावः। अथ द्युप्रभृतयः संकल्पं कृतवन्त इव प्रतीता भवन्ति निश्चलत्वादिना किंच तेषां द्युप्रभृतीनां संकल्पस्यसिद्ध्यै वृष्टिः संकल्पते समर्था भवति अनुमापने नेति शेषः एव मन्नाद्यपि वृष्ट्याद्यर्थम् तथा च वृष्ट्यादयः कार्यत्वाद्द्युप्रभृत्याद्यधीनत्वाच्चसर्वत्र संकल्पानुवृत्तिमनुमापयन्तीति जगत्संकल्पमूलत्वात्सकलस्यैष संकल्पो भूयानिति संकल्पो ब्रह्मेत्युपास्स्व॥ २ ॥

फलजिज्ञासान्तरे आह स य इति—

स यः संकल्पं ब्रह्मेत्युपास्ते क्लृप्तान्वै स लोकान्ध्रुवान्ध्रुवः प्रतिष्ठितान्प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावत्संकल्पस्य गतं तत्रास्य यथा कामचारो भवति यः संकल्पं ब्रह्मेत्युपास्ते अस्तिभगवः संक-

ल्पाद्भूय इति संकल्पाद्वावभूयोस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ३ ॥

स उपासकः क्लृप्तान्धात्रारचितान्स्व संकल्पितानिति वा ध्रुवानचलान् प्रतिष्ठितान्ससर्वसुखोप करणान् अव्यथमानान् शत्र्वादिभयहीनान् लोकान् ध्रुवश्चिरजीवीअविकलेन्द्रियादिर्भयहीनश्च- सन्नभिसिध्यति याति ॥ ३ ॥

इति चतुर्थखण्डः ।

संकल्पाद् भूय आह चित्तमिति—

चित्तं वावसंकल्पाद्भूयो यदा वै चेतयतेथ संकल्पयतेथ मनस्यत्यथ वाचमीरयति ता मुनाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥

यदा चेतयते गुणदोषदृष्टिरूपपूर्वापरानुसन्धानात्मकं चेतनं करोति योग्यतानिश्चयायाथानन्तरमिदमध्ययनादि कर्तुं युक्तमिति संकल्पो- जायत इति संकल्पश्चित्ताधीनः संकल्पाधीनं च मनस्यनादीत्युक्तमेवेति चित्तं भूयः ॥ १ ॥

अथ पूर्ववत्सर्वस्य चित्ताधीनतामेव प्रकारान्तरेण दर्शयति तानीति—

तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्तप्रतिष्ठितानि तस्माद्यद्यपि-बहुविदचित्तो भवति नायमस्तीत्येवैनमाहुर्यदयं वेद यद्वा अयं विद्वान्नेत्थमचित्तःस्यादित्यथयद्यल्पविच्चित्तवान्भवति तस्माएवोतशुश्रूषन्ते चित्त ७ ह्येवैषामेकायनं चित्तमात्माचित्तं प्रतिष्ठाचित्तमुपास्स्वेति ॥ २ ॥

बहुविदपियद्यचित्तो भवति तर्ह्येनं बहुविदं प्रति यद्यदि अयं विद्वान्स्यात्तर्हीत्थमचित्तो नस्यादित्यतोनायमस्ति यच्चशास्त्राद्ययं वेदतदपिनास्तीत्येव वदन्ति प्रवीणाः अथाल्पविदपि यदि चित्तवान्भवति तर्हि तस्मै ततएवशास्त्रं श्रोतुमिच्छंति तस्मादेतेषां संकल्पादीनामात्मास्वरूपं प्रतिष्ठाऽऽश्रयोऽयनं लयस्थानं च चित्तमेवेति सर्वं चित्तमेवेति चित्तं ब्रह्मेत्युपास्स्वेत्यर्थः ॥ २ ॥

फलं प्रश्नान्तरं चाह स इति—

सयश्चित्तं ब्रह्मेत्युपास्ते चित्तान्वैसलोकान्ध्रुवान्ध्रुवः प्रतिष्ठितोऽव्यथमानानव्यथमानोभिसिध्यति यावच्चित्तस्य गतं तत्राऽ-

स्य यथा कामचारो भवति यश्चित्तं ब्रह्मे-
त्युपास्ते अस्ति भगवँश्चित्ताद्भूय इति
चित्ताद्वावभूयोस्तीति तन्मे भगवान्ब्रवी-
त्विति ॥ ३ ॥

चित्तान्स्वचित्तविषयानुपचितान्वा । उक्तार्थ-
मन्यत् ॥ ३ ॥

इति पञ्चमःखण्डः ।

चित्ताद्भूय आह ध्यानमिति—

ध्यानं वावचित्ताद्भूयो ध्यायतीव पृ-
थिवीध्यायतीवान्तरिक्षं ध्यायतीवद्यौर्ध्याय-
न्तीवाऽऽपो ध्यायन्तीव पर्वताध्यायन्तीव दे-
वमनुष्यास्तस्माद्य इह मनुष्याणां महत्तां
प्राप्नुवन्ति ध्यानापादा ꣳशाइवैव ते भव-
न्त्यथयेल्पाः कलहिनः पिशुनाउपवादिन-
स्तेथ ये प्रभवो ध्यानापादा ꣳशा इवैव ते
भवन्ति ध्यानमुपास्स्वेति ॥ १ ॥

पृथिव्यादयोदेवतुल्यमनुष्यान्ता महान्तोध्यानं
कुर्वन्त इव शान्तत्वात् प्रतीयन्ते तस्मान्मनुष्या-
णां मध्ये ये विद्यादिनामहत्वं प्राप्नुवन्ति ते ध्या-

नाऽऽपादस्य ध्यानलाभस्यांऽशा अंशयुक्ताइव । येत्वल्पाः क्षुद्रानमहान्तस्ते तु न ध्यायन्तीव किन्तु कलहशीलाः परदोषसूचकाउपसमीपे च परदोष-वादिन इति न ते ध्यानलेशेनापियुता इव । अथ तथा च प्रभवो महान्तो ध्यानलेशयुता इव । महद्भिरूपास्य ते ध्यानं यतोतस्सर्वतो महत् ध्या-नमिति ध्यानं ब्रह्मेत्युपास्स्व । पूर्वापरानुसन्धान-मन्तः करणैकाग्रताधीनमिति चित्ताद्भूयोध्यान मिति भावः ॥ १ ॥

फलं प्रश्नान्तरं चाह स य इति—

स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथा कामचारो भवति यो ध्यानं ब्रह्मेत्युपास्ते अस्ति भगवोध्यानाद्-भूय इति ध्यानाद्वावभूयोस्तीति तन्मे भ-गवान्ब्रवीत्विति ॥ २ ॥

इति षष्ठःखण्डः ।

ध्यानाद्भूय आह विज्ञानमिति—

विज्ञानं वावध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेद ँ सामवेदमाथ-

र्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्य ७ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्या ७ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाँश्च मनुष्याँश्च पशूँश्च वया ७ सि च तृणवनस्पतीञ्छ्वापदान्याऽऽकीटपतङ्गपिपीलिकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं चेमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ॥ १ ॥

विज्ञानं नामचिदाभासोन्तःकरणे । ध्यानन्त्वन्तःकरणस्यैकाग्रता सा च चिरमेकविषयाकारता चिरमेकविषया वभास इति यावत् चिदाभासेनैव तु वेदादि सर्वार्था वभास इति ध्यानं विज्ञानाधीनमिति ध्यानाद्भूयो विज्ञानमिति विज्ञानं ब्रह्मेत्युपास्स्व । अत्र कानिचित्पदावि प्रथम द्वितीयखण्डयो रुक्तार्थानि सुवोधान्यन्यानि ॥१॥

स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो

वै स लोकान् ज्ञानवतोऽभिसिध्यति यावद्वि-
ज्ञानस्य गतं तत्रास्य यथा कामचारो भ-
वति यो विज्ञानं ब्रह्मेत्युपास्ते अस्ति भ-
गवो विज्ञानाद्भूय इति विज्ञानाद्वावभूयो-
स्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

शास्त्रीयो विविधो वोधो विज्ञानमन्योज्ञानं
तदुभययुतान् ज्ञानि विज्ञानि युतानिति यावत्
लोकान्सउपासकः प्राप्नोति ॥ २ ॥

इति सप्तमःखण्डः ।

अनशनाद्युपक्षीणसामर्थ्यान्तःकरणे मन्त्रादि
प्रतिभानापत्त्ययः प्रसिद्ध इति चिदाभासो किं-
चित्करएव तदेति वलाधीनाद्विज्ञानाद्भूयो वल
मिति तथान्तः करणवलाधीनं शरीरादि वलमि-
त्यभेदं हृदिनिधाय शरीर वलाधीनमखिलमिति
चाह वलमित्यादिना—

वलं वावविज्ञानाद्भूयोऽपि ह शतं वि-
ज्ञानवतामेकोवलवानाकम्पयते स यदा-
वली भवत्यथोत्थाता भवत्युत्तिष्ठन्परिच-
रिता भवति परिचरन्नुपसत्ता भवत्यु-

पसीदन्द्रष्टा भवति श्रोता भवति मन्ता भवति वोद्धा भवति कर्ता भवति विज्ञाता भवति वलेन वै पृथिवी तिष्ठति वलेनान्तरिक्षं वलेन द्यौर्वलेन पर्वता वलेन देवमनुष्या वलेन पशवश्च वया ५ सि च तृणवनस्पतयः श्वापदान्याऽऽकीटपतङ्गपिपीलिकं वलेन लोकस्तिष्ठति वलमुपास्स्वेति ॥ १ ॥

विज्ञानवतां शतमप्येको वलीविद्रावयति । किंचवलेनैवोत्थाय गुरुं सेवमानउपस्थितः पश्यति ततो गुरुकृपयाश्रवणमननाभ्यामर्थं बुध्वाकृतकर्मफलस्य विज्ञाता भोक्ता भवति । वलेनैव च पृथिव्याद्यखिलस्थितिरिति वलं ब्रह्मेत्युपास्स्व ॥१॥

स यो वलं ब्रह्मेत्युपास्ते यावद्वलस्य गतं तत्रास्य यथा कामचारो भवति यो वलं ब्रह्मेत्युपास्ते अस्ति भगवो वलाद्भूय इति वलाद्वावभूयोस्तीति तन्मे भगवान्ब्रवीत्विति॥

इत्यष्टमःखण्डः ।

वलादधिकमाहान्नमिति—

अन्नं वाववलाद्भूयस्तस्माद्यद्यपि दश-

रात्रीर्नाश्नीयाद्य द्युह जीवेदथवाऽद्रष्टाऽश्रोताऽमन्ताऽबोद्धाऽकर्ताऽविज्ञाता भवत्यथान्नस्याऽऽये द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ॥ १ ॥

यदि दशदिनं नाश्नीयात्तर्हि म्रियेत । अथ वा कदाचिद्यदि जीवेत् तर्हि दर्शनश्रवणादिसामर्थ्यहीनो भवति अथानन्तरमन्नस्या ये लाभे दर्शनादिशक्तिमान्भवतीत्यन्नाधीनं बलमित्यन्नं भूयो बलादित्यन्नं ब्रह्मेत्युपास्स्वेत्यर्थः ॥ १ ॥

पूर्ववदाह स इति—

स योन्नं ब्रह्मेत्युपास्तेन्नवतो वै सलोकान्पानवतोभिसिध्यति यावदन्नस्य गतं तत्रास्य यथा कामचारो भवति योन्नं ब्रह्मेत्युपास्ते अस्ति भगवोन्नाद्भूय इत्यन्नाद्वाव भूयोस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

अन्नपानवतोन्नोदकपूर्णान् लोकान्सयाति ॥२॥

इति नवमःखण्डः ।

अन्नोत्पत्तिरपि जलाधीनेत्यन्नाज्जलं भूय इत्या-
हाप इति—

आपो वावाऽन्नाद् भूयस्यस्तस्माद्यदा-
सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं क-
नीयो भविष्यतीत्यथ यदासुवृष्टिर्भवत्यान-
न्दिनः प्राणा भवन्त्यन्नं वहुभविष्यतीत्याप
एवेमामूर्ता येयं पृथिवीयदन्तरिक्षं यद्द्यौर्य-
त्पर्वता यद्देव मनुष्या यत्पशवश्च वया ं सि
च तृणवनस्पतयः श्वापदानि आकीटपतङ्ग
पिपीलिकमाप एवेमामूर्ता अपउपास्स्वेति १

यदा न शोभनाऽनुकूला वृष्टिः तदा प्राणिनो
विशेषेणाऽऽधीयन्तेल्पमन्नं भविष्यतीति मनसि
दुःखिनो भवन्त्यन्यथात्वानन्दिनः किंच पृथिव्या-
द्यखिलं मूर्तामूर्तिमत्यआपएव तस्मादापो भूयस्यो-
न्नादित्यन्नं ब्रह्मेत्युपास्स्व ॥ १ ॥

फलाद्याह स इति—

स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वा-
न्कामा ं स्तृप्तिमान्भवति यावदपांगतं त-

त्रास्य यथा कामचारो भवति यो पो ब्रह्मे-
त्युपास्ते अस्ति भगवोऽप्नो भूय इति अप्नो
वावभूयोस्तीति तन्मे भगवान्ब्रवीत्विति २
व्यक्तोर्थः ॥ २ ॥ इति दशमःखण्डः ।

जलं तेजसोजायत इति जलात्तेजो भूय
इत्याह तेज इति—

तेजो वावाऽप्नो भूयः तद्वा एतद्वायुमा-
गृह्याकाशमभितपति तदाहुर्निशोचति नि-
तपतिवर्षिष्यति वा इति तेज एव तत्पूर्वं दर्श-
यित्वाथापः सृजते तदेतदूर्ध्वाभिश्चातिर-
श्चाभिश्चविद्युद्भिराह्लादाश्चरन्ति तस्मादा-
हुर्विद्योततेस्तनयति वर्षिष्यति वा इति तेज
एव तत्पूर्वं दर्शयित्वाथापः सृजते तेज उ-
पास्स्वेति ॥ १ ॥

तदेतद्वैतेजो यदा वायुमारुध्याकाशं तपति
तदाहुर्जनाःनिशोचति वायुर्निश्चलोस्ति तपति
देहोवृष्टिर्भविष्यतीति वै प्रसिद्धम् किंच यदोर्ध्व-
तिर्यग्गतविद्युद्भिः सहाऽऽह्लादागर्जा भवन्ति त-
दाप्येवं वृष्टिं संभावयन्ति तस्मात्तेज एव पूर्वं त-

त्तापविद्युद्रूपं स्वस्य दर्शयित्वाथानन्तरं वर्षतीति तेजो भूय इति तेजो ब्रह्मेत्युपास्स्व ॥ १ ॥

पूर्ववदाह स य इति—

स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान्भास्वतोपहततमस्कानभिसिध्यति यावत्तेजसोगतं तत्रास्य यथा कामचारो भवति यस्तेजो ब्रह्मेत्युपास्ते अस्ति भगवस्तेजसो भूय इति तेजसो वावभूयोस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

स तेजस्वी भवति तेजो युतान् गच्छति च लोकान् । भास्वत इति विवरणम् । अपहत तमस्कानिति फलितम् ॥ २ ॥

इत्येकादशःखण्डः ।

सर्वमाकाशे प्रतिष्ठितमस्तीत्याकाशभूयस्त्वमाह्याकाश इति—

आकाशो वावतेजसो भूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशेन रमत आकाशे

जायत आकाशमभिजायत आकाशमुपास्स्वेति ॥ १ ॥

सूर्यादीनामाकाशे स्थितिराह्वानं च मुखाकाशेन श्रोत्राकाशेन चान्योन्यवाणीश्रवणम् तथा हर्षशोकाभ्यामाकाशे रमणं न रमणं च तथावकाश एव सर्वस्य जनिराकाशं चाभिलक्ष्य शाखाद्युद्गमो भवति नत्वनवकाशदेशे तस्मात्सर्वमाकाशाधीनमित्याकाशो भूयानित्याकाशं ब्रह्मेत्युपास्स्व ॥ १ ॥

एतत्फलं प्रश्नान्तरं चाह स य इति—

स य आकाशं ब्रह्मेत्युपास्त आकाशवतो वै सलोकान्प्रकाशवतोऽसंबाधानुरुगायवतोऽभिसिध्यति यावदाकाशस्य गतं तत्रास्य यथा कामचारो भवति य आकाशं ब्रह्मेत्युपास्ते अस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

यत्रावकाशप्रकाशावसंबाधोऽसंघट्टो संकीर्णता तथा विस्तीर्णगतिस्तान्स याति ॥ २ ॥

इति द्वादशःखण्डः ।

गुरोः शिष्यस्योपसत्तिरुपदेशः श्रवणादि च यद्यपि मठमुखश्रोत्राकाशाधीनतां भजन्ति तथापि गुर्वादिश्रोतव्यादिस्मृत्यभावेऽभाव एव श्रवणमननादेर्भवतीत्यकिंचित्कर एवाकाशस्तदेति स्मृतिरेवाकाशाद्भूयसीत्याह स्मर इति—

स्मरो वावाकाशाद्भूयस्तस्माद्यद्यपि वहव आसीरन्न स्मरन्तो नैव ते कंचन शृणुयुर्नमन्वीरन्नविजानीरन् यदावावतेस्मरेयुरथ शृणुयुरथमन्वीरन्नथ विजानीरन्स्मरेण वै पुत्रान्विजानाति स्मरेण पशून्स्मरमुपास्स्वेति १

वहवो गुरुशिष्यादयोन्योन्यकर्तव्यादिकं न स्मरन्तो यद्युपविष्टाभवेयुस्तर्हि न कमप्यर्थं श्रोत्रमनोबुद्धिभिर्गृह्णीयुर्गृह्णीयुश्च स्मृत्यनन्तरम् किंच स्मृत्यैव ममायमिति पुत्रादीन् जानाति तस्मात्स्मरणं भूय इति स्मरो ब्रह्मेत्युपास्स्व ॥ १ ॥

पूर्ववदाह स इति—

स यः स्मरं ब्रह्मेत्युपास्ते यावत्स्मरस्य गतं तत्रास्य यथा कामचारो भवति यः

स्मरं ब्रह्मेत्युपास्ते अस्ति भगवः स्मराद्भूय इति स्मराद्वावभूयोस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

स्फुटम् ॥ २ ॥ इति त्रयोदशःखण्डः ।

स्मरो यदधीनस्तामाहाशेति —

आशावाव स्मराद्भूयसी आशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्राँश्च पशूँश्चेच्छत इमं च लोकममुं चेच्छत आशामुपास्स्वेति ॥ १ ॥

आशा लिप्सा यद्विषयिणी पूर्वं भवति तदेवानन्तरमाप्तुं स्मरतीत्याशयैवेद्धः प्रवृत्तो भवति स्मरो मन्त्रविषयको यदा तदा मन्त्राध्ययनतत्कर्मानुष्ठानतत्फलपुत्रादीच्छाः करोति जन इत्याशाधीनः स्मर इत्याशा भूयसीत्याशा ब्रह्मेत्युपास्स्व १

पूर्ववदेव फलान्याह स य इति—

स य आशां ब्रह्मेत्युपास्त आशयाऽस्य सर्वे कामाः समृध्यन्त्यमोघाह्यस्याऽऽशिषो भवन्ति यावदाशायागतं तत्रास्य यथा कामचारो भवति य आशां ब्रह्मेत्युपास्ते अस्ति

भगव आशाया भूय इत्याशाया वावभूयो-
ऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

उपासिताशयाऽस्योपासकस्य सर्वमिष्टं वर्द्धते प्रार्थनाश्चाफलान भवन्ति । शेषं पूर्ववत् ॥२॥

इति चतुर्दशःखण्डः ।

सर्वतः प्राणोत्कर्षं युक्त्या साधयति प्राण इति—

प्राणो वा आशाया भूयान् यथा वा अंरानाभौसमर्पिता एवमस्मिन्प्राणे सर्वं ँ समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आ-चार्यः प्राणो ब्राह्मणः ॥ १ ॥

प्राणेर्पितं प्राणस्थित्युत्क्रान्त्यधीनस्थित्युत्क्रा-न्तिकमखिलेन्द्रियादि प्राणस्तु प्राणेन स्वात-न्त्र्येण सदा गच्छति किंच यावत्प्राणस्तावदेव सर्वो व्यवहार इति कर्तृकर्मसंप्रदानत्वादि पि-त्रादि च सर्वं जगत् प्राण एवेति प्राणो भूयान्१

प्राण एव पित्रादीत्यत्र यावत्प्राणस्तावदेव पि-त्रादि-व्यवहार इति हेतुमन्वयव्यतिरे-काभ्यामाह द्वाभ्याम्—

स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाचार्यं वा ब्राह्मणं वा किंचिद्भृशमिव प्रत्याह धिक्त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति ॥२॥ अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषं दहेन्नैवैनं ब्रूयुः पितृहासीति न मातृहासीति न भ्रातृहासीति न स्वसृहासीति नाचार्यहासीति न ब्राह्मणहासीति ॥ ३ ॥

स पुत्रादिर्यदि पित्रादिकं प्रति भृशमत्यन्तानुचितशब्दमात्रं ब्रूयात्तर्ह्येनं पुत्रादिं प्रतित्वांधिगस्तु पित्रादिहात्वमसीति वदन्ति सज्जनाः ॥२॥ गतप्राणान्पित्रादींस्तु शूलेन विध्वाविध्वा समासं राशिं कृत्वा व्यतिषं खण्डशः कृत्वावादहन्तमपि पुत्रादिकं प्रति पितृहासीत्यादि न वदन्ति ॥३॥

अतः फलितमाह प्राण इति—

प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नति

वादी भवति तं चेद् ब्रूयुरतिवाद्यसीत्यति-
वाद्यस्मीति ब्रूयान्नापह्नुवीत ॥ ४ ॥

तस्मादेतानि सर्वाणि पित्रादीनि प्राण ए-
वास्ति । तथा चैवं युक्त्या प्राणस्य भूयस्त्वं म-
न्वानो निश्चिन्वन्विजानन्ध्यायन्प्राणं ब्रह्मत्वेन
पश्यन्साक्षात्कुर्वन्स एष वै उपासको तिवादी स-
र्वोत्कृष्टप्राणात्मवादी भवति । अथान्येयदितं सा-
क्षेपं ब्रूयुस्त्वमतिवाद्यसीति तर्ह्यङ्गीकुर्यान्नापल-
पेत् ॥ ४ ॥

इति पञ्चदशःखण्डः ।

नापलपेदिति श्रुत्वा तूष्णीं भूय प्राण एवात्मा
ब्रह्मनातः परमस्तीति विचारयन्तं नारदम-
भिलक्ष्यपरमार्थात्मानं ब्रह्मग्राहयितु मा-
हैषत्विति—

एष तु वा अतिवदति यः सत्येनातिव-
दति सोऽहं भगवः सत्येनातिवदानीति सत्यं
त्वेव विजिज्ञासितव्यमिति सत्यं भगवो वि-
जिज्ञास इति ॥ १ ॥

वस्तुतस्त्वेषोतिवादी यः सत्यं सर्वतः परं स-
र्वात्म वदति प्राणान्तं तूक्तमसत्यमेवेति भावः ।

तर्हिसत्यमतिवदिष्यामि भगवन् । तथा च सत्य-जिज्ञासा प्रथमं विधेया त्वयेति सनत्कुमारः । सत्यं विज्ञातुमिच्छामि भगवन्भवतः सकाशादिति नारदः ॥ १ ॥

इति षोडशः खण्डः ।

यद्विषयकं पूर्वं विज्ञानं भवति तदेवानन्तरं व-दति नान्यथातो विज्ञानमेव किमित्यादौ जिज्ञासा कार्या । तर्हि विज्ञानमेव जिज्ञासे भगवन्नित्यर्थ-कमाह यदेति—

यदा वै विजानात्यथ सत्यं वदति नाविजानन्सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥ १ ॥

इति सप्तदशः खण्डः ।

अथ विज्ञानमपि न मननं विना मननं च मतिरिति सैव जिज्ञास्या तामेव जिज्ञासे भगवन्नित्याह यदा वै इति—

यदा वै मनुतेऽथ विजानाति नाऽमत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव वि-

जिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥ १

इत्यष्टादशः खण्डः ।

श्रद्धाऽऽस्तिक्यबुद्धिर्न च तां विना मननमिति सैवादौ ज्ञेयेत्याह यदेति—

यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धात्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति ॥ १ ॥

इत्येकोनविंशः खण्डः ।

गुरुसेवया तु श्रद्धा जायते मननादावित्याह यदेति—

यदा वै निस्तिष्ठत्यथ श्रद्दधाति नानिस्तिष्ठञ्छ्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥ १ ॥

निस्तिष्ठति सेवमानो गुरुसमीपे निरन्तरं तिष्ठति तदा श्रद्धा भवति नान्यथेति कथं निष्ठाकार्येत्वेव जिज्ञासोचितादावित्यर्थः ॥ १ ॥

इति विंशः खण्डः ।

प्रयत्नपूर्वकस्तु गुरौ वास इत्याह यदा वै इति—

यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ १ ॥

करोति प्रयतते । पूर्ववदन्यत् ॥ १ ॥

इत्येकविंशः खण्डः ।

प्रयत्नश्च सुखलाभायैव क्रियते तथा च सुखानुसन्धानपूर्विका कृतिरिति फलमपीह हेतुः सुखमादौ विजिज्ञास्यमित्याह यदेति—

यदा वै सुखं लभतेथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥ १ ॥

इति द्वाविंशः खण्डः ।

एवं परमार्थतत्त्वेभिमुखीकृत्य नारदमाह सनत्कुमारो य इति—

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवो विजिज्ञास इति ॥ १ ॥

यन्नकस्याप्यपेक्षयाऽल्पं स भूमा भूमातिरिक्तं चाल्पम् भूमैव सुखं भूमा सुखमिति पर्याय इति भावः एवं च भूमातिरिक्तं दुःखं दुःखहेतुर्वेत्यर्थ सिद्धम् ॥ १ ॥ इति त्रयोविंशःखण्डः ।

वुवोधयिषया भूमलक्षणं तथा भूमा प्रकर्षेण क्व-
चिदाश्रितश्चेद् भूमत्वासिद्धिस्तदाश्रयस्य
महत्त्वादित्याशयकप्रश्नं च सोत्तर-
माह यत्रेति—

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यꣳ स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति ॥ १ ॥

यत्र वस्तुनि यत्किंचिद्विषयकमपि दर्शनश्रवणाद्यखिलसंसार व्यवहारो नास्ति स भूमाथोक्तव्यवहारो यत्रास्ति तदल्पमित्यर्थसिद्धम् । प्रतिष्ठितमित्यत्र प्रेण कीले कुलालचक्रवत्स्थिति-र्निरस्ता। स्वस्य महिम्निप्रभावे। वस्तुतस्तु प्रभावः

स्वभावो वस्तुनः स च वस्तुनि नातिरिक्त इत्यत आह य दिवेति यद्वेत्यर्थः । माहम्नीति अनवस्थाभिया निराश्रयः स्वभावतः स्वयंप्रकाशवत्स्वाश्रयो वाभूमेति भावः ॥ १ ॥

इमं भावं स्वयं सूचयति सनत्कुमारो गो अश्वमिति—

गो अश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति होवाचान्योह्यन्यस्मिन्प्रतिष्ठित इति ॥ २ ॥

न महिम्नीत्यस्य भावमहं ब्रवीमीतिहोवाच सनत्कुमारः उक्त्वा चाह गवाश्वादिकं देवदत्तस्य महिमा महिम्नोन्यो देवदत्तो हि स्वतोन्यस्मिन्नुक्तमहिम्नि प्रतिष्ठितोस्तीत्याचक्षते वदन्तीह लोके जनाः नाहमेवं ब्रवीमि स्वमहिम्नीति किन्त्वऽद्वितीयालौकिकभूम्नि लोकवद्व्यवहारानुपपत्तेर्न महिम्नि न स्वतोन्यरूपेकचिन्महिम्न्याश्रितोस्ति भूमापि तु स्वमहिम्नि स्वरूपरूपे महिम्नीति ॥ २ ॥

इति चतुर्विंशःखण्डः ।

स्वप्रतिष्ठितत्वे हेतुमन्याऽभावं तत्फलितमहं वृत्तिविषयस्यात्मनो भूमभावं च सूचयन्नऽखण्डाद्वितीय भूमज्ञानफलमाह स एवेति द्वाभ्याम्—

स एवाधस्तात्स उपरिष्टात्स पश्चात्स दक्षिणतः स उत्तरतः स एवेद ँ सर्वमित्यथातोऽहङ्कारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोह मुत्तरतोहमेवेद ँ सर्वमिति ॥ १ ॥ अथात आत्मादेश एव आत्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दाक्षिणत आत्मोत्तरत आत्मैवेद ँ सर्वं मिति स वा एष एवं पश्यन्नेवं मन्वा न एवं विजानन्नात्मरतिरात्मक्रीड़आत्ममिथुन आत्मानन्दः सस्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति अथ येऽन्यथाऽतो विदुरन्यराजानस्तेक्षय्यलोका भवन्ति तेषा ँ सर्वेषु लोकेष्वकामचारो भवति ॥ २ ॥

स भूमैव सर्वत्रेतिहेतोः सर्वमिदं जगद्भूमै-वातोथानन्तरं भूमानमहं शब्देनैव ब्रवीमि अह-मेव सर्वत्रेति सर्वमहमेवेति ॥ १ ॥ अतो भूम्नः सर्वात्मकत्वादथानन्तरं भूमानमात्मशब्देनोप-दिशामि आत्मैव सर्वत्रेत्यात्मैव सर्वमिति । अथ मननिदिध्यासनाभ्यामेवमात्ममात्रत्वं यः प-श्यति तस्यैतस्य वै रमणाद्यात्मन्येव । अनात्म-दृष्टीनां तु देहमात्रेण रमणं रतिर्बाह्यसाधनैस्तत् क्रीडा। द्वन्द्वजं सुखं मिथुनं । शब्दादिभिरानन्द इति भेदः । तथा स्वराट् सर्वचारी च स भवति। अथातोन्यथा प्रपञ्चं ये पश्यन्ति ते त्वन्यो राजा येषां ते परतन्त्राः विनाशिलोकगा यथेष्टगतिही-नाश्च भवन्ति ॥ २ ॥

इति पञ्चविंशः खण्डः ।

नामैव सर्वमिति नामब्रह्मेत्युपास्स्वेत्यादिना-
यदुक्तं नामादि तदिदं सर्वमात्मनएव जा-
यते योमननादिनाभूमात्मानं पश्यति
तस्येत्याह तस्येति—

तस्यहवा एतस्यैवं पश्यत एवं मन्वान-स्यैवं विजानत आत्मतः प्राण आत्मत आ-

शाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावावात्मतोन्नमात्मतो बलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित्तमात्मतः संकल्प आत्मतो मन आत्मतो वागात्मतो नामात्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेद ँ सर्वमिति ॥ १ ॥

सुगमम् ॥ १ ॥

अत्रोक्ते ब्राह्मणार्थेमन्त्रमाह तदेष इति—

तदेषश्लोको न पश्योमृत्युं पश्यति न रोगं नोतदुःखता ँ सर्व ँ ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादशःस्मृतः शतं च दशचैकश्च सहस्राणि च वि ँ शतिराहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवास्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायायतमस्पारं दर्शयति भगवान्सनत्कुमारस्त ँ स्कन्द इत्याचक्षते त ँ स्कन्द इत्याचक्षते ॥ २ ॥

तत्तस्मिन्नुक्तेर्थे एषमन्त्रः। पश्यन्नात्मवित् मृत्यादिभेदं न पश्यति किन्तु सर्वं पश्यति नाम-सर्वशः सर्वप्रकारैः भेदकैर्भिन्नं सर्वं जगदात्मत्वेन व्याप्नोति कथं तत्राह स इति स भूमात्मास्वरूपेण वस्तुत एकधैवाग्रे । ततस्तेजोवन्नैस्त्रिधा शब्दादिभिः पञ्चधा सप्तधा धातुभिर्नवधेन्द्रिय गोलकैरिन्द्रियैरेकादशधा। दशचैकश्चैकादशशतमिन्द्रियवृत्तिभिः। यतोहरहरेकैकेन्द्रिय वृत्तय शतं शतमपरिमिता इति भावः। तथैकेन्द्रियद्वारासहस्रमशुभाः सहस्रं शुभावासना इति दशेन्द्रियैर्विंशतिः सहस्राणि वासना भेदाः अपरिमिता इति तत्वम् । आत्मनः सकाशादेवपूर्वं पूर्ववासनात्मकोयमखिलोभेदः क्रमेणाऽत आत्मैवेति भावः। एवं ज्ञानोदये वहिरङ्गसाधनमाहाहारशुद्धाविति सा चाऽऽहार्यस्य सात्विकत्वेसत्यनिषिद्धत्वेन । सत्त्वमन्तः करणम् । स्मृतिर्वोधः । ग्रन्थयोजगद्वासनाः । विप्रमोक्षस्समूलनाशः । नष्टरागादिदोषायैवमविद्यापारं परं ब्रह्मात्मानं दर्शितवान्सनत्कुमारः स्कन्दाऽपरनामा ॥ २ ॥

इति च्छान्दोग्योपनिषत्प्रसादे सप्तमाध्यायस्तस्य षड्विंशः खण्डश्च ।

अथ स्थूलप्रज्ञाऽसंपन्नसाधनद्वैतवासितान्तःकरणमुमुक्षूणामध्यायद्वयोक्तौ निर्विशेषब्रह्मात्मानौ न सुगमावित्युपाध्यालम्बनक निर्विशेषपर्यवसानकाष्टमप्रपाठकमुपक्रमतेऽथेति—

अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति १

अनन्योपलब्धिस्थानकस्य ब्रह्मणः पुरं नगरं देहस्तत्र दहरमल्पं पङ्कजं हृदयं यत्तद्वेश्मगृहं तदन्तरल्पोय आकाशस्तदन्तस्तदवच्छिन्नं तदाश्रयः साभासान्तःकरणसाक्षिचैतन्यं यत्तद्विवेक्तव्यं ज्ञेयं चेत्यर्थः ॥ १ ॥

शिष्यशङ्कामाह श्रुतिस्तमिति—

तं चेद्ब्रूयुर्यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्मदहरोऽस्मिन्नन्तराकाशः किंतदत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति स ब्रूयात् ॥ २ ॥

हृदयमेवतावदल्पं तदाकाशस्त्वत्यल्पो तस्तस्याप्यन्तः किमस्तियज्ज्ञेयं भवेत्किन्तु न किमपि

संभवतीति चेद्ब्रूयुः शिष्यास्तमुपदेष्टारं तर्हि स वदेत् ॥ २ ॥

किं वदेत्तदाह यावानिति—

यावान्वा अयमाकाशस्तावानेषोन्तर्हृदय आकाशउभे अस्मिन्द्यावा पृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तस्मिन्समाहितमिति ॥ ३ ॥

अयं भूता काशीवैयावाँस्तावान् हृदयावकाशान्तरप्याकाश एवाकाशादि सकलजगदवकाशदानादस्ति तस्यैव चिदाकाशस्यान्तर्हि द्यावापृथिव्यादि यदस्य जीवस्य भावाभावात्मकं वस्तुतत्सर्वं स्थापितमस्ति कल्पितमिति यावत् ॥३॥

एवं चेद्धृदयाकाशस्येव तदाकाशाद्यवशेषोपि देहनाशानन्तरं स्यादिति शङ्कते तं चेदिति—

तं चेद्ब्रूयुरस्मिँश्चेदिदं ब्रह्मपुरे सर्वꣳ समाहितꣳ सर्वाणि च भूतानि सर्वे च कामायदैतज्जरावाप्नोति प्रध्वꣳसते वा किं ततोतिशिष्यत इति ॥ ४ ॥

यदि हृदय एव सर्वं जगत्तर्हि यदा एतच्छरीरं जरावार्द्धक्यं प्राप्नोति जरयेतिभावः प्रहारादिना वा शरीरं प्रकर्षेण ध्वंसते नश्यति ततोनन्तरं किं शिष्यते न किमपि । किं च्चिच्छेषः । किं नस्यादिति भावः ॥ ४ ॥

आचार्योक्तिमाह श्रुतिः स इति—

स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्यहन्यत एतत्सत्यं ब्रह्मपुरेमस्मिन्कामाः समाहिता एष आत्माऽपहत पाप्माविजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पो यथा ह्येवेहप्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपयन्ति ॥ ५ ॥

अस्य देहस्य जरावधाभ्यां नैतच्चिदाकाशं विक्रियते तएतद्ब्रह्माख्यमेव पुरं सत्यं शरीराख्यं त्वनृतमिति भावः । कामाः सकलेष्टस्वर्गादि फलान्यत्रैव सन्ति पूर्णानन्दे क्षुद्रानन्दान्तर्भावात् । तथा पाप्मभिः कर्मभिस्तत्कार्यपानादनेच्छादि-

भिश्च रहित आत्मैष एव । अस्यैव चेश्वरस्य कामविषयकः संकल्पो विषयविषयकोभिलाषः काम‌श्चसत्यः स्वतन्त्रोऽविनाशी सर्वो भवतीति भावः । जीवानान्त्वीश्वराधीनं स विनाशमेव फलं तत्रापि न यथेष्टम् । यथेह लोके प्रजा यथानुशासनं राजशासनमनुल्लङ्घ्याऽनुराजाज्ञानन्तरमिष्टमाविशन्ति लभन्ते तत्रापि यं यं अन्तं प्रदेशं स्थानं यद्वा यमन्तोम्लेच्छदेशस्तदादिकं कंचिदभिकामयन्ते तं तमेव न तु सकलेष्टं तथेत्यर्थः सकलकल्पनाधिष्ठानं चिदाकाशं त्वविनाशित्वादवशिष्यत एवेत्याशयः ॥ ५ ॥

सकलैहिकामुष्मिकाणां सविनाशत्वं ज्ञानाज्ञानफलं चाह तद्यथेति—

तद्यथेह कर्मजितोलोकः क्षीयते एवमेवामुत्रपुण्यजितोलोकः क्षीयते तद्य इहात्मानमननुविद्यव्रजन्त्येता ँ श्च सत्यान्कामा ँ स्तेषा ँ सर्वेषु लोकेष्वकामचारो भवत्यथय इहात्मान मनुविद्यव्रजन्त्येता ँ श्च सत्यान्कामा ँ स्तेषा ँ सर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥

इह यथा राजाज्ञाराधनादिना जन्मान्तरानुष्ठितेन वा कर्मणार्जितो लब्धो लोक ऐश्वर्य सुखोपभोगो नश्यति कालेन तथा केवलपुण्यलब्धस्वर्गाद्युपभोगोपि । तत्तस्मादिह ये आत्मानं सत्यकामत्वादि गुणांश्च एतद्गुणकेश्वरस्वरूपं स्वमिति यावत् न ज्ञात्वा यान्ति परलोकं तेषां न कामचारः किन्तु ज्ञात्वा गतानामित्यर्थः ॥ ६ ॥

इति च्छान्दोग्योपनिषत्प्रसादे ऽष्टमाध्यायस्य प्रथमः खण्डः ।

कामचारताप्रदर्शनपरमपरखण्डमारभते

स यदीति—

स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते ॥ १ ॥

स उक्तविधात्म साक्षात्कारवान् देहपाते यदि पितृरूपं लोकं भोगविशेषसाधनमिच्छति तर्हि पितृविषयकसंकल्पमात्रेण तत्क्षणं निजपितरो मृताजन्मान्तरीया वा प्राप्नुवन्ति तैर्युतो महीयते पूज्यते भोगविशेषान्भुङ्क्ते ॥ १ ॥

एवं विधार्थानाहाष्टभिरथेत्यादिभिः—

अथ यदि मातृलोककामो भवति संकल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन संपन्नो महीयते ॥ २ ॥ अथ यदि भ्रातृलोककामो भवति संकल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन संपन्नो महीयते ॥३॥ अथ यदि स्वसृलोक कामो भवति संकल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन संपन्नो महीयते ॥ ४ ॥ अथ यदि सखिलोक कामो भवति संकल्पा देवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन संपन्नो महीयते ॥ ५ ॥ अथ यदि गन्धमाल्यलोककामो भवति संकल्पा देवास्य गन्धमाल्ये समुत्तिष्ठतः तेन गन्धमाल्यलोकेन संपन्नो महीयते ॥ ६ ॥ अथ यद्यन्नपानलोककामो भवति संकल्पा देवास्यान्नपाने समुत्तिष्ठतः तेनान्न पानलोकेन संपन्नो महीयते ॥ ७ ॥ अथ यदि गीतवादित्रलोककामो भवति संकल्पा देवास्य गी-

तवादित्रे समुत्तिष्ठतः तेन गीतवादित्रलोकेन संपन्नो महीयते ॥८॥ अथ यदि स्त्रीलोककामो भवति संकल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन संपन्नो महीयते९

॥ २ ॥ ३ ॥ स्वसाभगिनी ॥ ४ ॥ ५ ॥ गन्धोमलयजादिर्माल्यं पुष्पम् ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

विशेषमुक्त्वा सामान्यत आह यमिति—

यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति तेन संपन्नो महीयते ॥ १० ॥

यमन्तोन्तोवोक्तार्थः । काममिष्टपदार्थम् । उक्तविधोवाक्यार्थः ॥ १० ॥

इति द्वितीयः खण्डः ।

काम्यन्त इति कामाः सर्वआनन्दा अनात्मविदो न भवन्तीति प्रथमखण्डान्ते तेषामकामचारो भवतीत्यनेनोक्तं तत्र हेतुमावरणमाह त इति—

त इमे सत्याःकामा अनृतापिधानाः तेषाᳬसत्यानाᳬ सतामनृतमपिधानं यो योह्यस्येतः प्रैति न तमिह दर्शनाय लभते ॥१॥

त इमे इत्यस्य विवरणं तेषामिति । तेषामखिलक्षुद्रानन्दकामानां पूर्णानन्दात्मनि सतां विद्यमानानामनृतजातं जगदेवापिधानमावरणम् आत्मरूपेण सदासत्त्वमेव सत्यमिति भावः । आवृतत्वादेवचास्य जनस्य यः पित्रादिरितो लोकान्तरं प्रैति न तं पुनरिह पश्यति कामयमानोपीतिहि प्रसिद्धम् ॥ १ ॥

आत्मवित्त्वात्मस्थान्कामान् लभते मूढस्तु हृदयस्थमथात्मानं नवेत्तीति सदृष्टान्त माहाथेति—

अथ येचास्येह जीवा ये च प्रेताय च्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दतेऽत्रह्यस्यै ते सत्याः कामा अनृतापिधानाः तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरिसंचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यनृतेन हि प्रत्यूढाः ॥ २ ॥

जीवाजीवन्तः प्रेताम्रृता अन्यद्धनादि यदेतत्सर्वमिच्छन्नपीह न लभते तत्सर्वमत्रब्रह्मणि

गत्वा ब्रह्मात्मानं ज्ञात्वा लभते हि यतोत्र ब्रह्मात्मन्येवास्य विदुषः एते कामाः सत्याःस्थिताः परन्तु पूर्वमनृतेनाविद्ययाऽऽवृताः स्थिताः । सर्वस्यात्मकार्यत्वात्सत्यकामत्वादि गुणकात्मवित्सर्वं लभत इति यावत् । अथ हिरण्यस्य निधिं भूमावधोनिहितं स्थापितं कोषं निधिशास्त्रापरिचयेनेदं निधिक्षेत्रमितिज्ञानेन हीना निध्युपरिसदा चरन्तोपि यथा न निधिं लभन्ते तथा नराः प्रतिदिनं सुषुप्तौ हृदयं चरन्तोपि ब्रह्माख्यं लोकं न लभन्ते किन्त्वनृतेनाविद्यया ब्रह्मलोकादन्यस्थले जगति विचालिता भवन्ति ॥ २ ॥

हृदयेति नाम्नो व्युत्पत्तिं हृदयस्थात्मज्ञानफलं च दर्शयति स इति—

स वा एष आत्माहृदितस्यैतदेव निरुक्त ँ हृद्ययमिति तस्माद्धृदय महरहर्वा एवं वित्स्वर्गं लोकमेति ॥ ३ ॥

स एष आकाशपदेनोक्त आत्माहृदि वै प्रसिद्धोतस्तस्य हृदयपदस्य हृदि अयमात्मेत्येतदेव निरुक्तं व्युपादनमर्थोयतस्तस्मात् हृदयम् । एवं हृदयमिति नाम्नोऽर्थस्य रीत्यायोवेत्यात्मानमहरहर्हृदयस्थं भावयति स स्वर्गं याति ॥ ३ ॥

अयमेव च परमात्मा जीवात्मनः परमार्थस्व-
रूपमित्याहाथेति—

अथ य एष संप्रादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्यस्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्-ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नामस-त्यमिति ॥ ४ ॥

संप्रसादः सुषुप्तौ प्रसन्नः शान्तो जीवात्मा देहादुत्थाय देहाभिमानं त्यक्त्वा स्वयं प्रकाशतेजः सान्निध्यं प्राप्य तेन परमार्थस्वस्वरूपेण ज्योति-षैकतां प्राप्नोति ततः एष सुषुप्त्युपलक्षितः पर-ज्योतीरूपएव मुख्यआत्मेत्युवाच वदति तत्त्व-वित् तदेव च ज्योतिरविनाश्यद्वैतं ब्रह्म ब्रह्मणएव च सत्यमितिनाम ॥ ४ ॥

नामसूचितगुणवत्त्वेन नामिभावयतः फल-
माह तानीति—

तानि ह वा एतानि त्रीण्यक्षराणि सतीय मिति तद्यत्सत् तदमृतमथयात्ति तन्मर्त्य-मथयद्यं तेनोभेयच्छति यदनेनोभेयच्छति तस्माद्यमहरहर्वा एवं वित्स्वर्गं लोकमेति ५

सत्यमित्यत्र स सकारः ती तकारः यम् इत्येतान्यक्षराणि । तत्र यत्सत् स दित्येकदेशानुकरणं सकारः तदमृतम् । यत्तितकारस्तत् सदन्यत्वान्मर्त्यमसत् । यद्यम् तत्तुनाम्नः पूरकमिति तेन यमित्यक्षरेणो भेपूर्वेक्षरे यच्छति नियमयति पूरयति श्रुतिर्नामवेति शेषः । यद्यस्मात्सदसदुभेस्व स्वरूपेण यच्छति तस्माद्यमित्युच्यते । रज्जुरहिमिव सच्चासच्च ब्रह्मैव प्रत्याययत्येवं भावकः स्वेरेति ॥५॥

इति तृतीयः खण्डः ।

अथ गुणान्तरयुतं ब्रह्मात्मानं भावयति अथेति—

अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय नैत ᳩ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं नदुष्कृत ᳩ सर्वेपाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः ॥ १ ॥

य आत्मा परमात्मा स सेतुरसंभेदायाखिलपदार्थस्वभावानां विधारकः पालकः यथा क्षेत्रशस्यादि विभागाय मध्येमध्येकृतः सेतुः कृषीवलैः । किंच क्षेत्रेण तद्गतशस्यकर्षणखननवप-

नादिभिर्वा यथानसंवध्यते सेतुस्तथा कालतत्कृत जरादिभिर्वा परमात्मा । यस्माच्च सर्वे तोस्मात्परमात्मसेतोः सकाशान्निवर्तन्तेत्र न संबध्यन्तेतः शुद्ध एष एव ब्रह्माख्यो लोकोमुमुक्षुप्राप्यः ॥१॥

सेतुगुणयुतं ब्रह्मात्मानं विदुषः फलमाह तस्मादिति—

तस्माद्वा एत ँ सेतुं तीर्त्वान्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवति उपतापी सन्ननुपतापी भवति तस्माद्वा एत ँ सेतुं तीर्त्वापिनक्तमहरेवाभिनिष्पद्यते सकृद्विभातोह्येवैष ब्रह्मलोकः ॥ २ ॥

यस्मात्सेतुरात्मानकर्मणासंवध्यते तस्मात्सेतु मात्मानं ज्ञात्वाऽज्ञवोधेनान्धोपि निजवोधेननान्धः तथा विद्धोदुःखी सुखी वा न तथोपतापी शोकी न । कालसन्वन्धाभावाच्च रात्रावपि दिनमेव भवति सदा प्रकाशते इत्यर्थः अयमेव च सदा प्रकाशमानो ब्रह्माख्यो लोकः ॥ २ ॥

ब्रह्मचर्यमप्यात्मज्ञानसाधनमिति सफलमाह तदिति—

तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैषब्रह्मलोकस्तेषा८ सर्वेषु लोकेषु कामचारो भवति ॥ ३ ॥

तत्तेषां मुमुक्षूणां मध्ये ये एव ब्रह्मचर्येण ब्रह्मजानन्ति तेषामेव ब्रह्मएयन्येषु वा लोकेषु यथेष्टगतिर्भवति ॥ ३ ॥ इति चतुर्थः खण्डः ।

ब्रह्मचर्यमावश्यकमिति बोधनाय ब्रह्मचर्यपूर्वकत्वादखिलं कर्मशास्त्रीयं ब्रह्मचर्यमेवेति ब्रह्मचर्यस्तुतिमुपक्रमतेथेति—

अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत् ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दते अथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तत् ब्रह्मचर्येण ह्येवेष्ट्वात्मानमनुविन्दते ॥ १ ॥

यज्ञ इति यद्वदन्ति तद्ब्रह्मचर्यमेव हि यतो यो ब्रह्मचर्येणैव यज्ञस्य ज्ञातानुष्ठाता भवति स एव तं यज्ञगुणं लभते । एवं ब्रह्मचर्येणैवात्मानमीश्वरमिष्ट्वा पूजयित्वा तत्फलं लभते यतोत इष्टं यागविशेषमपि ब्रह्मचर्यमेव ॥ १ ॥

अथ यत्सत्त्रायणमित्याचक्षते ब्रह्मचर्य-

मेवतत् ब्रह्मचर्येणह्येव सतआत्मनस्त्राणं विन्दते अथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तत् ब्रह्मचर्येण ह्येवात्मानमनुविद्यमनुते २

वहुकर्तृकं वैदिकं कर्मसत्त्रायणम् तदपि ब्रह्मचर्येणैव कृतं सतस्त्रायणं रक्षेति शब्दोक्तफलदं यतः । तथा मौनं मुनिभावोमननमपि ब्रह्मचर्यपूर्वकाध्ययनेनात्मानं ज्ञात्वा करोति । पूर्ववदन्वयः२

आत्मज्ञानायानशनमरण्यवासात्मकं तपश्च ब्रह्मचर्यमेवत्युक्तिपूर्वकं ब्रह्मलोकवर्णनं करोत्यथेति—

अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेवतत् एषह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते अथ यदरण्याय न मित्याचक्षते ब्रह्मचर्यमेवतत् तदरश्च हवैण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितोदिवि तदैरं मदीय ँ सरस्तदश्वत्थः सोमसवनस्तदपराजितापूर्ब्रह्मणः प्रभुविमित ँ हिरामयम् ॥ ३ ॥

ब्रह्मचर्येण ब्रह्मचर्यपूर्वकानाशकायनेनयमात्मानमनुविन्दते लब्धुमिच्छति एष आत्मा हियतो

न नश्यति किन्तु लभ्यते । तपसस्तु स ब्रह्मचर्यतातिस्फुटा । अथ तत्तस्मिन् इतो भूलोकात्तृतीये दिवि स्वर्गाख्ये ब्रह्मलोके भूर्भुवः स्वरिति त्रिलोकविवक्षात्रेति भावः। अरश्चरायश्चेति द्वौ समुद्रौ इराऽन्नं तद्रसपूर्णं मदीयं मदकरं सरः । सोमोमृतं तत्स्राव्यश्वत्थः । अपराजिताख्या ब्रह्मणो नगरी । ब्रह्मणा प्रभुना रचितं हिरमयं पराडपं च सन्तीत्यर्थः ॥ ३ ॥

ब्रह्मचर्येण सगुणब्रह्मणोभावकानां परब्रह्मात्मब्रह्मलोकप्राप्तेः प्राक्वर्णितसत्याख्यब्रह्मलोकादि प्राप्तिरपियथाकामं भवतीत्याह

तद्य इति—

तद्य एवैतावरं चण्यं चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दति तेषामेवैष ब्रह्मलोकस्तेषा५ सर्वेषु लोकेषु कामचारो भवति ॥४॥

ब्रह्मचर्येणैव येतत्तत्र ब्रह्मलोकेऽर्णवादिकं लभन्ते तेषामेव यथा वर्णितसत्यादिलोकेषु यथेष्टगतिर्भवति नाऽब्रह्मचर्यवतामिति भावः ॥४॥

इति पञ्चमः खण्डः

लोकेषु गमिष्यन्केन द्वारेण निर्यातीत्येतदर्थ-मुपक्रमतेऽथेति—

अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः॥१॥

सूर्यस्वरूपरश्मिसंपर्केण त्रिधातुपाकतश्चित्रविशेषो वर्णः पिङ्गलस्तदाद्यपञ्चवर्णा हृदयनाड्यः सन्ति । ते च वर्णा असावाकाशग आदित्यो वै एवेत्यर्थः ॥ १ ॥

सूर्यस्य नाड़ीषु संबन्धं दृष्टान्तेनाह तद्यथेति—

तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चाऽमुष्मादादित्यात्प्रतायन्ते ता आसु नाड़ीषु सृप्ता आभ्यो नाड़ीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः ॥ २ ॥

आततो विस्तीर्णो महापथो राजमार्गो यथेमं निकटस्थममुं दूरस्थं च ग्रामं याति तथैतारवि-

रश्मयोमुं मनुष्यलोकमादित्यं च । तथाहि । आदित्याल्लम्बमाना नाड़ीषु नृदेहेषु नाड़ीभ्यस्तूर्ध्वमादित्येभ्याप्ता रश्मयो दृश्यन्ते ॥ २ ॥

रश्मिसंवद्धनाड़ीष्वहरहर्जीवगतिमाह तदिति—

तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति आसु तदा नाड़ीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा संपन्नो भवति ॥ ३ ॥

यतो नाड्यो रश्मियुतास्तत्ततो यत्र यदा एष जीवश्चासौ सुप्तः सम्यगस्तोलीनवृत्तिरत एव सम्यक् प्रसन्नः सन्स्वप्नं नपश्यति तदा नाड़ीषु गतोरवितेजसायुतश्च भवत्यत एव तं जीवं न कोपि पाप्मा जीवत्वं स्पृशति शुद्धपरमानन्दरूपो भवतीति भावः ॥ ३ ॥

मरणकाले नाड़ीगतो भवति जीव इति ज्ञापनाय सुप्ताविवतदाप्यज्ञानं दर्शयत्यथेति—

अथ यत्रैतदवलिमानं नीतो भवति तमभित आसीनाआहुर्जानासि मां जानासि

मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति ॥ ४ ॥

यत्र मरणसमये एतत्प्रसिद्धमवलभावं याति जनस्तदा सर्वतः स्थित्वा मां जानासीति तं वदन्ति । स च यावद्देहेन न वियुज्यते तावद्यथाशक्ति जानाति ॥ ४ ॥

परलोकगतिं निरूपयत्यथेति—

अथ यत्र तदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ओमिति वाहोद्वा मीयते स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ॥ ५ ॥

एतदुपासकजीवात्मतत्त्वं यदा देहान्निर्यातुं भवति तदा नाड़ीद्वारोर्ध्वमागत्य सुषुम्नाख्यनाड़ीसंवद्धरविरश्मिद्वारोपरियाति । कथं तदाह स उपासकः ओमिति वा ओङ्कारोपलक्षितमेव स्वरूपं ह स्फुटं ध्यायन् उद्वाऊर्ध्वमेव मीयते याति । यावता कालेन मनःक्वचिद्विषये यायात्तावत्कालेनातिशीघ्रमिति भावः रविमण्डलं याति । यतो

ब्रह्मलोकद्वारमेतन्मण्डलम् । एतच्च प्रपदनं वर्त्म- विदुषामुपासकानामेव । अन्येषान्तु निरोधोनेन गतिर्न भवतीति भावः ॥ ५ ॥

अत्रार्थे मन्त्रं प्रमाणयति तदेष इति—

तदेष श्लोकः । शतं चैका च हृदयस्य नाड्यस्तासां मूर्द्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्त्युत्क्रमणे भवन्ति ॥ ६ ॥

तत्त्रोक्तेर्थेश्लोको मन्त्रः । एकोत्तरशतं नाड्यः मूलेन हृदयसंबन्धिन्यः तत्रैकामूर्द्धाभिमुखं गता तद्द्वारादेहादूर्ध्वं गच्छन्मुक्तिमेति । विष्वङ्सर्वतो गतास्तदन्या नाड्यस्तु केवलं देहान्निर्गमनायैव सन्ति ॥ ६ ॥

इति षष्ठः खण्डः ।

स गुणं विद्वान्सुषुम्नया सूर्यमण्डलेन ब्रह्मलोकं गत्वा मुच्यत इत्युक्तम् मुक्तिश्च निर्गुणब्रह्मतेति तामापरोक्ष्येण दिदर्शयिषुरात्मानं निरूपयिष्यन्नात्मविद्यामहत्त्वसूचकाख्यायिकामवतारयति

य इति—

य आत्माऽपहतपाप्मा विजरो विमृत्यु-र्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामान् यस्तमात्मानमनुविद्य विजानातीतिह प्रजापतिरुवाच ॥ १ ॥

पाप्मा संसारप्रदं सुकृतं दुष्कृतं च तेन जरा मृत्युशोकक्षुत्तृड्भिश्च रहितः तथा विषयाभिलाषः कामः कामविषयक मनोरूप संकल्पश्च सत्योयस्येदृशोय आत्मातं विविच्य यो जानाति स सर्वान् लोकान्मनोरथाँश्चाप्नोतीत्युवाच ब्रह्मा कदाचित् ॥ १ ॥

तद्धोभये देवासुरा अनुबुबुधिरे ते होचुर्हन्त-तमात्मानमन्विच्छामो यमात्मानमन्विष्य-सर्वाँश्च लोकानाप्नोति सर्वाँश्च कामानि तीन्द्रो है व देवानामभिप्रवव्राज विरोचनो सुराणां तौहासं विदानावेव समित्याणी प्रजापति सकाशमाजग्मतुः ॥ २ ॥

देवा असुराश्चोभयेनुपश्चात्कालान्तरे परं परयातद् ब्रह्मवाक्यं शुश्रुवुः । यस्यान्विष्यज्ञानेफलमीदृशं तदन्वेषणं करिष्याम इत्यूचुस्ततस्ते । अथ देवेष्विन्द्रएवासुरेषु वैरोचन एव ब्रह्मणोभिमुखं प्रवव्राज परित्यज्याखिलभोगानेकाकीचलितः ततस्तौ परस्पराज्ञातवृत्तान्तौ काष्ठहस्तौ ब्रह्मसमीपं गतौ ॥ २ ॥

एवमात्मज्ञानाय विषयविरागपूर्विकांगुरूपसत्तिमभिधाय विरोधिनोरप्यविरोधिनोः साहित्येन दीर्घनिरन्तरगुरुशुश्रूषामाह तौ हेति—

तौ ह द्वात्रि ँ शतं वर्षाणि ब्रह्मचर्यमूषतुः तौ ह प्रजापतिरुवाच किमिच्छन्तावऽवास्तमिति तौ हो चतुर्य आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो पिपासः सत्यकामः सत्यसंकल्पःसोन्विष्टव्यः सविजिज्ञासितव्यः स सर्वाँश्चलोकानाप्नोति सर्वाँश्च कामान् यस्तमात्मानमनुविद्यविजानातीति भगवतो वचो वेदयन्तेत मिच्छन्ताव वास्तमिति॥३॥

किमिच्छया ब्रह्मचारिधर्मेण गुरुशुश्रूषादिने ह्यत्रां वास इति पृच्छन्तं ब्रह्माणं य आत्मेत्यादि भवद्वाक्यमुपदिशन्त्याप्तास्तच्छ्रुत्वात्मेच्छयेत्यूचतुस्तौ।३।

कोशविवेकेनात्मावबोधनायोपायाः शिक्ष्यमाणानामिति न्यायेन च्छायात्मानं तावद्ग्राहयति ताविति—

तौ ह प्रजापतिरुवाच य एषोक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति अथ यो यं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एष इति एष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति होवाच ॥ ४ ॥

चक्षुषि यं पुरुषं पुरुषाः पश्यन्ति स आत्मा ब्रह्म च नित्यमिति श्रुत्वा तादृशस्तु जलदर्पणादावपि दृश्यते तर्हि तेषु कतमो भगवन्नात्मेति वदन्ताविन्द्रविरोचनावुवाच धातायोक्षिण्युक्तः स एवो वितर्के जलादि मध्येषु च दृश्यते इति ॥४॥

इति सप्तमः खण्डः ।

उक्तदार्थ्यायाहो देति—

उदशराव आत्मनमेवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति तौ होदशरावे वेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आलोमभ्यः प्रतिरूपमिति ॥ १ ॥

आत्मानं जलपूर्णपात्रे पश्ययद्यात्मनः किंचिदज्ञातं स्यात्तर्हि तन्मह्यं युवां ब्रूतामिदं न ज्ञातमित्येतद्ब्रह्मवाक्यात्पश्यन्तौ प्रति किं युवां पश्यथ इत्युक्तवन्तं ब्रह्माणमूचतुस्तौ हे भगवन्नात्मानं तत्संबन्धि च सर्वमिदं लोमनखपर्यन्तं प्रतिरूपं पुरुषसदृशं पश्याव इति न किंचिदङ्गमविज्ञातमस्तीति भावः ॥ १ ॥

यस्यच्छाया तत्रात्मत्वं ग्राहयन्नाहतौ हेति—

तौ ह प्रजापतिरुवाच साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षथा मिति तौ ह साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेवेक्षां चक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥ २ ॥

दिव्यवस्त्रभूषणैः सुवेषौ भूत्वा पुनः शरावे पश्यतमित्याज्ञया तथा भूतौ ब्रह्मोवाच किं युवां पश्यथ इति ॥ २ ॥

तौ हो चतुर्यथैवेदमावां भगवः साध्वलंकृतौ सुवसनौ परिष्कृतौ स्व एवमेवेमौ भगवः साध्वलंकृतौ सुवसनौ परिष्कृताविति एष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ३

आवामिदं प्रत्यक्षं यथास्यात्तथा यादृशौ स्वलादृशावेवेमौ शरावगाविति वदन्तौ देह एव दृष्ट आवाभ्यामिति भावौ प्रति ब्रह्मोवाचायमेवात्मा नित्यं ब्रह्मेति ततः शान्तजिज्ञासौ प्रकर्षेण शीघ्रं जग्मतुः ॥ ३ ॥

समानेऽपिगुर्वनुग्रहे यथा प्रज्ञमेवाभ्युदय इति सूचनाय गुरोर्विरोचनस्य च वृत्तान्तमाह ताविति—

तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्यात्मानमननुविद्यव्रजतः यतरे एतदुपनिषदो भविष्यन्ति देवा वा असुरा वातेपरा भवि-

ष्यन्तीति सह शान्तहृदय एव विरोचनो सुराञ्जगाम तेभ्यो हैतामुपनिषदं प्रोवाच आत्मैवेहमहय्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुंचेति ॥ ४ ॥

कगताविति तावन्विष्योद्दिश्यवो वाचधाता। पारोक्ष्येणाप्यऽप्राप्य साक्षाच्चाकृत्वात्मानमिमौ गच्छतो तोयतरेयेन्येप्यऽसुरास्सुरा वा तेप्येषेन्द्रविरोचनयो रुपनिषदात्मबुद्धिर्येषां ते तः पराभूता सुक्तिहीनाश्च भविष्यन्तीति । एतच्चवचः श्रुत्वा पुनरायास्यतो मामिति धातुराशयः । अथ श्रुत्वापि विरोचनो नुत्पन्नविवेको सुरान् गत्वोपदिदेश आत्मा देह एवातस्स एव पूज्यो लालनपालनाभ्यां सेव्यश्च एवमेव लोकद्वयसुखमाप्यते इति ॥ ४ ॥

वैरोचनसंप्रदायस्त्वयमद्यापि दृश्यत इत्याह तस्मादिति—

तस्मादप्यद्येहाऽददानमश्रद्दधानमयजमानमाहुरासुरोवतेत्य सुराणा ँ ह्येषोप-

निषत् प्रेतस्य शरीरं भिक्षया वसने नालं-
कारेणेति सँस्कुर्वन्त्येतेनह्यमुं लोकं जेष्यन्तो
मन्यन्ते ॥ ५ ॥

तस्माद्विरोचनोपदेशात्परं परयाद्यापीहदानं
श्रद्धां पूजां चाकुर्वाणमासुरोयमिति वदन्ति हि
यतो सुराणामियं बुद्धिः । किं चासुरस्वभावामृत-
देहमन्नवस्त्रभूषणैः भूषितं कुर्वन्ति मन्यन्ते चा-
नेनैवात्मसंस्कारेण परलोक जेष्यामोयमेव स्वर्ग
इति भाव इति ॥ ५ ॥

इत्यष्टमः खण्डः ।

अथ सत्त्वप्रधानप्रकृतिकेन्द्रवृत्तान्तमाहाथेति—

अथ हेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श
यथैव खल्वयमस्मिञ्छरीरे साध्वलंकृते सा-
ध्वलंकृतो भवति सुवसने सुवसनः परि-
ष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेन्धो
भवति स्रामेस्रामः परिवृक्णे परिवृक्णोस्यैव
शरीरस्य नाशमन्वेष नश्यति ॥ १ ॥

इन्द्रस्तु देवा न प्राप्य पथ्येव लोकशास्त्रप्र-
सिद्धनित्यत्वाद्यात्म लक्षणं भावयन् गुरूपदिष्ट-

च्छायात्मनिभयं वैपरीत्यं ज्ञातवान् यथायं छा-यात्मा देहे सुवेषिते सुवेषो भवति तथान्धेच्छरन्न-वद्धारके छिन्ने नष्टेन्धादिरपि भवतीति ॥ १ ॥

तदनन्तरवृत्तान्तमाह नेति—

नाहमत्र भोग्यं पश्यामीति समित्पाणिः पुनरेयाय त ँ ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः सार्द्धं विरोचनेन किमिच्छन्पुनरागम इति सहोवाच यथैव खल्वयं भगवोस्मिञ्छरीरे साध्वलंकृते सा-ध्वलंकृतो भवति सुवसने सुवसनः परि-ष्कृते परिष्कृत एवमेवायमस्मिन् अन्धेन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्रभोग्यं पश्यामीति ॥ २ ॥

तस्मादत्र देहतच्छायारूपात्मज्ञाने भोग्यं फलं पारलौकिकं यदुक्तमात्मज्ञाने तन्न पश्यामि न संभवति देहतत्प्रतिविम्बयोरत्रैव नाशदर्शना-दिति विचार्य पुनः पूर्ववदुपागतो यद्यतो विरो-चनेन सह शान्तजिज्ञासो भूत्वाऽऽशुगतोतः पृ-

च्छामि किमर्थं पुनस्त्वमागम इतीति ब्रह्मणो वाक्यं श्रुत्वा स्वविचारमुक्तमुक्तवानिन्द्रः ॥ २ ॥

सत्यः तत्रैषविमर्शोऽतः पुनरात्मानं तुभ्यमुपदेक्ष्यामि परन्तु पूर्ववच्चित्तशुद्ध्ये श्रयब्रह्म चर्यमिति ब्रह्मगिराकृतब्रह्मचर्यायोवाच ब्रह्मेन्द्रायेत्याहैवमिति—

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोनुव्याख्यास्यामिवसापराणि द्वात्रिᳫंशतं वर्षाणीति सहापराणि द्वात्रिᳫं शतं वर्षाण्युवास तस्मै होवाच ॥ ३ ॥

इति नवमः खण्डः ।

अथोपदेशान्तरं पूर्ववदिन्द्रविमर्शं चाह य इत्यादि द्वाभ्याम्—

य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति सह शान्तहृदयः प्रवव्राज सहऽप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदᳫंशरीरमन्धं भवत्यऽनन्धः स भवति यदि स्राममस्रामा नैवैषोऽस्य दोषेण दुष्यति ॥ १ ॥ न वधेनास्य ह-

न्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं वि-
च्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव
नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

एष सर्वप्रत्यक्षो यः स्वप्ने महीयमानः प्रधानः
सन् चरति स्वाप्नं भुङ्क्ते एषोऽमृतादिलक्षण
आत्मेत्युपदिष्टः पूर्ववदाशु निवृत्तः पथ्येवभयं वि-
कारमालोचितवान् । तत्प्रसिद्धं स्थूलम् । देहस्या-
न्धत्वस्रामत्वादिनाछायात्मेव स्वाप्न आत्मा यद्यपि
न दुष्यति न युज्यते तथाप्यऽर्यादय एनं घ्नन्त्येव-
घ्नन्तीव विद्रावयन्तीव च भान्ति स्वयं चाप्रि-
यस्य प्रियहान्यादेर्वेत्ताशोचितेव रोदितीव च भ-
वति तथा च विकारित्वादस्मिन्नप्यात्मनिज्ञाते
फलं न पश्यामीति ॥ १ ॥ २ ॥

शिष्यसत्प्रज्ञामन्तरेणोपदेशः श्रमफलक एव
सा च गुरुशुश्रूषादिनैवेति गुर्वाशयज्ञस्य सो-
त्साहं पुनर्गुरूपसत्त्याद्याह स इत्यादि
द्वाभ्याम्—

स समित्पाणिः पुनरेयाय तꣳह प्रजा-
पतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः

किमिच्छन् पुनरागम इति सहोवाच तद्य-द्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥

न बधेनास्य हन्यते नास्य स्राम्येण स्रा-मो घ्नन्ति त्वेवैनं विच्छादयन्तीवाऽप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्या-मीति एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामिवसापराणि द्वात्रिं शतानि वर्षाणीति सहापराणि द्वात्रिं शतं वर्षाण्युवास तस्मैहोवाच ॥ ४ ॥

पुनर्गुरुं गत इन्द्रः किमर्थमागत इति पृष्ट उ-क्तामालोचनां पथिकृतामुवाच ततो यद्वदसित देवमेवात एतमात्मानं पुनरुपदेक्ष्यामि परन्तु पू-र्ववद्वसपुनारित्युक्त उवास तत उवाच ब्रह्मेन्द्राय ३।४

इति दशमः खण्डः।

सदान्वयं बोधयितुं सुषुप्तवस्थमुपदिदेशेत्या हितदिति—

तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद् ब्रह्मेति स ह शान्तहृदयः प्रवव्राज सहाप्राप्यैव देवानेतद्भयं ददर्श नाह खल्वयमेव ᳡ संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥

तत्प्रसिद्ध एतदयं जीवात्मा यत्र यदा सुप्तः समस्तव्यवहारत्वात्सम्यगस्तो लीनो सन्निव भवति किंचन स्वप्नं न पश्यत्यत एव संप्रसन्नो निर्विकार एष आत्मा नित्यं ब्रह्मेति । अथायमस्मीत्येवं स्वमन्यानि वा भूतानि संप्रति सुषुप्तौ ह स्फुटमयमात्मा नाखलु नैव जानात्यतो विनाशमेव प्राप्तो भवत्यतोत्राप्यात्मनि ज्ञाते सुखं न पश्यामीति भयं दोषं पुनः पथ्येवेन्द्रो ददर्श ॥ १ ॥

ततो मार्गादेव पुनः परावृत्यगुरूप सत्त्यादि पूर्ववदाह स इति—

स समित्पाणिः पुनरेयाय त᳡ ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः

किमिच्छन्पुनरागम इति स होवाच नाह खल्वयं भगव एव ᳪ संप्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

गतार्थपदार्थमेतत् ॥ २ ॥

अथ ब्रह्मोवाचैवमिति—

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोनुव्याख्यास्यामि नो एवान्यत्रैतस्माद्वसापराणि पञ्चवर्षाणीति सहापराणि पञ्चवर्षाण्युवासतान्येकशत ᳪ संपेदुरेतत्तद्यदाहुरेकशत ᳪ ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाच ॥ ३ ॥

एतस्मादात्मनोन्यविषये नैव व्याख्यास्यामि किंत्वेतमात्मानमेव । तानि चतुर्वार ब्रह्मचर्यवर्षाणि मिलित्वैकोत्तरशतवर्षाणि संपन्नानि सुरेन्द्रोयदैकशतं वर्षाणि व्रतेन सिषेवे तदात्मज्ञानं याथातथ्येनापेति यत् आहुर्वदन्ति लोके-

सर्वत उत्तमत्वदुर्लभत्वाख्यानाय तदेतत्प्रदर्शित-
मिति शेषः ॥ ३ ॥

इत्येकादशः खण्डः ।

अथैवमुक्तोवस्थात्रये क्रमेण त्रिषु शरीरेषु प्र-
तिबिम्बद्वारातादात्म्यामापन्नश्चिदात्मा सत्यपि
विवेकेभात्येव विकारीव त्रिकारि शरीरत्रया भा-
वेतु न तु विकारीवाऽविकारीव वा भात्यवि-
ज्ञेयत्वात्कस्यापि—

भाति तु केवलं भा रूपत्वाद्विवेकिनो निर्वि-
कल्पसमाधिदशायामिव तथाच विकारीव यदा
तदापि भात्येव नित्यनिर्विकार ब्रह्मस्वरूपइत्युप-
देशमुपक्रमतेमघवन्निति ।

मघवन्मर्त्यं वा इदꣳशरीरमात्तं मृत्युना त-
दस्यामृतस्याशरीरस्यात्मनोधिष्ठानम् आत्तो
वै स शरीरः प्रिया प्रियाभ्याम् न वै स
शरीरस्य सतः प्रियाप्रिययोरपहति रस्ति
अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः॥ १॥

मर्त्यं वै विनाश्येव । यतो मृत्युनात्तमनुक्षणं
कालेन ग्रस्यते। तच्छरीरमशरीरत्वादमृतस्यात्मनो

भोगायतनम् । तथा च यावत्सशरीरो देहभासवान् व्याप्त इव तावत्सुखदुःखाभ्यां भवति न तयोरपहतिरभानं तावत् । वस्तुतस्तु सदैव विवेकोत्तरं वा देहे नष्टे वा शरीराभासहीनं सन्तं नवावनैव सुखदुःखे स्पृशतः ॥ १ ॥

देहादितादात्म्यमपहायासङ्गपरमार्थ निराकार स्वस्वरूपावस्थितौ दृष्टान्तमाहाशरीर इति—

अशरीरो वायुरभ्रं विद्युत् स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात्समुत्थाय परं ज्योतिरुपसंपद्यस्वेन रूपेणाभि निष्पद्यन्ते ॥ २ ॥

वायुर्मेघो विद्युन्मेघशब्द एतानि पूर्वमशरीराण्याकाशाद्भेदेनाप्रतीतान्यपि यथा तत् तत्रैवाकाशे आकाशात्समुत्थाय भेदं प्राप्य परं ज्योतिरभिव्यक्तिं गत्वा स्वस्वरूपेण प्रतीयन्ते ॥२॥

दार्ष्टान्तिकमाहैव मिति—

एव मेवैष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुप संपद्यस्वेन रूपेणाभि निष्पद्यते सउत्तमपुरुषः स तत्रपर्यैति जक्षत्क्री-

ड़न् रममाणः स्त्रीभिर्वायानैर्वा ज्ञातिभिर्वा-
नोप जन ऽ स्मरन्निद ऽ शरीर ऽ स यथा प्र-
योग्य आचरणे युक्तएव मेवाय मस्मिञ्छ-
रीरे प्राणोयुक्तः ॥ ३ ॥

एवं तथा संप्रसादो जाग्रत्स्वप्नावनुभूय सुषुप्तौ प्रसन्नः शान्त एष जीवो देहत्रयादुत्थायात्मानं विविच्य ज्योतिश्चैतन्यं स्वरूपं बुध्वापरमार्थ स्व-स्वरूपेण स्थियते । सच्चिद्रूपस्तुरीयो विश्वतैजस प्राज्ञपुरुषेभ्य उत्तमः । स जीवो यदा तत्र चि-न्मात्रस्वरूपे व्याप्नोति चिदात्मना स्थीयते त-दान्य दृष्ट्या भक्षयन् क्रीड़न् स्त्रीयानज्ञातिभिः रममाणोप्युप जातमिदं शरीरं नस्मरत्यह मिदं ममवेति । तर्हि भक्षणादि प्रवृत्तिर्जीवनं च न-स्यादित्याशङ्कययावदारब्धं चिदाभास सत्तया यथा पूर्व मनात्मना मेव देहेन्द्रियादीनामिदानी मपि प्रवृत्तिरित्याशये नाह स यथेति यथा सप्र-योज्योश्वादिश्चलनादि करणेरथादौ केन चिन्नि-युक्तः प्रवर्तते एवं प्राणादि रपि ॥ ३ ॥

तथा चानात्मधर्मा एव सत्ताप्रदात्मन्य विवे-
कात्प्रतीयन्त इति सूचयत्यथेति—

अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेद ँ शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥ ४ ॥

यत्रात्मन्यधिष्ठाने पूर्वमाकाशो नेत्र गोलकाद्यवच्छिन्नोऽध्यस्तस्तमनुपश्चादेतच्चक्षुरिन्द्रियं विषण्णं स्थितमध्यस्तं तदा स आत्मा चक्षुषि भवस्सत्ताप्रदस्सश्चाक्षुषः पुरुष इत्युच्यते । रूपग्रहणाय चक्षुः चक्षुरेव द्रष्टा पश्यामीति स्वात्मनि भ्रम इति भावः । एवं जिघ्राणीत्यादि यो वेदयत्र भ्रमः स आत्मेत्यादि रथोंऽग्रे बोध्यः । व्याहार उक्तिः ॥ ४ ॥

एवं सर्वेन्द्रियार्थावभासकान्तः करणेनाप्यसंबद्ध आत्मेति सूचयत्यथ य इति—

अथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान्कामान् पश्यन् रमते ॥५॥

मनः कर्तृकं मननं यत्रनिजं भात्यस्यात्मनो मनो दैवं द्योतनात्मकं चक्षुः साधनम् । तथा च सवै अधिष्ठान चिद्रूप एवात्मा एष भ्रान्त इव सन्नेतेन मनसा ब्रह्मात्मस्वरूपे लोके ध्यस्ताये एते इत्यग्रिमग्रन्थेन्वयः कामा विषयास्तान् गृह्णन् रमते ॥ ५ ॥

एव मात्मान मुपदिश्य तज्ज्ञानफलमाह

तं वा इति—

य एते ब्रह्मलोके तं वा एतं देवा आत्मान मुपासते तस्मात्तेषा ᳚ सर्वे च लोका आत्ताः सर्वे च कामाः स सर्वाँश्च लोकानाप्नोति सर्वा ᳚ श्च कामान् यस्तमात्मान मनुविद्य-विजानातीति ह प्रजापतिरुवाच प्रजापति-रुवाच ॥ ६ ॥

तं वै तमेवोक्तं चिन्मात्र मे वै तं बोधात्मना हृदिसदाभात मात्मानं देवा ब्रह्मादय उपासते जानन्ति । आत्ताः प्राप्ताः । नेदं विधिहरिहरमात्र नियतं किन्तु यः कोप्यऽन्विष्पजानाति स लोकं भोगप्रदारब्ध विशेषबलेनामूलवासनाभासवत्तया

विशेषरूपान्निर्वासनतया सकलाधिष्ठान निरतिशयानन्दरूपात्म रूपान् वा लोकान्कामान् प्राप्नोति ॥ ६ ॥ इति द्वादशः खण्डः ।

एवमात्मानं तज्ज्ञानफलं चाभिधाय धनप्राप्त्य नन्तरं दीनस्येवाप्तात्म ज्ञानस्य चित्तवृत्ति-माह मन्त्रेण श्यामादिति—

श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य धूत्वाशरीरमकृतं कृतात्मा ब्रह्मलोकमभिसं भवामीत्यभिसं भवामीति १

श्यामस्तमःप्रायासुषुप्तिः । शबलं चित्रं जाग्रत्स्वप्नश्च । प्रपद्ये धावामि । पापं दुःखहेतुः सकामकर्म । राहुरवोधस्तन्मुखमहङ्कारः । अश्वोऽश्वोधूननेन रोमाद्यपनीय सुखं राहुमुक्तश्च चन्द्रः प्रकाशं याति तथा ह मपि संप्रति अकृतं न कदापि जातं शरीरत्रयं धूत्वा बुध्वा कृतात्माज्ञातात्मयाथात्म्यो ब्रह्मस्वरूपं प्राप्तोस्मि ॥ १ ॥

इति त्रयोदशः खण्डः ।

अथाद्वैतात्मानुसन्धानपूर्वक पुनर्द्वैतासम्भवात्मक चित्तवृत्तिमाहाकाश इति—

आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरातद्ब्रह्मतदमृत ँ स आत्मा । प्रजापतेः सभांवेश्मप्रपद्ये यशोहं भवामि ब्राह्मणानां यशोराज्ञां यशोविशां यशोह-मनुप्रापात्सि सहाहं यशसां यशःश्येतमद-त्कमदत्कँ श्येतांलिन्दुमाऽभिगांलिन्दुमाभि-गाम् ॥ १ ॥

आसर्वतः काशः प्रकाशमानो वोधएव नाम रूपात्मकजगतोनिर्वाहकः सत्तास्फूर्तिप्रद इति नाम प्रासिद्धम् तथाचार्ककरेषु मरीचिकेवतेनाम रूपे यदन्तरायस्यान्तर्गतेतन्नित्यंब्रह्मैवात्मा प्र-त्यक् एवं परमार्थात्मज्ञान्यहं ब्रह्मणः सभारूपं वेश्मगृहं सति वासनाभासे गच्छेयम् । ब्रह्मलो-कगतिरेवच स्वधर्मरतानां वैदिकानां द्विजातीनां यशांसि तद्भवामि प्राप्स्यामि । यशोनुयशःप्रा-प्त्यनन्तरं तु स उक्तात्माह मुक्तानामपि यशसां यशः कैवल्यं प्रापात्सिप्राप्स्यामि । ततश्चश्येतं पा-ण्डुरमीषद्रक्तमग्रेश्वेतामित्युक्तेः अदत्कंदन्तराहित-

मप्यदत्तं भक्षकं हानिकरमतिलम्पटानां बलादेः तथा लिन्दुस्निग्धम् स्त्रीलिङ्गंयोनिमितियावत् माभिगां न गच्छेयं जन्मायकदापीत्यर्थः । जन्मानर्थकरमित्यभ्यासः ॥ १ ॥

इति चतुर्दशखण्डः ॥

अथवासनाऽऽभासयुतज्ञानिन इव यावज्जीवंत्रयी धर्मरतस्याकामस्यापि गतिरितिज्ञानप्रवृत्ति परंपरोक्तिपूर्वकमाह तद्धेति ।

तद्धैतद्ब्रह्माप्रजापतयउवाच प्रजापतिर्मनवेमनुः प्रजाभ्यः । आचार्यकुलाद्वेदमधीत्य यथा विधानं गुरोःकर्मातिशेषेणाभि समावृत्य कुटुम्बेशुचौदेशेस्वाध्यायमधीयानोधार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन्सर्वभूतान्यन्यत्रतीर्थेभ्यः सखल्वेवंवर्तयन् यावदायुषं ब्रह्मलोकमभि संपद्यते नच पुनरावर्तते नच पुनरावर्तते १

तदुक्तमेतद्ब्रह्मात्मज्ञानम् । प्रजापतिः कश्यपः । यथाविधि ब्रह्मचर्यादिना गुरोःकर्मसेवातदवशिष्टेन कालेन वेदमधीत्यगुरुकुलात्समावर्तनरीत्या-

ऽऽगत्यकलत्रादिकुटुम्बोस्थितः शुद्धस्थले हरहर्वेद
पाठीशिष्यान्यानपि धार्मिकान्कुर्वन्निन्द्रियक-
र्माण्यात्मज्ञानेफले समर्प्यतीर्थेभ्यो विहितयागे-
भ्यो न्यत्रप्राणिमात्रपीडामकुर्वन्दयालुः एवं स-
र्वमायुर्यौनयाति स खलु ब्रह्मलोकंयाति न पुन-
रायाति ततस्तत्रैवासात्मज्ञानोमुच्यत इति भावः॥

दययानन्तरामस्य मृदुर्ग्रन्थोयमुम्भितः।
श्रीस्वामिभास्करानन्दैः काश्यां छान्दोग्यवे-
दके ॥१॥ कृशामर्द्धीः क भाष्येण क वेदा-
न्ताब्धिमन्थनम् । तथाप्यघटितं किंवा
गुरुदेवदयालवे ॥ २ ॥

इतिच्छान्दोग्योपानिषत्प्रसादेऽष्टमाध्यायस्तत्प-
ञ्चदशखण्डश्च ॥ ओम् आप्यायन्तुममाङ्गानि
वाक्प्राणश्चक्षुःश्रोत्रमथोवलमिन्द्रियाणि च स-
र्वाणि सर्वं ब्रह्मौपनिषदं माहं ब्रह्मनिराकुर्यां
मामा ब्रह्मानिराकरोदानिराकरणम स्त्वनिराकरणं
मे स्तु तदात्मनिनिरतेयउपनिषत्सु धर्मास्तेमयि
सन्तु ते मयि सन्तु ओम् शान्तिः शान्तिः शान्तिः॥
इतिच्छान्दोग्योपनिषत् ॥ आदावपीयं शान्तिः
पठनीया—

---

श्रीगणेशाय नमः ।

# अथ वृहदारण्यके प्रारम्भः ।

ब्रह्मविद्याऽनवद्याचेदविद्याऽन्यायतस्ततः ।
छान्दोग्य इव यत्नो मे वृहदारण्यकेक्वचित् १

अथ कदाचित्परमकारुणिकः परमेश्वरो वेदेन निखिलमुमुक्षुप्रजानां निजपदप्राप्तये प्रयतमानोऽनेकाविधानऽधिकारिणः प्रसमीक्ष्यानेकप्रकारेणात्मविद्याविवक्षया वाजसनेयब्राह्मणोपानिषद मारभमाणः तत्र तावत्सर्वेषु लोकेषु सर्वेषां प्राणिनां सुखमेवानुभूतंसदाऽऽनन्दाभिधानामिष्टं प्रियं च । यतोऽखिलानां तत्साधन एव प्रीतिरिच्छाप्रवृत्तिश्चापेलभ्यते एताश्च सति संभवोधिक सुखसाधनस्य निवर्तन्ते पूर्वस्मात्पूर्वस्मादिति नित्यनिरतिशयमेव सुखं सर्वेषां विवेकिनां साक्षात्कर्तुमिष्टतमं प्रियतमं च । तादृशं च सुखमात्मैव । न च सकर्मादिलभ्यः इत्यनुसन्धाय । न कर्मसक्ताः कर्मभ्यः सहसा निवर्तयितुं शक्या इति

प्रधानाश्वमेधकर्मसंबन्ध्यश्वसंबन्ध्युपासनं कर्मफलातिशयजनकम् उषः प्रभातं ब्राह्मोमुहूर्तः तद्दृष्टिरश्वाशिरासि कार्येत्यादिकमाहा ऽऽघब्राह्मणे उषा वै इत्यादिना ।

उषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणोऽव्यात्तमग्निर्वैश्वानरः संवत्सर आत्माश्वस्य मेध्यस्य द्यौःपृष्ठमन्तरिक्षमुदरं पृथिवीपाजस्यं दिशः पार्श्वे अवान्तरादिशः पर्शवऋतवोङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि न भोमाꣳसानि ऊवध्यꣳसिकताः सिन्धवो गुदायकृच्चक्लोमानश्च पर्वताओषधयश्च बनस्पतयश्च लोमानि उद्यन्पूर्वार्धोनिम्लोचन् जघनार्धोयद्विजृम्भते तद्विद्योतते यद्विधूनुतेतत्स्तनयति यन्मेहति तद्वर्षति वागेवास्यवाक् ॥ १ ॥

अहर्वा अश्वंपुरस्तान्महिमान्वजायत तस्य पूर्वसमुद्रेयोनिरात्रिरेनं पश्चान्महिमान्वजा-

यत तस्यापरेसमुद्रेयोनिरेतौ वाअश्वं महि-
मानावभितः संवभूवतुः हयो भूत्वा देवान-
वहद्वाजीगन्धर्वानर्वा ऽसुरानश्वोमनुष्यान्
समुद्रएवास्य वन्धुः समुद्रो योनिः ॥ २ ॥

मेध्यस्य यज्ञियस्याश्वस्य शिरसि यथा प्रभा-
तस्य भावना तथा चक्षुषि सूर्यस्य प्राणेवायोः
विवृतमुखेवैश्वानरसंज्ञकाग्नेः । शरीरमध्यभागे
संवत्सरस्य पृष्ठे स्वर्गस्योदरेन्तरिक्षस्य खुरेभुवः
पार्श्वयोर्दिशाम् पार्श्वास्थिषु आग्नेय्यादिविदिशाम्
षडङ्गेष्वृतूनाम् सन्धिषु मासानां पक्षानां च पा-
देष्वहोरात्राणामास्थिषु नक्षत्राणां मांसेषु मेघा-
नामुदरस्थार्द्धजीर्णाशने सिकतानां नाडीषु नदी-
नाम् । हृदस्याधोमांसखण्डयोः पर्वतानां लोम-
स्वोषधीनां केशेषु वनस्पतीनाम् । नाभेरूर्ध्वभागे
मध्याह्नपर्यान्तादित्यस्य नाभेः पश्चाद्भागदेहे म-
ध्याह्नादस्तपर्यन्तादित्यस्य जृम्भणे विद्योतनस्य
गात्रधूननेगर्जनस्य । सूत्रकरणेवृष्टेः ह्वेषणे वाचः
एवं प्रजापतिस्वरूपोश्व इति भावः ॥ १ ॥ संज्ञ-
पनात्पूर्वपश्चाच्चाश्वस्योभयतो हवनीयद्रव्याधारौ
पात्रविशेषौग्रहौस्थाप्येते तत्राग्रे सौवर्णोग्रहोदिनस्य

तदासादनस्थाने पूर्वसमुद्रस्य पश्चाद्रजतमये तु रात्रेः तदासादनस्थाने च पश्चिमसमुद्रस्य दृष्टिः कार्या । अथायमश्वोऽश्वजातिविशेषहयादिरूपेण देवादीन्वहति तथास्य बन्धनशङ्कुः कारणंचेश्वर एवेत्यश्वस्तुतिः ॥

इति प्रथमाध्याये प्रथमंब्राह्मणम् ॥ १ ॥

अथ कथंचिन्मृत्युसंज्ञक हिरण्यगर्भादश्वमेधाङ्गाग्नेरुत्पत्तिमुपासनं च सफलमाह द्वितीये-ब्राह्मणे नैवेहेत्यादिना ॥

नैवेहकिञ्चनाग्रआसीन्मृत्युनैवेदमावृतमासीत् अशनायया अशनायाहि मृत्युः तन्मनोकुरुतात्मन्वी स्यामिति सोर्चन्नचरत्तस्यार्चत आपोऽजायन्तार्चतेवै मेकमभूदिति तदेवार्कस्यार्कत्वम् कं ह वा अस्मै भवति य एव मेतदर्कस्यार्कत्वं वेद ॥ १ ॥

अशनेच्छायां हन्ति जन्तूनित्यशनायामृत्युः साच बुद्धिधर्म इति धी देवो हिरण्यगर्भोपिमृत्युः सच मनस्वीस्यामित्याभिप्रायेण मनश्चक्रे तेनात्मानमर्चयतः कृतार्थं भावयतः कंजलंजातमतोर्कसंज्ञकम् ॥ १ ॥

आपो वा अर्कस्तद्यदपाꣳ शर आसीत् तत्समहन्यत । सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजोरसोनिरवर्ततताग्निः ॥ २ ॥

जलं च विकृतं सत्संघीभूतं पृथिव्यजायत । पृथिव्युत्पादनश्रमेण तप्तस्य मृत्योर्निष्क्रान्तं तेजोग्निर्विराडजायत ॥ २ ॥

सत्रेधात्मानं व्यकुरुतादित्यं तृतीयवायुं तृतीयꣳ स एष प्राणस्त्रेधाविहितः तस्य प्राचीदिक् शिरोसौचासौचेर्मौ अथास्य प्रतीचीदिक् पुच्छमसौ चासौ च सक्थ्यौ दक्षिणाचोदीची च पार्श्वे द्यौः पृष्ठमन्तारिक्षमुदरमियमुरः स एषोप्सु प्रतिष्ठितो यत्र क्वचैतितदेवप्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥

अयंचाग्निवाय्वादित्य रूपेणात्रिधा । अस्य चाग्नेः प्राचीदिक् शिरः ईशाग्निकोणौवाहूप्रतीची पृष्ठदेशः वायुनिर्ऋतिकोणौपृष्ठोन्नतास्थिनी शिष्ट दिशौ पार्श्वेद्यौः पृष्ठोपरिदेशोन्तरिक्षमुदरम् भूः

उरः एव मेषोऽग्निर्जलेप्रतिष्ठितः अग्नेः प्राङ्मुखस्य तत्तदङ्गेषु तत्तदृष्टिः कार्येति भावः॥ ३ ॥

सोकामयत द्वितीयोमआत्माजायेतेति स मनसावाचं मिथुनꣳ समभवदशनायां मृत्यु स्तद्यद्रेत आसीत्ससंवत्सरो ऽभवत् । न ह पुरा ततःसंवत्सर आस तमेतावन्तं कालमबिभः । यावान्संवत्सरस्तमेतावतः कालस्य परस्तादसृजत । तं जातमभिव्याददात् स भाणकरोत्सैववागभवत् ॥ ४ ॥

विराड्रूपोऽग्निरण्डरूपेण यावत्कालं जलेप्रतिष्ठितः स संवत्सरोभवत् ततस्तमण्डमभिनत् तत उत्पन्नं विराजं बालकमत्तुं मृत्युर्मुखविकाशंकृतवान् बालस्तु भयेन भाणिति शब्दं कृतवान् स शब्दो वागभवत् ॥ ४ ॥

स ऐक्षत यदिवाइममभिमꣳस्येकनीयोन्नंकरिष्य इति स तया वाचा तेनात्मनेदꣳसर्वमसृजत यदिदं किंचर्चोयजूꣳषिसामानिच्छन्दाꣳसियज्ञान्प्रजाःपशून् । सयद्यदेवासृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तद-

दितेरदितित्व सर्वस्यैतस्यात्ताभवति सर्व-मस्यान्नंभवतियएवमेतददितेरदितित्वंवेद५

अत्यल्पस्य बीजभूतस्यास्य बालस्य भक्षणे जग-दभावस्तृप्तिर्वामेनस्यादित्यालोच्यमनसावाचा-चाखिलं जगदसृजत सृष्टंसृष्टं चात्तुमैच्छदित्यादि-तिनामाभवत्सम्मृत्युः यद्यप्यन्नत्वमत्तृत्वं च सर्व-स्य तथापि सर्वात्मत्वात्प्रजापतिरेवात्तेति भावः ५

सोकामयतभूयसायज्ञेनभूयोयजेयेति। सो श्राम्यत्सतपोतप्यत तस्य श्रान्तस्यतप्तस्य यशोवीर्यमुदक्रामत् । प्राणावैयशोवीर्यं तत् प्राणेषूत्क्रान्तेषुशरीरꣳश्वयितुमध्रियत तस्य शरीरएवमनआसीत् ॥ ६ ॥

ततोजन्मान्तरसंस्कारेण यज्ञंपुनःकुर्यामितिकाम-नयाश्रान्तस्य मृत्योःशरीरात्प्राण इन्द्रियादीनि निर्गतानि मनस्तुदेहएवस्थितम् तदाशरीरमश्व-यत्फुल्लममेध्यंचाभवत् ॥ ६ ॥

सोकामयतमेध्यं मइदꣳस्यादात्मन्व्यनेन-स्यामिति । ततोश्वः समभवत् यदश्व-त्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेध-

त्वम् । एषहवा अश्वमेधं वेद य एनमेवं वेद तमनवरुध्यैवामन्यत । तꣳसंवत्सरस्य परस्तादात्मनआलभत । पशून्देवताभ्यः प्रत्यौहत् । तस्मात्सर्वदेवत्यंप्रोक्षितं प्राजापत्यमालभन्त एषहवाअश्वमेधो यएषतपति तस्यसंवत्सरआत्मायमग्निरर्कः तस्येमेलोका आत्मानस्तावेतावर्काश्वमेधौ । सोपुनरेकैव देवताभवति मृत्युरेवापपुनर्मृत्युंजयति नैवं मृत्युराप्नोति मृत्युरस्यात्माभवत्येतासांदेवतानामेकोभवति ॥ ७ ॥

ततो मे शरीरं मेध्यंस्यादितीच्छया देहं विवेश तथा च प्रजापतिदेहः पूर्वमश्वयत्पुनर्मेध्योभवादित्यश्वमेधः प्रजापतिः । अथात्मानमेवमुक्तबन्धनमश्वं भावयित्वा वत्सरान्ते आत्मार्थमालभतान्याँश्च पशूनन्यदेवताभ्यःस्वस्वरूपाभ्यः तस्मादन्योप्यात्मन्येवाश्वमेधं भावयेत् । क्रतुफलत्वादादित्योश्वमेधः संवत्सरश्चादित्यस्यशरीरम् अश्वमेधसाधनस्याग्नेस्तुशरीरंत्रयोलोकाः एतौचफलसाधन-

रूपावग्न्यादित्यौवस्तुतोमृत्युः प्रजापतिरेव अथ-
यएवंवेत्तितस्यफलं प्रजापतित्वम् ॥ ७ ॥

इतिद्वितीयम् ।

एवमन्यदपि सोपासनं कर्मोत्कृष्टफलदनिति
सूचयित्वा कर्मोपासनयोर्हेतु भूतस्य प्राणस्य प्रा-
धान्योपास्तिपरंतृतीयमुद्गीथब्राह्मणं देवासुराख्या-
यिकयोद्भावयतिद्वया इति द्विविधा इत्यर्थः उद्गी-
थस्तूद्गातुः कर्मसाममन्त्रविशेषो वा उभयथापि
वागेव तथा चौद्गात्रं वागधीनं वाकच प्राणाधीने-
ति प्राणेप्युद्गीथ इति बोध्यं ॥

द्वयाहप्राजापत्या देवाश्चासुराश्च । ततःका-
नीयसाएव देवाज्यायसाअसुराः तएषुलोके-
ष्वस्पर्द्धन्ततेह देवा ऊचुर्हन्तासुरान्यज्ञउद्गी-
थेनात्ययामेति ॥ १ ॥

तेह वाचमूचुस्त्वं न उद्गायेति तथेति ते-
भ्यो वागुदगायत । यो वाचि भोगस्तं दे-
वेभ्य आगायत् यत्कल्याणं वदाति तदात्मने ।
ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभि-

द्रुत्य पाप्मनाऽविध्यन् सयः स पाप्मायदेवे-
दमप्रतिरूपं वदति स एव स पाप्मा ॥ २ ॥

अथह प्राणमूचुस्त्वं न उद्गायेति तथेति
तेभ्यः प्राण उदगायत् यः प्राणे भोगस्तं देवेभ्य
आगायत् यत्कल्याणं जिघ्रति तदात्मने ।
ते विदुरनेनवै उद्गात्रात्येष्यन्तीति तमभिद्रुत्य
पाप्मनाऽविध्यन् सयः स पाप्मायदेवेदमप्र-
तिरूपं जिघ्रति स एव स पाप्मा ॥ ३ ॥

अथ ह चक्षुरूचुस्त्वं न उद्गायेति तथेति ते-
भ्यश्चक्षुरुदगायत् । यश्चक्षुषि भोगस्तं देवे-
भ्य आगायद्यत्कल्याणं पश्यति तदात्मने ।
ते विदुरनेनवै न उद्गात्रात्येष्यन्तीति तमभि-
द्रुत्य पाप्मनाऽविध्यन्स यः स पाप्मायदेवेदम-
प्रतिरूपं पश्यति स एव सपाप्मा ॥ ४ ॥

अथह श्रोत्रमूचुस्त्वं न उद्गायेति तथेति
तेभ्यः श्रोत्रमुदगायद्यः श्रोत्रे भोगस्तं देवेभ्य
आगायद्यत्कल्याण ँ शृणोति तदात्मने । ते
विदुरनेनवै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य

पाप्मनाविध्यन्सयः स पाप्मायदेवेदमप्रातिरूपᳬं शृणोति स एव सपाप्मा ॥ ५ ॥

अथ ह मन ऊचुस्त्वं न उद्गायेति तथेति तेभ्यो मन उदगायद्योमनसि भोगस्तं देवेभ्य आगायद्यत्कल्याणᳬं संकल्पयति तदात्मने । ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मायदेवेदमप्रातिरूपसकंल्पयति स एव सपाप्मैवमुखल्वेता देवताः पाप्मभिरुपासृजन्नेव मेनाः पाप्मना विध्यन् ॥ ६ ॥

अथ हेममासन्यंप्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राणउदगायत्ते विदुरनेनवै न उद्गात्रात्येष्यन्तीति तदभिद्रुत्य पाप्मनाविध्यत्सᳬं सयथाऽश्मानमृत्वा लोष्टोविध्वᳬं सेतैवᳬं हैव विध्वᳬं समाना विष्वञ्चोविनेशुस्ततो देवा अभवन्पराऽसुराभवत्यात्मनापराऽस्यद्विषन भ्रातृव्यो भवति य एवं वेद ॥ ७ ॥

तेहोचुः क्वनुसोभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्यआङ्गिरसोऽङ्गानाꣳहि रसः ॥ ८ ॥

सात्राएषा देवता दूर्नाम दूरꣳह्यस्यामृत्युर्दूरꣳहवाअस्मान्मृत्युर्भवति य एवं वेद ॥९॥

सावाएषा देवता एतासां देवतानां पाप्मानं मृत्युमपहत्ययत्राऽऽसां दिशामन्तस्तद्गमयांचकार तदासां पाप्मनो विन्यदधात्तस्मान्नजनमियान्नान्तमियान्नेत् पाप्मानं मृत्युमन्ववायानीति ॥ १० ॥

सावाएषा देवतैतासांदेवतानां पाप्मानं मृत्युमपहत्याथैनामृत्युमत्यवहत् ॥ ११ ॥

स वै वाचमेवप्रथमा मत्यवहत्सायदा मृत्युमत्यमुच्यतसोग्निरभवत्सोयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥ १२ ॥

अथ प्राणमत्यवहत्स यदा मृत्युमत्यमुच्यत स वायुरभवत्सोयं वायुः परेण मृत्युमतिक्रान्तःपवते ॥ १३ ॥

अथ चक्षुरत्यवहत्तद्यदा मृत्युमत्यमुच्यत स आदित्योभवत्सोसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥ १४ ॥

अथ श्रोत्रमत्यवहत्तद्यदा मृत्युमत्यमुच्यत-तादिशोभवꣳस्ताइमादिशः परेण मृत्युमतिक्रान्ताः ॥ १५ ॥

अथ मनोत्यवहत्तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्सौसौचन्द्रः परेण मृत्युमतिक्रान्तो भात्येवꣳह्वाएनमेषा देवता मृत्युमतिवहति य एवं वेद ॥ १६ ॥

अथात्मनेन्नाद्यमागायद्यद्धिकिंचान्नमद्यतेनेनैवतदद्यतइहप्रति तिष्ठति ॥ १७ ॥

ते देवा अब्रुवन्नेतावद्वाइदꣳसर्वं यदन्नं तदात्मन आगासीरनुनोस्मिन्नन्नआभजस्वेति ते वै माभिसंविशतेति तथेति तꣳसमन्तंपरिण्यविशन्त । तस्माद्यदनेनान्नमत्ति तेनैतास्तृप्यन्त्येवꣳह्वाएनꣳस्वा अभिसंविशंति भर्तास्वानाꣳ श्रेष्ठः पुरएता भवत्यन्नादोधिप-

तिर्यं एवं वेद य उहैवंविद॑स्वेषु प्रति प्रतिर्बुभूषति न हैवालं भार्येभ्यो भवत्यथ य एवैतमनुभवति यो वै तमनु भार्यान् बुभूर्षति स हैवालं भार्येभ्यो भवति ॥ १८ ॥

सोऽयास्य आङ्गिरसोऽङ्गाना॑ हि रसः प्राणो वा अङ्गाना॑रसः प्राणो हि वा अङ्गाना॑रसस्तस्माद्यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यत्येष हि वा अङ्गाना॑रसः॥१९॥

एष उ एव बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ॥ २० ॥

एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ॥ २१ ॥

एष उ एव साम वाग्वै सामैष सा चाऽमश्चेति तत्साम्नः सामत्वम् । यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्य॑ सलोकतां य एवमेतत्साम

वेद ॥ २२ ॥ एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीद९ सर्वमुत्तब्धं वागेव गीथोच्चगीथा चेति स उद्गीथः ॥ २३ ॥ तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायंत्यस्य राजामूर्धानं विपातयताद्यदितोऽयास्य आङ्गिरसोन्येनोदगायदिति वाचा चह्येव सप्राणेन चोदगायदिति ॥ २४ ॥ तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वैस्वर एव स्वं तस्मादार्त्विज्यं करिष्यन्वा चिस्वरमिच्छेत तया वाचा स्वरसंपन्नयाऽऽर्त्विज्यं कुर्यात्तस्माद्यज्ञेस्वरवन्तं दिदृक्षन्त एव । अथो यस्य स्वं भवति भवति हास्य स्वं य एवमेतत्साम्नः स्वं वेद ॥२५॥ तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥ २६ ॥ तस्य हैतस्य साम्नो यः प्र-

तिष्ठां वेद प्रतिहतिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्युहैक आहुः ॥ २७ ॥
अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेत् । असतोमासद्गमय तमसोमाज्योतिर्गमय मृत्योर्माऽमृतं गमयेति स यदा हासतोमासद्गमयेति मृत्युर्वा असत्सदमृतं मृत्योर्माऽमृतं गमयामृतं माकुर्वित्येवैतदाह तमसो माज्योतिर्गमयेति मृत्युर्वै तमोज्योतिरमृतं मृत्योर्माऽमृतं गमयामृतं माकुर्वित्येवै तदाह मृत्योर्मामृतं गमयेति नात्रतिरोहितमिवास्ति । अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत यं कामं कामयेत त५ स एष एवं विदुद्गाताऽऽत्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न

हैवा लोक्यताया आशास्तिय एवमेतत्साम वेद ॥ २८ ॥

भावि वृत्त्या प्रजापतिर्यजमानः तस्य वागादयः प्राणाः शास्त्रीयाल्य सत्प्रचारा देवाः स्वाभाविक वहुसत्प्रचारास्त्वसुराः देवासुरयोः परस्परस्पर्द्धायां च यज्ञेनासुरान् जेतुं देवैः प्रेरिता वागभिमानि देवता शास्त्रीय व्यापाराभवत् अथ तामसुराः शास्त्रप्रतिषिद्धेष्वासङ्गेन शस्त्रेण विविधुः तदा सा प्रतिषिद्धानृतादिकथनपराभवत् एवं घ्राणचक्षुः श्रोत्रमनः पर्यायेष्वपि बोध्यम् अथ पाषाणेप्रक्षिप्तशुष्कमृत्पिण्ड इव वाय्वात्मकं प्राणं वेद्धुं प्रवृत्तास्त्वसुरा एव विनेशुः प्राणप्रचारो न विकृत इति भावः तस्मादेवं परीक्षित प्राधान्यं प्राणमेवात्मत्वेन य उपास्ते स प्रजापतित्वं लभत इति निष्कर्षः उत्तरग्रन्थस्तु प्राणस्यैवानेकधोपासनप्राधान्य पर इति बोध्यम् ॥ २८ ॥

इति तृतीयम् ।

तदेतत्प्राणोपासनं लोकजिद् ब्रह्मलोकजित्संसारप्रदमेव न कैवल्य दमतोय एतत्साम प्राणमेव

मुक्तविधं वेद तस्य अलोक्यतायै संसारित्वाऽयो-ग्यतायैनाऽऽशाऽस्ति सदा संसारवासनैव भवतीति यावदिति तृतीय ब्राह्मणान्त्यग्रन्थार्थः तथा च कर्मोपासन फलोत्कर्षसीमा हिरण्यगर्भोपि प्र-थमः संसार्य्येवेति तदादि सृष्ट्यादिक माहात्मेति।

आत्मैवेदमग्र आसीत्पुरुषविधः सोनु-वीक्ष्य नान्यदात्मनो पश्यत्सोहमस्मीत्यग्रे व्याहरत्ततोहं नामाभवत्तस्मादप्येतर्ह्यामन्त्रितोहमयमित्येवाग्र उक्त्वाथान्यन्नाम प्रब्रूते यदस्य भवति । स यत्पूर्वोस्मात्सर्व-स्मात्सर्वान् पाप्मन औषत्तस्मात्पुरुष ओ-षति ह वै सतं योस्मात्पूर्वो वुभूषति य एवं वेद ॥ १ ॥

अग्रे शरीराकारोद्भूतेः पूर्वमिदं सर्वशरीरमा-त्मैव समष्टिस्वरूपो विराडेवासीत्ततः स एव पु-रुषाकारः प्रजापतिस्सन् वीक्ष्य स्वस्मादन्यन्ना-पश्यदतोहमस्मीत्येवावदत् तस्मादहमिति त-स्याभवन्नाम । यस्मादाद्यस्य प्रजापतेरेवादावेद मेव नामाभूत्तस्मादेवै तर्हीदानीमपि कस्त्व-

मिति पृष्टः सर्वोऽपि जनोऽयमहमित्येवादावुक्त्वानन्तरं यत्पित्रादि कृतमस्य देहस्यास्ति तन्नाम ब्रूते विशेषतः पृष्टः । अथ सर्वजनसंघात्पूर्वः प्रथमं पूर्वजन्मनि कर्मोपासनप्रभावैः स प्रजापतिर्यद्यस्मात्सर्वपापान्यौषद दहत्तस्मात्पुरुषसंज्ञो हिरण्यगर्भो भूत् । लोकेऽपि हि दृष्टसामर्थ्यस्त्वं पुरुष इत्युच्यते । एवं च योन्योऽपि सर्वस्मादन्यस्मात्पूर्वं प्रजापतिर्भवितु मिच्छति नेच्छामात्रम् किन्तु य एवं संज्ञाद्वययुक् प्रजापतित्वेनात्मानं वेद भावयति सोऽपितं पाप्मान मोषति प्रजापतिर्भवतीति भावः ॥ १ ॥

संसारित्वं दर्शयति स इति—

सोऽबिभेत्तस्मादेकाकी बिभेति सहाऽयमीक्षां चक्रेयन्मदन्यन्नास्ति कस्मान्नुबिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद् द्वितीयाद्वै भयं भवति ॥ २ ॥

यतः सोऽबिभेदतः सर्वोऽप्येकाकी बिभेति । अथ यतोनास्ति मदन्यदतः कस्मादहं बिभेमीति विचारं चक्रे सोयं प्रजापतिः । तत एव विचा-

रादस्यभयं विगतम् युक्तमेतत् हि यतो द्वितीया-
द्भयं भवति प्रथमः शरीरी कस्माद्भेष्यदनुपप-
न्नैव भीरिति भावः ॥ २ ॥

अन्यमपि संसारिधर्ममाह स इति—

स वै नैवरेमेतस्मादेकाकी न रमते स
द्वितीयमैच्छत् । स हैतावानास यथा स्त्री-
पुमा ँ सौ संपरिष्वक्तौ स इम मेवात्मानं द्वे-
धापातयत्ततः पतिश्च पत्नी चाभवतां तस्मा-
दिदमर्द्धवृगलमिव स्व इति ह स्माऽऽहयाज्ञ
वल्क्यस्तस्मादयमाकाशः स्त्रियापूर्यत एव
ता ँ समभवत्ततोमनुष्या अजायन्त ॥३॥

यतः स नरेमेतस्मादन्येपि । ततो द्वितीये-
च्छायां मिलितौ स्त्रीपुरुषौ यथाकार परिमाणाभ्या-
मेतावानेतत्परिमाणः स ब्रह्मा आस बभूव । य-
तोपातयत्ततः पतिपत्नीसंज्ञे । तत्र पतिर्मनुः पत्नी
शतरूपा । यस्माद्देहस्यार्द्धं स्त्रीत्वेन पृथक् पतितं
तस्मात्स्वः स्वस्यपुंस इदं शरीरं पाटितवंशस्या-
र्द्धंविदलमिवेत्याऽऽहस्म यज्ञवल्कस्य यज्ञवक्तुः पु-
त्रोदैवरातिः । यतः पुरुषोर्द्धं तस्मादाकाशः शू-

न्यार्द्धं धर्मपत्न्या पूर्यते । प्रजापतिश्चतां मैथुनं गतः । ततो मैथुनान्मनुष्या जाताः ॥ ३ ॥

अन्योत्पत्तिमाह सेति—

सा हेयमीक्षां चक्रे कथं नु माऽऽत्मन एव जनयित्वा सम्भवति हन्ततिरोऽसानीति सा गौरभवदृषभ इतरस्ताꣳ समेवाभवत्ततो गावो जायन्त । वड़वेतराभवदश्ववृष इतरोगर्दभीतरागर्दभ इतरस्ताꣳ स मेवाभवत्तत एकशफमजायताऽजेतराभवद्बस्त इतरोऽविरितरामेष इतरस्ताꣳ स मेवाभवत्ततोऽजाऽवयोऽजायन्तैवमेव यदिदं किंच मिथुनमापिपीलिकाभ्यस्तत्सर्वमसृजत ॥४॥

स्वस्मादेवोत्पाद्य दुहितरं मां कथं संभवति मैथुनं यातीति हन्त खेदोतस्तिरोभवानि देहान्तरं गृह्णानीति ईक्षां विचारं सेयं शतरूपा कृत्वा गौरभवत्तदेतरोमनुर्वृषभः पुनस्तां गां स मेव मैथुनमेवागच्छत् ततो मैथुनाद्गावो जाताः । एक शफमेकखुरमविदीर्णखुरम् । वस्तोजः । एवमिदं सर्वं मिथुनं स्त्रीपुंससंज्ञकं जगदुत्पादितवान् ॥४॥

उपासनां निरूपयाति स इति—

सोऽवेदहं वाव सृष्टिरस्म्यहꣳहीदꣳसर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्याꣳहाऽस्यै तस्यां भवति य एवं वेद ॥ ५ ॥

हि यतः सर्वमिदमहमुत्यादितवानतोहमेव सृष्टिर्जगदस्मीत्य वेदभावयत्सः प्रजापतिः ततोभावनातः सृष्टिसंज्ञकोभवत् । अथास्य प्रजापतेरस्यां सृष्ट्यां योन्योप्येवं प्रजापतिवत्सृष्ट्याऽभेदं स्वस्य वेदोपास्ते सोपि प्रजापतिर्भवति ॥५॥

अग्नेस्सोमस्य चोत्पत्तिमाहाथेतीति—

अथेत्यभ्यमन्थत्समुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत तस्मादे तदुभयमलोमकमन्तरतो ऽलोमका हि योनिरन्तरतः । तद्यादिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैवसाविसृष्टिरेष उह्येव सर्वे देवाः । अथ यत्किंचेदमार्द्रं तद्रेतसो सृजत तदुसोम एतावद्वा इदꣳसर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः सैषा ब्रह्मणोति सृष्टिः । यच्छ्रेयसो देवानसृजताथ यन्मर्त्यः स-

न्तोऽमृतान सृजत तस्मादतिसृष्टिरतिसृष्ट्या हास्यैतस्यां भवति य एवं वेद ॥६॥

अथेत्युक्त्वा मुखे हस्तौ प्रवेश्याभिमुख्येन मन्थन्मुखहस्तयोनितोऽग्निं सृष्टवान् तस्माद्दाहकाग्नेर्योनित्वादुभयं मुखं हस्तौ चान्तर्निर्लोम यथा स्त्रीणां योनिः । एवं च तत्तद्यागकालेऽएकैकं देवमुद्दिश्यामुं देवममुं देवमितीदं यद्वचोवदन्ति न तेन देवभेदः किन्तु यतोऽस्यैव सा विविधादेव सृष्टिरतस्सर्वे देवा एष प्रजापतिरेव । अथाग्न्युत्पादानन्तरमाद्रं द्रवरूपं रेतसः शुक्रात्सृष्टवान् । तच्चार्द्रममृतमयस्सोमः 'एतावद्वै अन्नान्नादरूपमेवाग्नीषोमात्मकमेव सर्वम् । यद्यस्मात् श्रेयसः प्रशस्यतरानमृतान्मृतिराहितान्सृष्टवांस्तस्मादेषोत्तमा सृष्टिः अस्यां योन्योप्येवमग्नीषोमात्मकं जगदात्मानं वेद सोपिस्रष्टा भवति ॥ ६ ॥

अथ कर्मोपासनसाध्यस्यास्य प्रजापत्यन्तसंसारस्यापरमपुरुषार्थस्योन्मूलनाय मूलं सूचयाति

तद्धेदमिति—

तद्धेदं तर्ह्यव्याकृतमासीत्तन्नाम रूपा-

भ्यामेव व्याक्रियतासौ नामायमिद ँ रूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियते सौनामायमिद ँ रूप इति स एष इह प्रविष्टआनखाग्रेभ्योयथाक्षुरः क्षुरधानेऽवहितः स्याद्विश्वंभरोवाविश्वंभरकुलायेतं न पश्यन्ति अकृत्स्नोहि स प्राणन्नेव प्राणो नाम भवति वदन्वाक् पश्यँश्चक्षुः शृण्वञ् श्रोत्रं मन्वानोमनस्तान्यस्यैतानिकर्मनामान्येव । स यो ऽतएकैकमुपास्ते नस वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्रह्येत सर्व एकं भवन्ति । तदेतत्पदनीयमस्य सर्वस्य यदयमात्माऽनेन ह्येतत्सर्वं वेद । यथा ह वै पदेनानुविन्देदेवं कीर्तिं ँ श्लोकं विन्दतेयएवं वेद ॥ ७ ॥

तदिदं वीजावस्थेनाऽभिन्नं कार्यावस्थं जगत्तर्ह्युत्पत्तेः प्रागव्याकृतं न विविधाकारं वीजैकाकारम् । असौ नाम देवदत्तादिनामा । इदं रूपः ईदृशाकारोयम् । एतर्ह्यपीदानीमपि तदिदं कारणावस्थं वस्तु । घटादिनाम पृथुवुध्नोदराद्याकाराभ्यामेवा-

नेकतां याति । ततः सकारणीभूत एष आत्मा शिर आदिपादनखाग्रान्ते इह देहे कुण्डले सुवर्णमिव वस्तुतो प्रविष्ट एवोपलभ्यमानत्वात्प्रविष्टः । एवं च यदा क्षुरकोशे क्षुरोऽग्निर्वाग्निनीडे काष्ठादौ व्याप्य प्रविष्टःस्यात्तदा तं न पश्यन्त्येवं शुद्धमात्मानमपि । एव मुपाधिसंबन्धेनाऽकृत्स्नः परिच्छिन्नः प्राणनाद्युपाधिक्रियया प्राणादिसंज्ञो भवति । प्राणनाद्यैकैकेन विशेषणेन यतोऽकृत्स्नो भवत्यात्माऽतो य एकैकसंज्ञमुपास्ते स न यथावद्वेदातो निरूपाधिकमात्मत्वेनैव जानीयात् अत्र हि सामान्यात्मनि सर्वे विशेषात्मान एकतां यान्ति । अथ यद्यस्मात्सर्वस्य नामरूपात्मकस्यायं निरूपाध्यात्माऽऽत्मा बीजस्वरूपं तत्तस्मादेतदात्मस्वरूपं पदनीयं प्रापणीयं साक्षात्करणीयमिति यावत् तथाच न पुनः प्रापणीयमवशिष्यते हि यतो यथा भुवि व्यक्तेन पदेन खुरेण दृष्टेन दृष्टेनान्वेषमाणः पशुं विन्दत्येवमनेन जगत्यभिव्यक्तेन सत्ताभानप्रियत्वलक्षणेन सर्वमात्मानं जानाति । एवं वेत्ताजीवन्मुक्तो लोके कीर्तिं सर्वैर्धन्यवादं श्लोकं पण्डितैः पद्यरूपेण च वर्णनमाप्नोति । अत्र चानाद्यविद्यामन्तरेणात्मनः कारणत्वानुपपत्तेः सैव

सर्वंजगन्मूलमिति तदेतत्पदनीयमित्यनेनात्म-
विद्योपदेशेन सूचितम् ॥ ७ ॥

अविदुषश्शरीरादौ प्रियतमत्वधीर्भ्रान्तिरिति
सूचयन्नात्मनः पदनीयत्वे हेतुं प्रियतमत्व-
माह तदेतदिति—

तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मा-
त्सर्वस्मादन्तरतरं यदयमात्मा । स योऽन्य-
मात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रिय ँ रोत्स्य-
तीति ईश्वरो ह तथैव स्यादात्मानमेव प्रि-
यमुपासीत स य आत्मानमेव प्रियमुपास्ते न
हास्यप्रियं प्रमायुकं भवति ॥ ८ ॥

अन्यत्र तु सापेक्षमन्तरत्वं बाह्यत्वं च आत्मा
तु न बाह्य आत्मत्वादेवेत्यन्तरतरः तस्माद्यदा-
त्मवस्तु तदेतत्प्रियतमम् । अथात्मनोन्यं पदार्थं
प्रियं वदन्तमज्ञं प्रति यदि यः कश्चिदात्मज्ञो ब्रू-
यादिदं प्रियं वस्तुरोत्स्यति स्वस्य रूपमावृतं क-
रिष्यति विनङ्क्ष्यतीति तर्हि तथैव तद्वस्तुहानि-
रेव स्यात् यतो ह स्फुटं स यथार्थवक्तात्मविदीश्वरः ।
अस्यात्मैव प्रिय इत्युपासकस्य तु प्रियं न मरण-
शीलं भवति ॥ ८ ॥

उक्तात्मविद्यैव ब्रह्मविद्येति फलैक्येन सूचयति तदाहुरिति—

तदाहुर्यद् ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्यामन्यन्ते । किमुतद् ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ॥ ९ ॥

ब्रह्मज्ञानेन सर्वात्मानो भविष्याम इति यत्फलं मन्यन्ते तदेव सर्वात्मभावफलमात्मज्ञानस्याहुराचार्याः । नन्वस्तु ब्रह्मज्ञानेन सर्वात्मभावोन्येषां ब्रह्म तु किं ज्ञातवत् यज्ज्ञानात्तद्ब्रह्म सर्वं खल्विदमभवदिति शङ्कते किमिति ॥९॥

समाधत्ते ब्रह्मेति—

ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत् अहं ब्रह्मास्मीति । तस्मात्तत्सर्वमभवत् । तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभव ᳪ सूर्यश्चेति तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इद ᳪ सर्वं भवति तस्य ह न देवाश्चनाभूत्या ईशते आत्माह्येषा ᳪ स भ-

वति अथ योन्यां देवतामुपास्तेन्योऽसा-
वन्योहमस्मीति न स वेद यथा पशुरेव ९
स देवानाम् यथा ह वै बहवः पशवो मनुष्यं
भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्ति एक-
स्मिन्नेव पशावादीयमानेऽप्रियं भवति किंमु
वहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या
विद्युः ॥ १० ॥

पूर्वं ब्रह्मैवासीदतो वायौ स्पन्द इवाहं ब्रह्मेत्ये-
वाऽजानाद् ब्रह्म तेन तद्ब्रह्म स्वप्न इव सर्वं जगद-
भवत् । ततो देवादयोपि ब्रह्मविदो वामदेव इव
सर्वात्मक ब्रह्माभवन् । एतर्ह्यपीदानीमप्यहं ब्र-
ह्मेति तदिदं ब्रह्म यो वेद स सर्वं भवति । यतो
ब्रह्मवित्सर्वेषामात्मा भवत्यतस्तस्याऽभुत्यै ब्रह्मत्वा-
ऽभावाय देवा अपि न शक्ताः । नात्मनो निष्टं
कोपि करोतीति ब्रह्मज्ञानफलमवश्यं भवतीति
भावः । भेदबुद्ध्याऽऽराधकस्तु याथातथ्यं न वेद
किंच नृणां गवादिरिव देवानां स पशुः परस्पर-
मुपकार्योपकारकत्वे यं दृष्टान्तः । यथा वहवः प-
शवो मनुष्यं पालयन्त्युपकुर्वन्ति तथा राधनेन
पुरुषो देवान्पालयति यथा चैकस्मिन्पशौ ह्रिय-

माणे पुरुषस्यानिष्टं भवति तथा यदि मनुष्या ब्रह्मविद्युस्तेन देवानाम् । न चैवमनर्थान्यदेवताराधनोक्तिः यतो यथा न देवता दुर्मतिदानेन विहन्युः सुमतिन्तु दद्युरिति ब्रह्मज्ञानोपयोगाय सा । उक्तं च न देवा दण्डमादाय रक्षन्ति पशुपालवत् यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तमिति । तत्तदनित्यफलोक्तिरपि रोचिकैव निम्बं पास्यतेर्भकाय किंचिदिष्टदानवदितिदिक् ।१०।

आराधनस्य निमित्तं चातुर्वर्ण्यमग्निं चाह ब्रह्मेत्यादि सार्द्धचतसृभिः कण्डिकाभिः—

ब्रह्म वा इदमग्र आसीदेकमेव तदेकꣳ सन्नव्यभवत् तच्छ्रेयो रूपमत्यसृजत क्षत्रम् यान्येतानि देवत्राक्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति । तस्मात्क्षत्रात्परं नास्ति तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद् ब्रह्म । तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनि श्रयति स्वां योनिम् । य उ-

एन॑ꣳहिनस्ति स्वाꣳस योनिमृच्छति स पापीयान् भवति यथा श्रेयाꣳसꣳहिꣳसित्वा ॥ ११

इदं चातुर्वर्ण्यमेकं ब्रह्मैव ब्रह्मजातिर्नसाव्यक्तिं विनेति ब्राह्मणएवेति यावत् । एकं सत् पालकं विना कर्म समर्थं नाभवत् । तदातद्ब्रह्मप्रशस्तरूपं क्षत्रमजनयत् । देवत्रादेवेष्विन्द्राद्यष्टक्षत्राणि बहुवचनं व्यक्तिदृष्ट्या राज्ञ इत्यर्थः उपलक्षणमेतन्मनुष्येषु राज्ञामपि । इन्द्राद्या देव यादोब्राह्मणपशुविद्युत्पितृरोगभासां क्रमाद्राजानः । परं श्रेष्ठम् । राजसूये मञ्चस्थमधस्तिष्ठन्नुपास्ते पालकत्वान्नियन्तृत्वात्त्वमेव ब्रह्मासीति क्षत्रे स्वं यशः समर्पयति ऋत्विक् । यद्यप्येवं राजा परस्तथापि ब्रह्म तस्य योनिः कारणं तस्माद्यागान्ते स्वयोनिमेवोपाश्रयति पुरोहितम् । एनं ब्राह्मणम् । योनिं जनकम् । ऋच्छति हन्ति । यथा लोके श्रेष्ठं हत्वा तथा सोतिपापी भवति ॥११॥

स नैवव्यभवत्सविशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति ॥१२॥

स ब्राह्मणो धनं विना न व्यभवत् । विशं वैश्यम् । गणाः वसवः ८ । रु ११ । आ १२ । वि १३ । म ४९ । एतेदेवजातिविशः ॥ १२ ॥

स नैव व्यभवत्सशौद्रं वर्णमसृजत पूषणामियं वैपूषेय ७ हीद ँ सर्वं पुष्यति यदिदं किं च ॥ १३ ॥

सेवकं विना न व्यभवत् । पूषणं सेवया पुष्टिकरं शूद्रं वर्णम् । हि यतः सर्वमियं मही पुष्यती तीयं पूषा ॥ १३ ॥

स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मम् तदेतत्क्षत्रस्य क्षत्रं यद्धर्मः तस्माद्धर्मात्परं नास्त्यथो अबलीयान्बलीया ७ समाश ँ सते धर्मेण यथा राज्ञैवम् यो वैसधर्मः सत्यं वै तत् तस्मात्सत्यं वदन्तमाहुर्धर्मंवदतीति धर्मं वावदन्त ७ सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ॥ १४ ॥

धर्मं सर्वनियन्तारं विना न व्यभवत् । तद् ब्रह्मश्रेयो रूपं धर्मम् । सर्वनियन्तृक्षत्रं तस्याऽपि क्षत्रं नियन्त्रे तच्छ्रेयोरूपम् । यथा राज्ञा सह स्पर्द्धमानः को-

ष्येवमतिदुर्बलो बलिष्ठमपि धर्मबलेन जेतुमिच्छतीति धर्मात्परं बलवन्नास्ति । य एव धर्मस्तदेव सत्यमत एवैवमाहुर्लोके । एवं च हि यतः एतच्छ्रेयोरूपमेव धर्मसत्योभयमतश्च धर्मात्परं न ॥१४॥

तदेतद् ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद् ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रः तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्या ँ हि रूपाभ्यां ब्रह्माभवत् । अथ यो ह वा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतम् यदि ह वा अप्यनेवं विन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एव आत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते ॥ १५ ॥

तदुक्तं चातुर्वर्ण्यमेतत् । तत्र मुख्यं यद्ब्रह्म-ब्राह्मणत्वं जातिस्तद्देवेषु मध्येऽग्निरूपेण मनुष्येषु

ब्राह्मणश्च साक्षादभवत्तौ साक्षादजनयत् क्षत्रियस्त्विन्द्रादि क्षत्रियद्वारावैश्यो वस्वा दिवैश्यद्वारा शूद्रो महीशूद्रद्वारा। एवं च हि यतोऽग्निब्राह्मणरूपाभ्यां साक्षाद भवत्तस्माद्देवेषु मध्येग्नावेवाग्निहोत्रादि कृत्वा स्वर्गादिलोकमिच्छन्ति मनुष्येषु ब्राह्मणे एव धर्मादिशिक्षाग्रहणं कृत्वेमं लोकं वस्तुमिच्छन्ति सज्जनाः धर्मादिजिज्ञासया ब्राह्मणमेवाश्रयन्तीतिभावः । अथात्मज्ञानमेव नित्यं सर्वं च फलं ददाति न कर्मादीत्याहाथेति । यथाऽनधीतोवेदोऽकृतं च कृष्यादिकर्मनोपकरोत्येवं स्वमात्मानमविदित्वा योस्मान्म्रियते सोऽज्ञोनैनमात्मानं पालयाति बन्धतः किंचेह कोप्यनात्मवित् यत्पुण्यं करोति तत्फलान्ते क्षीयत एव । आत्मज्ञस्य तु कर्मबन्धनिवृत्तिर्न क्षीयते । किंच दैवाल्लीलया वा ऽयं यद्यदिच्छति तत्तदात्मनस्सकाशाल्लभते ॥ १५ ॥

पूर्वं त्वात्मज्ञान'त्परस्परोपकारिपञ्चमहायज्ञादिकार्यमेवेति सूचयत्यथो इति—

अथो अयं वा आत्मासर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां

लेकोथ यदनुब्रूते तेन ऋषीणामथ यत्पि-
तृभ्योनिपृणाति यत्प्रजामिच्छते तेन पि-
तृणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं
ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृ-
णोदकं विन्दति तेन पशूनां यदस्य गृहेषु
श्वापदावया ऽस्यापिपीलिकाभ्य उपजी-
वन्ति तेन तेषां लोको यथाह वैस्वायलोका
यारिष्टिमिच्छेदेव ऽहैवं विदेसर्वाणि भूता-
न्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमा ऽ
सितम् ॥ १६ ॥

अयमात्मामनुष्यदेहः सर्वप्राणिनां लोको-
भोग्य उपकारकः । जुहोत्यग्नौ देवाय ददाति ।
यजते देवान् पूजयाति । लोकउपकारः । अनुब्रूते हर
हर्वेदमधीते । निपृणाति पिण्डादि ददाति इच्छते
पुत्रमुत्पादयाति वासयते गृहेसमागतान् भो-
जयति चानागतानपि विन्दाति ददाति । यत्पातितो
च्छिष्टाद्यन्नाद्युपजीवन्ति जीवनायगृह्णन्ति । एवं
विद्वान्स्वापञ्चयज्ञान्कुर्वते देवादि पिपीलिकान्ता-
न्यऽविनष्टि मिच्छन्ति यथा स्वदेहायैवम् । तदेतत्क-
र्मकरणं विहितं विचारितं चान्यत्र ॥ १६ ॥

नन्वेवं परस्परोपकारे पशुतोक्ताप्रत्यक्षाचेत्यात्मज्ञान एव कुतो न प्रवर्तन्त इत्याशङ्कायां वासनयाकामना बलादित्याहात्मेति—

आत्मैवेदमग्र आसीदेक एव सो कामयत जायामेस्यादथ प्रजायेयाथवित्तं मेस्यादथ कर्मकुर्वीयेत्येतावान्वैकामोनेच्छ ँश्चनातो भूयो विन्देत्तस्माद्प्येतर्ह्येकाकी कामयते जायामेस्यादथ प्रजायेयाथवित्तं मेस्यादथ कर्मकुर्वीयेति स यावद्प्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता मन एवास्यात्मावाग्जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैव ँश्रोत्रेण हि तच्छृणोत्यात्मैवास्य कर्माऽऽत्मना हि कर्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिद ँसर्वं यदिदं किंच तदिद ँसर्वं माप्नोति य एवं वेद ॥ १७ ॥

आत्मैवदेहमात्र मग्रेजन्मकाले । इदं जायादि । सः संसारिब्रह्मादिः । प्रजायेयपुत्रः स्याम् ।

नेच्छँश्चा निच्छन्नपिलोके लब्धकामोपि कोप्यतः पुत्रवित्तलोकतेधिकं न लभते ततएतावानेवकामः। यतः पूर्वोकामयत तस्मादे तर्ह्यपीदानीमप्येकाकिजनः। एतेषां जायादीनां मध्ये। अकृत्स्नो संपूर्णः। अथ विनापि जायादिकं तस्या संपूर्णमानिन उवितर्क्यते कृत्स्नता। हि यतो गवादिवित्तं चक्षुषादैवन्धनं विज्ञानं श्रोत्रेण कर्मदेहनाऽतः। एवं मनआदिपञ्चभिनिर्वृत्तः पाङ्क्तोयं यज्ञः। एवं पश्वादिसर्वं पाङ्क्त मिति यो वेद स सर्वात्मा भवति॥ १७॥

इतिचतुर्थम्।

अथ न प्रजापतिरेव जगत्कर्ता किन्त्वनन्तजन्मसुसाक्षात्परं परया वा कथं चित्सर्वं सर्वस्यो पयोगीत्यखिलः प्राण्यदृष्टद्वारा जनकः अदृष्टं तु प्राग्भवीयं कर्मोपासनात्मकं कामनाजन्यमिति कामनाप्रसङ्गे काम्यं जगदन्नत्वेनाह वैराग्याय यदिति—

यत्सप्तान्नानि मेधया तपसाऽजनयत्पिता। एकमस्य साधारणं द्वे देवान भाजयत्। त्रीण्यात्मनेऽ कुरुतपशुभ्य एकं प्रायच्छत्।

तस्मिन्सर्वं प्रतिष्ठितं यच्चप्राणिति यच्चन। कस्मात् तानि न क्षीयन्तेऽद्यमानानि सर्वदा। यो वैतामक्षितिं वेदसोऽन्नमत्ति प्रतीकेन । स देवानपि गच्छति स ऊर्जमुपजीवतीति श्लोकाः ॥ १ ॥

इतीमे श्लोका मन्त्राः ॥ १ ॥

एतद्व्याख्यानभूतं ब्राह्मणमाह यदिति—

यत्सप्तान्नानि मेधयातपसाऽजनयत्पितेति मेधयाहितपसाजनयत्पिता । एकमस्य साधारणमितीदमेवास्य साधारणमन्नं यदिदमद्यते स य एतदुपास्तेन स पाप्मनो व्यावर्तते मिश्रꣳह्येतत् द्वे देवान भाजयदिति हुतं च प्रहुतं च तस्माद्देवेभ्यो जुह्वति च प्रजुह्वत्यथो आहुर्दर्शपूर्णमासाविति । तस्मान्नेष्टि याजुकः स्यात् । पशुभ्य एकं प्रायच्छदिति तत्पयः । पयोह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात्कुमारं जातं घृतं वै वाग्रे प्रतिलेहयन्तिस्तनं वानुधापयन्त्यथ

वत्सं जातमाहुरतृणाद इति । तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि ही- द ँसर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न । तद्यदिदमाहुः संवत्सरं पयसाजुह्वदपपुन- र्मृत्युं जयतीति न तथाविद्याद्यदहरेवजुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान्सर्वं ँहि देवेभ्योऽन्नाद्यं प्रयच्छति । कस्मात्तानि न क्षी- यन्ते ऽद्यमानानि सर्वदेति पुरुषो वा अक्षि- तिः स हीदमन्नं पुनः पुनर्जनयते । यो वैतामक्षितिं वेदेति पुरुषो वा अक्षितिः स हीदमन्नं धियाधिया जनयते कर्मभिर्यद्ध्यै तन्न कुर्यात् क्षीयेत ह । सोऽन्नमत्ति प्रतीके- नेति मुखं प्रतीकं मुखेनेत्येतत् । स देवा- नपि गच्छति स ऊर्जमुपजीवतीति प्रश- ँसा ॥ २ ॥

अत्रादौ मन्त्रप्रतीकमादायाऽऽदाय व्याख्यानम् । जनकत्वात्पिता प्रजापतिः सर्वः प्राणी वा सका- मोपास्तिकर्मभ्यामजनयदिति हि प्रसिद्धम् । यानि सप्तान्नानि तत्रेदमेवास्य प्राणिमात्रस्यान्नं य-

दद्यते भुज्यते अथैतदन्नं हि यतो मिश्रं साधारणं तस्माद्यो देवादिभागिभ्यो न दत्त्वोपास्ते भुङ्क्ते स पापान्न निवर्तते। हुतमग्नौ दत्तमन्यथा प्रहुतमेतेद्वे देवान्ने अथो वस्तुतस्तु दर्शपूर्णमासौ देवान्ने इत्याहुः यतो देवान्ने तस्मादिष्ट्या केवलं कामनयैव यजन शीलो न स्यात्। यदेकं तत्पयः हि यतस्तस्मात्सुवर्णनादौ घृतमनुपश्चात्स्तनं पाययन्ति अतृणादः स्तनन्धयः। यच्च यच्च जङ्गमं च स्थावरं चेत्यर्थः पयसि सर्वस्थितिमुपपादयति तद्यदिति पयसा तद्विकारेण वा होतामृत्युमपजयति सर्वकारणं प्रजापतिर्भवतीत्याहुः परन्तु तथा संवत्सरनियमं न विद्यात्किन्तु तदहरेवेति हि यत एवं वित्सर्वदः कारणत्वेन सर्वात्मत्वादिति भावः। अहरहरन्नक्षयेप्यऽक्षतः पुरुषः पुनरुत्पादयतीत्यन्नाभावप्रसङ्गो न। यद्यदि एतदन्नं मेधया तपसा न कुर्यात्तर्हि क्षीयेत अथ य एवं पुरुषमक्षयं क्षयिचान्नं जगद्वेदसमुख्यतयान्नमत्ति देव भावं प्राप्नोति पिवति चामृतम्॥ २॥

अथ सूचीकटाहन्यायेन त्रीण्यात्मनेऽकुरुतेति मन्त्रभागमाब्राह्मणसमाप्तेर्व्याचष्टे—

त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मने कुरुताऽन्यत्रमना अभूवं नाऽदर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति। यः कश्चशब्दो वागेव सा एषा ह्यन्तमायत्तैषा हि न। प्राणोऽपानो व्यान उदानः समानोऽन इत्येतत्सर्वं प्राण एवैतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥ ३ ॥

मन आद्यात्मार्थं कृतवान् तत्र चक्षुरादि व्यापारेपि यस्य व्यापारं विना दर्शनादि यथावन्न भवति तस्मात् अदृश्ये पृष्ठे स्पृष्टोमुकस्पर्श इति येन जानाति तस्मादपि तस्य मनसस्सिद्धिः स्वरूपं तु कामो मैथुनेच्छा तदाद्या वृत्तयोन्तःकरणमिति यावत्। हि यत एषा वाक् अन्तमर्थं प्रत्यायत्ताप्रकाशिका स्वयं तु न प्रकाश्याऽतो वर्णध्वन्यात्मकः शब्दोस्याः स्वरूपमर्थप्रकाशनं तु

कार्यमिति भावः । प्राणादयो वायुवृत्तिविशेषा एषां सामान्यवृत्तिः सामान्यदेहचेष्टा हेतुरनः । प्राण एव देहान्तर्वायुरेव । अयमात्मा देहादिसंघातः ॥ ३ ॥

वागादीनां लोकाद्यात्मतामाह त्रय इत्यादिभिः—

त्रयो लोका एत एव वागेवायं लोको मनोन्तरिक्षलोकः प्राणोसौ लोकः ॥ ४ ॥ त्रयो वेदा एत एव वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥ ५ ॥ देवाः पितरो मनुष्या एत एव वागेव देवा मनः पितरः प्राणो मनुष्याः ॥ ६ ॥ पिता माता प्रजैत एव मन एव पिता वाङ्माता प्राणः प्रजा ॥ ७ ॥

लोका भूर्भुवः स्वः संज्ञाः ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

ज्ञातं ज्ञातुमिष्टमज्ञातं चैत एवेत्याह—

विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत्किंच विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वाऽवति ॥ ८ ॥ यत्किंच विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वाऽवति ॥ ९ ॥ यत्किंचा-

विज्ञातं प्राणस्य तद्रूपं प्राणोह्यविज्ञातः प्राण एनं तद्भूत्वाऽवति ॥ १० ॥

हि यतो वाक् विज्ञाता प्रकाशरूपत्वाज्ज्ञातस्वरूपाऽतो यत्किंचिद्विस्पष्टं ज्ञातं तद्वाचो रूपम् । यथा च ज्ञातो रविरन्यप्रकाशक इति घटादिप्रकाशोरवेरेव रूपं तथेति भावः । एनमुक्तवाग्वैभवं यो जानाति तम् तद्विज्ञातं भूत्वावति ज्ञातरूपमन्नं तस्य भवतीत्येवावनम् । एवं मनः प्राणवाक्यार्थोप्यूह्यः । अन्नमुपकारकं वागादयोपि ज्ञाततासंपादनेन संकल्पविकल्पात्मनाऽविज्ञात रूपेण क्रमादुपकारका इत्येषामन्नत्वमिति भावः ॥ ८ ॥ ९ ॥ १० ॥

वागादीनां विभूतिमाह—

तस्यै वाचः पृथिवी शरीरं ज्योतिरूपमयमग्निः तद्यावत्येव वाक् तावती पृथिवी तावानयमग्निः ॥ ११ ॥ अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यः तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यस्तौ मिथुन ँ समैतां ततः प्राणो जायत स इन्द्रः

स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ॥ १२ ॥ अथैतस्य प्राणस्याऽऽपः शरीरं ज्योतीरूपमसौ चन्द्रः तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रः त एते सर्व एव समाः सर्वेऽनन्ताः स यो हैतानन्तवत उपास्तेऽन्तवन्त ँ स लोकं जयत्यथ यो हैताननन्तानुपास्तेऽनन्त ँ स लोकं जयति ॥ १३ ॥

तस्या वाचः शरीरं नामाधारो भूः ज्योतिर्मयं रूपन्त्वग्निः । तत्तत्र । समानपरिमाणोक्तिस्त्वभेदविवक्षया ॥ ११ ॥ तत्तत्र । तावग्न्यादित्यौ वाङ्मनोरूपौ मिथुनं संसर्गं गतौ ततस्संसर्गात् । स प्राण इन्द्रः परमेश्वरः किंच द्वितीयः शत्रुरुच्यते तद्रहितोपीति यो वेदनास्य रिपुः स्यात् ॥ १२ ॥ तत्तत्र । ते वाङ्मनःप्राणाः । एतानन्तवतः परिच्छिन्नान् । लोकं फलं जयत्याप्नोति परिच्छिन्न एव भवतीति भावः ॥ १३ ॥

अथ वह्न्यर्कचन्द्रात्मकान्न त्रयमहमिति य उपास्ते तस्य संवत्सररूपप्रजापतित्वमाह—

स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदश कलाध्रुवैवास्य षोडशी कला स रात्रिभिरेवाऽऽच पूर्यतेऽपचक्षीयते सोऽमावास्या ँ रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेता ँ रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ॥ १४ ॥

रात्रयः प्रतिपदादिपञ्चदश्यन्तास्तिथयः । आपूर्यते शुक्ले पक्षे । षोडश्यमावास्या ध्रुवा तस्यां हि एका कलावशिष्यते सैव शुक्लप्रतिपदि पुनर्द्वितीयकलया युज्यते । सः प्रजापतिरमावास्यायां रात्रौ शिष्टैककलया सर्वं प्राणिजातं प्रविश्य प्रातर्द्वितीयकलया युज्यते यतस्तस्मात्तस्यां रात्रौ कस्यापि प्राणिनः प्राणं न छिन्द्यादाति पाप्य मङ्गलदर्शनकृकलासस्यापि किं पुनरन्यस्य । अहिंसा हीयमिन्दोरपचितिः पूजा इदमत्र ज्ञेयम् पञ्चाक्षरच्छन्दः पङ्क्तिरिति मनः प्राणदेहवित्तेन्द्रियैः पञ्चभिः साध्यत्वाद्यज्ञो वैदिकं कर्म एवमात्मा जाया प्रजावित्त कर्म स-

मुदायत्वात्पुरुषः कर्त्ता च पाङ्क्त उच्यते इति चतुर्थब्राह्मणान्ते उक्तम् ततः सप्तान्नानि च पाङ्क्तस्य कर्मणः फलानि पिता प्रजापतिरजनयदित्युक्त्वा चतुरन्नानि प्रदर्श्य तृतीयादि त्रयोदश्यन्त कण्डिकाभि स्त्रीण्यन्नानि प्रदर्शयन्प्रजापतिश्च पाङ्क्तस्य कर्मणः फलमिति तस्यापि पाङ्क्तत्वे सूचयितव्ये दिवादित्यौ मनः पिता पृथिव्यग्नी वाग्जाया माता तयोः प्राणः प्रजेत्युक्त्या आत्मा जाया प्रजेति त्रयमनया चतुर्दश्या तु कला वित्तं प्रवेशः कर्मेति द्वयं सूचितमिति॥१४॥

उक्तं वित्तकलाऽभेदं स्पष्टयति य इति——

यो वै स संवत्सरः प्रजापतिः षोडशकलोयमेव स यो यमेवं वित्पुरुषस्तस्य वित्तमेव पञ्चदशकला आत्मैवास्य षोडशी कला स वित्तेनैवाऽऽच पूर्यतेऽपचक्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनाऽगादित्येवाहुः ॥ १५ ॥

एवं वित् अन्नत्रयमहमिति यो वेत्ति तस्य वित्तं पश्वादि । आत्मा देहः । धनेन देहवृद्धि-

र्ह्यसौ प्रसिद्धौ । तथा हि देहोरथचक्रनाभिस्थानापन्नो वित्तं च प्रधिर्वाह्यमरनेम्यादि तथा च यदि सर्वस्वहानिर्यथा स्यादेवं हीयते देहेन चेज्जीवति तदा वाह्योपकरणैर्हीनतामगादयमित्येव वदन्ति अरनेम्यादिहीननाभि यथा तथेत्यर्थः॥१५॥

ननु जायापुत्रायेष्यते वित्तं तु धर्मकर्मणे पुत्रकर्मणी किमर्थे तत्राहाथेति—

अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति सोयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकाना ँ श्रेष्ठस्तस्माद्विद्यां प्रश ँ सन्ति ॥ १६ ॥

कर्मश्राद्धाग्निहोत्रादि विद्योपासना ॥ १६ ॥

पुत्रेण यथैतल्लोकजयस्तदाहाथेति—

अथातः संप्रत्तिर्यदा प्रैष्यन्मन्यतेथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोहं लोक इति यद्वै किं चानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता । ये वै

केच यज्ञास्तेषा ँ सर्वेषां यज्ञ इत्येकता ये-
वैके च लोकास्तेषा ँ सर्वेषां लोक इत्येक-
तैतावद्वा इद ँ सर्वमेतन्मा सर्व ँ सन्नयमि-
तोऽभुनजदिति तस्मात्पुत्रमनुशिष्टं लो-
क्यमाहुस्तस्मादेनमनुशासति स यदैवं
विदस्माल्लोकात्प्रैत्यथैभिरेव प्राणैः सह
पुत्रमाविशति । स यद्यनेन किंचिदक्ष्ण-
याऽकृतं भवति तस्मादेन ँ सर्वस्मात्पुत्रो
मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवास्मि ँ
ल्लोके प्रतितिष्ठत्यथैनमेते दैवाः प्राणा अ-
मृता आविशन्ति ॥ १७ ॥

यतः पुत्रेणैतल्लोकजयोतोथ संप्रत्तिस्सम्यक्
प्रदानं पिता पुत्रे स्व भारस्योच्यत इति शेषः ।
प्रैष्यन्मरिष्यन्नहमिति मन्येत तदा पुत्रं सांनि-
धाप्य त्वं ब्रह्म वेद इत्यादि पिताहं ब्रह्मेत्यादि पुत्रो
वदेत् । अनूक्तं मया यन्नाधीतं तस्य ब्रह्मेति पदे
एकत्वमभेदः तत्त्वयाध्येतव्यमिति भावः । एवं
यज्ञलोकयोर्ज्ञेयम् । इदं सर्वमत्र कर्तव्यमेताव-
देव तथा चैतद् ब्रह्मादि सर्वरूपस्सन्नाखिलमत्कृत्य

शेषकारी सन्नयं पुत्रो मामितो लोकात्कर्तव्यताबन्धनादभुनजत्पालयिष्यति मोचयिष्यति । यस्मान्मोचयति तस्मादुक्तप्रकारेण शिक्षितं लोकाय हितमाहुस्तस्मादुपदिशन्ति पितरः । एवं विदाज्ञाकारि पुत्रात्मना हृष्टो देहं विहाय पुत्रमाविशतीत्युत्प्रेक्ष्यते । स पुत्रोऽनेन पित्राऽद्दणयाछिद्रतो यदकृतं तस्मान्मुञ्चतीति उच्यते पितुः शेषं पूरयति त्रायते चैकं पितरमिति पुत्रनाम निर्वचनमिति भावः । मरणानन्तरमत्र लोके तु साक्षात्पुत्ररूपेणैव तिष्ठतीत्येवं पुत्रेणैतल्लोकजयः । अथैनमन्नत्रयेहंग्राहिणं प्रजापतिस्वरूपं पुत्रेर्पितभ.रं देवस्य हिरण्यगर्भस्य नित्यावागादयो विशन्ति ॥ १७ ॥

प्रवेशमेव सफलं कण्डिकाभिराह—

पृथिव्यैचैनमग्नेश्च दैवीवागाविशति सा वै दैवीवाग्यया यद्यदेव वदति तत्तद्भवति ॥ १८ ॥ दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं मनोयेनाऽऽनन्द्येव भवत्यथो न शोचति ॥ १९ ॥ अद्भ्यश्चैनं

चन्द्रमसश्चदैवः प्राण आविशति स वै दैवः प्राणोयः संचर ँ श्चासंचर ँ श्च न व्यथते थो न रिष्यति स एवं वित्सर्वेषां भूताना-मात्मा भवति । यथैषा देवतैव ँ स यथैतां देवता ँ सर्वाणि भूतान्यवन्त्येव ँ हैवं वि-द ँ सर्वाणि भूतान्यवन्ति यद्‌ु किं चेमाः प्रजाः शोचन्त्यमैवाऽऽसां तद्भवति पुण्य-मेवामुं गच्छति न ह वै देवान्पापं गच्छ-ति ॥ २० ॥

पृथिव्या अग्नेश्च सकाशाद्वाचो भौतिक रूपात् । वदति स्वस्मै परस्मै वा ॥ १८ ॥ १६ ॥ रिष्यति नश्यति । एवंबिदन्नत्रयोपासकः । आत्मा वाङ् मनः प्राणः । एषा हिरण्यगर्भाख्या । अ-वन्ति पूजयन्ति । यत्किं च प्रजाः शोचन्ति तदासां प्रजानामेवाऽमासह संगि भवति । अ-मुमुपासकं तु पुण्यमेव यतः स देवः शोकश्च पापजः ॥ २० ॥

अथ वागादि प्रसङ्गतोध्यात्मवर्गे प्राणस्य त-द्देवतावर्गे प्राणदेवतावायोश्च श्रैष्ठ्यज्ञानं सफलमाह तिसृभिः—

अथातो व्रतमीमा ᳪ सा प्रजापतिर्ह कर्माणि ससृजे तानि सृष्टान्यऽन्योन्येनास्पर्द्धन्त वदिष्याम्येवाहमिति वाग्दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्माणि यथाकर्म तानि मृत्युः श्रमो भूत्वोपयेमे तान्याप्नोत्तान्याप्त्वा मृत्युरवारुन्द्ध तस्माच्छ्राम्यत्येव वाक् श्राम्यति चक्षुः श्राम्यति श्रोत्रमथेममेव नाप्नोद्योयं मध्यमः प्राणः तानि ज्ञातुं दधिरे अयं वैनः श्रेष्ठोयः संचर ᳪ श्चा संचर ᳪ श्च न व्यथते थो न रिष्यति हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभव ᳪ स्तस्मादेत एतेनाऽऽख्यायन्ते प्राणा इति तेन ह वाव तत्कुलमाचक्षते यस्मिन्कुले भवति य एवं वेद य उ हैवं विदा स्पर्धतेऽनु शुष्यत्यनु शुष्यहैवान्ततोम्रियत इत्यध्यात्मम् ॥ २१ ॥ अथाधिदैवतम् ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्याम्यह-

मित्यादित्यो भास्याम्यहमिति चन्द्रमा एव-
मन्या देवता यथादैवत ँ स यथैषां प्रा-
णानां मध्यमः प्राण एवमेतासां देवतानां
वायुः म्लोचन्ति ह्यन्या देवता न वायुः
सैषा नस्तमिता देवता यद्वायुः ॥ २२ ॥
अथैष श्लोको भवति यतश्चोदेति सूर्योऽस्तं
यत्र च गच्छतीति प्राणाद्वा एषउदेति
प्राणेस्तमेति तंदेवाश्चक्रिरे धर्म ँ स एवाद्य
स उश्व इति यद्वा एतेऽमुर्ह्यध्रियन्त तदे-
वाप्यद्य कुर्वन्ति तस्मादेकमेव व्रतं चरेत्प्रा-
ण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नुव-
दिति यद्युचरेत्समापिपायिषेत्तेनो एतस्यै
देवतायै सायुज्य ँ स लोकतां जयति॥२३॥

यतोऽङ्गं व्रतमतो थान्नत्रयो पास्त्युक्तथनन्तरं
व्रतविचारः । कर्माणीन्द्रियाणि । तानि स्पर्धां च
क्रुर्वदिष्याम्यैवेत्यादि प्रकारेण यथाकर्मस्वस्व-
व्यापारमनतिक्रम्यव्रतं चेदमवश्यानुष्ठेयं कर्म द-
धिरे।उपयेमेनामाऽऽप्नोत्।अवारुद्धव्यापारानिरोधं
कृतवान् । अश्रमं प्राणं ज्ञातुं मनो दधिरेतानी-

न्द्रियाणि । यतस्ते वागादयः प्राणरूपतामभाव-
यँस्तस्मात्प्राणा इत्युच्यन्ते । य इन्द्रियाणां प्रा-
णात्मत्वं वेद तन्नाम्ना तत्कुलं वदन्ति यश्च तेनस्प-
र्धते स शुष्यन्म्रियते ॥ २१ ॥ अथेन्द्रियदेवता
व्रतम् । म्लोचन्ति अस्तं यान्ति स्वस्वव्रतान्निव-
र्तन्ते ॥ २२ ॥ वायुप्राणयोरश्रान्तत्वे मन्त्रोऽस्ति ।
तस्य गच्छत्यन्तं पूर्वार्द्धं तं देवा इत्युत्तरार्द्धम् ।
प्राणादिति पूर्वस्य यद्वै इत्युत्तरस्यार्थो ब्राह्मणम् ।
तं वायुधर्मं सततस्वव्यापारानुष्ठानरूपमग्न्यादि
देवाश्चक्रिरे स एव धर्मोद्य क्रियते देवैः श्वो-
भविष्यत्यपि काले करिष्यते इति मन्त्रोत्तरा-
र्द्धार्थः । एते देवा अमुरमुष्मिन्काले यद्व्रतमाध्रि-
यन्तेति तद् ब्राह्मणे योजना । अध्यात्मं चक्षुरा-
दिसायं प्राणेस्तं प्राणात्प्रातरुदयं च याति न तु
प्राणः एवं चक्षुर्देवता सूर्यश्च न वायुरिति देवा
अपि भावनया वायुव्रतमेव चक्रुः तस्मादन्योपि
स्वस्य प्राणात्मत्वं भावयन्नन्यव्रते पाप्मा मृत्युः
श्रमो मामाप्नुयादिति नेत् त्रस्तः प्राणनापान-
नादि प्राणव्रतमेव कुर्यात् अथ यदि चरेदेतद् व्रतं
तर्हि समाप्तिं कर्तुमिच्छेदन्यथा श्रान्तः स्यादिति

भावः तेन व्रतेन उ वितर्के प्राणदेवता सायुज्या-
द्याप्नोति ॥ २३ ॥

इति पञ्चमम् ।

अथोक्तं जगत्सङ्क्षेपेणाह तिसृभिः—

त्रयं वा इदं नामरूपं कर्म तेषां नाम्नां वागित्येतदेषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्ति। एतदेषाᳪ सामैतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति ॥ १ ॥ अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्ति एतदेषाᳪ सामैतद्धि सर्वै रूपैः सममेतदेषां ब्रह्मैतद्धि सर्वाणि रूपाणि बिभर्ति ॥२॥ अथ कर्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्ति एतदेषाᳪ सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति। तदेतत्त्रयᳪ सदेकमयमात्माऽऽत्मो एकः सन्नेतत्त्रयं तदेतदमृतᳪ सत्येनच्छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ॥ ३ ॥

इदं जगत्त्रयं वै त्रयमेव । तेषां मध्ये एषामखिलानां नाम्नां विशेषशब्दानां वागित्येतत्सामान्यं नामोक्थम् । हि यतोतः सामान्यात् ॥ १ ॥ २ ॥ आत्मा देहः । एकं सदेकीभूतमात्मा भवति आत्मा उ वितर्के पुनः त्रयं भवति । प्राणः कर्म । अमृतमविनाशी । सत्यं सच्च त्यच्च पञ्चभूतात्मकम् । छन्नत्वमन्तर्गतत्वम् । अन्योन्यकार्यकारणात्मकं नामरूपकर्ममात्रं जगदनात्मवस्त्विति भावः ॥ ३ ॥

इति बृहदारण्यकोपनिषत्प्रसादे षष्ठं ब्राह्मणं प्रथमोध्यायश्च ।

---

एवं जन्यमनित्यं जगदनात्मवस्तूक्त्वात्मवस्तु-बोधयितुमात्मज्ञानसाधनं श्रद्धेति सूचिकामाख्यायिकामादत्ते दृप्तेति—

दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥ १ ॥

असम्यग्ब्रह्मवित्त्वाद्दर्वितो बलाकापुत्रो ऽध्यापकोगार्ग्यो बभूव । सोऽजातशत्रुसंज्ञं काशिराजं स्वयं गत्वा ब्रह्म तुभ्यं वदानीति प्रतिज्ञातवान् । प्रतिज्ञामात्रे गोसहस्त्रं ददामि यतोयं राजा जनक इव ब्रह्मशुश्रूषुर्वहुदाताचेति वै प्रसिद्ध्या जना मां धावन्तीति साक्षेपं राजोक्तवान् ॥ १ ॥

स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठा अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति ॥२॥

पुरुष आदित्य मण्डलाभिमानीदेवः एतं ब्रह्मोपासे ब्रह्म भावये जानामीति वार्थः । एतस्मिन्ब्रह्मणि मयासंवादं मा कुरु यतोयं पुरुषः सर्वभूतान्यतिक्रम्य तिष्ठति सर्वेषां मूर्धा राजा चेत्येतद्गुणकमेतं पुरुषमहमपि जानामि यद्गुणकोपासनं तद्गुणावाप्तिः फलं भवतीत्यपि जानामीति भावः । एवमर्थोऽग्रेपि ॥ २ ॥

स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाबृहन्पाण्डरवासाः सोमो राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽहरहर्हसुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥ ३ ॥

बृहच्छुक्लवस्त्रवत्त्वं सोमलतात्मकत्वं राजत्वं चात्रगुणाः । प्रकृति यागे सुतः सोमरसः प्रसुतो विकृतियागे सदान्नप्राप्तिश्चेति फलम् ॥ ३ ॥

स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठास्तेजस्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते तेजस्वीह भवति तेजस्विनीहास्य प्रजा भवति ॥ ४ ॥

अत्र तेजो गुणः ॥ ४ ॥

स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठाः पूर्णमप्रवर्तीति वा अहमेतमुपास इति स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते ॥ ५ ॥

पूर्णत्वमक्रियत्वं च गुणौ । बहुपशुप्रजाप्तिर्यावल्लोकोयं तावद्वंशस्थितिश्च फलम् ॥ ५ ॥

स होवाच गार्ग्यो य एवायं वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स य एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवत्यन्यतस्त्यजायी ॥६॥

परमेश्वरत्वं कुण्ठाराहित्यमेकोनपञ्चाशद्गुणत्वरूपसेनात्वं च गुणाः । सर्वत्र जयापराजययोरन्यतस्त्यानां शत्रूणां जयशीलस्य च लाभः फलम् ॥ ६ ॥

स होवाच गार्ग्यो य एवायमग्नौ पुरुष-एतमेवाहं ब्रह्मोपास इति स होवाचा-जातशत्रुर्मामैतस्मिन्संवदिष्ठा विषासहिरि-ति वा अहमेतमुपास इति स य एतमेव-मुपास्ते विषासहिर्हं भवति विषासहिर्हास्य प्रजा भवति ॥ ७ ॥

विषां हविषामा सहिस्सोढादाहकोग्निः। दीप्ताग्निर्भवतीति फलम् ॥ ७ ॥

स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचा-जातशत्रुर्मामैतस्मिन्संवदिष्ठाः प्रतिरूप इ-ति वा अहमेतमुपास इति सय एत-मेवमुपास्ते प्रतिरूपᳵहैवैनमुपगच्छति ना प्रतिरूपमथो प्रतिरूपोस्माज्जायते ॥ ८ ॥

प्रतिरूपस्सदृशोनुकूल इति यावत्। अस्मादुपासकात्प्रजा जायते ॥ ८ ॥

स होवाच गार्ग्यो य एवाय मा-दर्शे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मामैतस्मिन्संवदिष्ठा रो

च्चिष्णुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः संनिगच्छति सर्वा ५ स्तानति रोचते ॥ ९ ॥

रोचिष्णुर्दीप्तिस्वभावः । रोचते स्वसंगतान्प्रकाशयति ॥ ९ ॥

स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येत मेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवादिष्ठा असुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्व ५ हैवास्मि ५ ल्लोके आयुरेति नैनं पुराकालात्प्राणो जहाति १०

यन्तं गच्छन्तं पश्चात्पृष्ठदेशे यः शब्दो भवति । असुत्वं जीवन हेतुत्वं गुणः । सर्वमायुर्भुक्त्वेनाकाले म्रियत इति च फलम् ॥ १० ॥

स होवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजात शत्रुर्मा मैतास्मिन्संवदिष्ठा द्वितीयोऽन पग इति वा अहमेतमु-

पास इति स य एतमेवमुपास्ते द्वितीय वान्ह भवति नास्माद्गुणश्छिद्यते ॥ ११ ॥

दिग्देवोऽश्विनौ तत्र स द्वितीय त्वमावियुक्तत्वं च सदा गुणः । गणः परिवारादि गणो न च्छिद्यते न पृथग्भवति ॥ ११ ॥

स होवाच गार्ग्यो य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वꣳ हैवास्मिꣳल्लोक आयुरेति नैनं पुराकालान्मृत्युरागच्छति ॥ १२ ॥

मृत्युर्मृत्युरहित इति यावत् । फलं दशमकण्डिकोक्तम् ॥ १२ ॥

स होवाच गार्ग्यो य एवायमात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति स य एतमेवमुपास्त आत्मन्वीह भवति आत्मान्विनीहास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥ १३ ॥

आत्मनिदेहे प्रजापताविति बहवः । आत्मान्वी आत्मावान् स्ववशः। निर्गुणब्रह्माज्ञानात्तूष्णीं बभूव ॥ १३ ॥

स होवाचाजातशत्रुरेतावन्नूउइत्येतावद्धीति नैतावता विदितं भवतीति स होवाच गार्ग्य उपत्वायानीति ॥ १४ ॥

विचारे नू प्लूतः। एतावदेव ब्रह्म जानास्यधिकं वेतिभावः। एतावदेवेति गार्ग्यः नैतावता ब्रह्ममुख्यं विदितं भवतीति राजा। तर्ह्यहमेवत्वामुपाऽऽयान ॥ १४ ॥

स होवाचाजातशत्रुः प्रतिलोमं चैतद्यद् ब्राह्मणः क्षात्रियमुपेयाद् ब्रूह्म मे वक्ष्यतीति व्येवत्वा ज्ञपमिष्यामीति तं पाणावादायोत्तस्थौ तौ ह पुरुष ऽ सुप्तमाजग्मतुस्तमेतैर्नामाभिरामन्त्रयां चक्रे वृहन्पाण्डरवासः सोमराजन्निति स नोत्तस्थौ तं पाणिनापेषं बोधयांचकार स हो तस्थौ ॥१५॥

मह्यं ब्रह्मवदिष्यतीति हेतोर्ब्राह्मणस्य शिष्यविधयाक्षात्रियाऽन्तिगमनं विपरीतमतः प्रकारा

न्तरेण मुख्यं ब्रह्म त्वां विज्ञपयिष्याम्येवेत्युक्त्वा करे धृत्वा गार्ग्यमुत्तस्थौ । तं सुप्तं त्रिभिस्संबोधनैर्बोधयामास राजा । पाणिना पेषं पाणिनापिष्याऽऽपीडय । स सुप्तः ॥ १५ ॥

स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कु तएतदागादिति तदुहनमेने गार्ग्यः ॥ १६ ॥

यत्र पूर्वमेष पुरुषः एतत् शयनं यथा भवेदेतदर्थं सुप्तोभूत् । ततो योयं पुरुष एष तदा सुप्तौ क्वाभूदसंज्ञः कुत्र स्थितः पुनः पाणिपेषादद्य कुतआगतः अथास्य तदुत्तरं न ज्ञातवान् ॥ १६ ॥

स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोन्तर्हृदय आकाशस्तस्मिञ्छेते तानि यदा गृह्णात्यथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः ॥ १७ ॥

य एष पुरुषः स तत्तदा शयनानन्तरं निद्राभि-

भूत चिदाभासान्तः करणेनेन्द्रियाणां संज्ञामपहृत्यहार्दि कूटस्थे शेते सान्निध्यं यात्यहंतात्यागात्। तदा स्वपितीति नाम प्रसिद्धः उच्यत इति यावत्। यतः तत्तदा प्राणोघ्राणः ॥ १७ ॥

ननु न घ्राणादीनां निग्रहः स्वप्ने सर्वव्यापारप्रसिद्धे रत आह स इति—

स यत्रैतत्स्वप्न्यया चरति ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति स यथा महाराजो जानपदान्गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेतैवमेवैष एतत्प्राणान्गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥ १८ ॥

यत्र यदा स पुरुष एतज्जागरणं यथा स्यात्तथा जाग्रत्सदृश्येति यावत् स्वप्नवृत्त्यावर्तते तदास्य ते जाग्रद्भिन्ना लोकाः कर्मफलानि भवन्ति। तथाहि उत शब्दोप्यर्थः महाराज इवापि भवति महाब्राह्मणो ब्रह्मवित्स इवापि। उच्चं देवत्वाद्य वचन्तिर्यक्त्वादितदिवापि गच्छति कदाचित्। न च स्वप्नेन्यः पुरुषो देशोवेति दृष्टान्तेनाह स यथेति। सत्यां

वासनायां स्वीयानादाय स्वदेशे यथा राजा तथे-
न्द्रियाणि जाग्रत्स्थानादुपसंहृत्य देह एव पुरुषो
विचरति । देहेऽसंभवात्स्वप्नदृष्टं मिथ्येति भावः।
एवं द्रष्टात्मा दृश्योपाध्यतिरिक्त इति सूचि-
तम् ॥ १८ ॥

अनित्यो दृश्यसंबन्ध इति नित्यशुद्धः पुरुष इति
सुषुप्तिं वर्णयत्यथेति—

अथ यदा सुषुप्तो भवति यदा न क-
स्य च न वेद हिता नाम नाड्यो द्वासप्ततिः
सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ता-
भिः प्रत्यवसृप्य पुरीतति शेते स यथा कु-
मारो वा महाराजो वा महाब्राह्मणो वाऽति-
घ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छे-
ते ॥ १९ ॥

सुतरां सुप्तो भवति। कदा यदा न कस्यापि सं-
बन्धं वेद। हृदयदेशात्पुरीततं संपूर्णदेहं यान्ति
हितसंज्ञायास्ताभिर्व्याप्य संपूर्णदेहे शेते दृश्या-
भानादपरिच्छिन्नतां यातीति भावः। कुमारोति
बालः। यथैतेतिशयेन दुःखघ्नीमानन्दावस्थां ग-

त्वा शेरते एवमेतच्छयनं यथा स्यात्तथैष सुषुप्तश्शेते परमानन्दतां च यातीत्यर्थः निस्संज्ञो यदा तदा परमानन्दस्वरूपे स्थित इति भावः ॥ १९ ॥

पाणिना पेषे कुत आगत इत्यस्योत्तरमाह

स इति—

स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणावै सत्यं तेषामेष सत्यम् ॥ २० ॥

यथाग्नेः सकाशादग्निरूपा अल्पा अग्निकणा उपाधिवशतस्तथात्मनस्सकाशादात्मभूता एवेन्द्रियादयो जायन्ते अथ लूताख्यकीटो यथा स्वतो निस्सृतस्वावयवतन्तुद्वारा तथेन्द्रियादिद्वारा बोधात्मापि स्वरूपादेव बहिर्देहादावागत इव पाणिपेषणेन निद्रादोषोपशमे । एवं च स्वोत्पन्नोपाधितोवस्थाभेदेन भेदप्रतीतावपि लोके पुरुष इवात्मानभिधयतेऽसङ्गसाच्चिदानन्दब्रह्मात्मेति भा-

वः । यतोस्माद्व्युच्चरन्त्यतोस्य ब्रह्मात्मन उपनिषद्बोधकः शब्दो नामेति यावत् । नाम्नोर्थमाह प्राण इति । एतद् व्याख्यानं चाग्रिमं ब्राह्मणद्वयम् ॥ २० ॥

इति द्वितीयाध्यायस्य प्रथमं ब्राह्मणम् ।

---

प्राणा वै सत्यमित्यत्र प्राणान्निर्णेतुमाह य इति—

**यो ह वै शिशुꣳ साधानꣳ स प्रत्याधानꣳ सस्थूणꣳ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि । अयं वाव शिशुर्योयं मध्यमः प्राणस्तस्येदमेवाऽऽधानमिदं प्रत्याधानं प्राणः स्थूणान्नंदाम ॥ १ ॥**

आधानमाधारः आधारेपि यत्राधेयस्य साक्षात्संसर्गः स प्रत्याधारः । स्थूणास्तम्भः । दामरज्जुः । भ्रातृव्यः शत्रुः । शरीरमध्यस्थ प्राणस्य विषयेषु करणवदसक्तत्वं शिशुत्वम् । वत्सो यथा क्वचित्कुत्रचित्स्थले पाशबद्धः कीलावलम्बास्तिष्ठत्येवं प्राणोपि शरीरे शिरः प्रभृति देशविशेषेन्नपानजवलकीलेन्नपानजसप्तधातुबद्धोस्तीति यो वेद

स शिरस्थ सप्तच्छिद्रशत्रून् इन्द्रियाणां विषयेषु आसक्तौ द्वारतां द्वेषं कुर्वतो जयति ॥ १ ॥

अथास्यैव प्राणस्याक्षिस्थस्याक्षयहेतुत्वादाक्षिति संज्ञाः सप्तरुद्राद्या उपगच्छन्तीत्याह तमिति।

तमेताः सप्ताऽक्षितया उपतिष्ठन्ते तद्या इमा अक्षन्लोहिन्यो राजयः ताभिरेन ९ रुद्रोन्वायत्तोथ या अक्षन्नापस्ताभिः पर्जन्यो याकनीनकातयादित्यो यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्तन्या पृथिव्यन्वायत्ताद्यौ रुत्तरया नास्यान्नं क्षीयते य एवं वेद ॥ २॥

तमुक्तं प्राणम् । तत्तत्र सप्तसु । अक्षन्नक्ष्णिया रक्तरेखास्तद्वारा रुद्रः एवमाद्भिः पर्जन्यो दर्शनशक्तयाऽऽदित्यः कृष्णेनाग्निः शुक्लेनेन्द्रः अधः पक्ष्मणाभूरूर्ध्वपक्ष्मणाद्यौः एतेन्वायत्ता अनुगताभवन्त्येनं प्राणम् ॥ २ ॥

तदेष श्लोको भवति—

अर्वाग्बिलश्चमस ऊर्ध्व बुध्नस्तस्मिन्यशो निहितं विश्वरूपम् । तस्याऽऽसत ऋषयः सप्ततीरे वागष्टमी ब्रह्मणा संविदानेति ।

अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एषह्यर्वाग्बिलश्चम स उर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमिति प्राणा वै यशो विश्वरूपं प्राणानेतदाह तस्याऽऽसतऋषयः सप्ततीर इति प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वा ग्ध्यष्टमी ब्रह्मणा संवित्ते ॥ ३ ॥

तत्तत्र चक्षुरादिविषयेयं मन्त्रोस्ति । तत्र पूर्वार्द्धो मूलमुत्तरार्द्धस्तदर्थः। अधोमुख ऊर्ध्वमूलो यज्ञपात्रविशेषश्चम सोत्र शिरः तत्र छिद्राणां सप्तत्वेन सर्वेंद्रियाणि वायवो वा नानारूपं यशो-यश इव प्रसृतत्वात् तथा तस्यचमसस्य तीरोछिद्रेषूक्ताः सप्त ऋषय आसते अथास्ये इन्द्रियद्वयम् तत्र रसनासप्तमो यातु ब्रह्मणा वेदेन संवादं कुरुते शब्दमुच्चारयतीति यावत् सा वागष्टमी तयोर्बिलस्यैक्यादैक्यमत्र विवक्षितमिति भावः ॥ ३ ॥

ऋषिनामान्या हेमाविति—

इमा वेव गोतमभरद्वाजा वयमेव गोतमोयं भरद्वाज इमावेव विश्वामित्र जमदग्नी

अयमेव विश्वामित्रोयं जमदग्निरिमावेव वसिष्ट कश्यपा वयमेव वशिष्ठोयं कश्यपो वागेवात्रिर्वाचाह्यन्न मद्यतेऽत्तिर्हवैनामैतद्य दत्रिरिति सर्वस्यात्ताभवति सर्वमस्यान्नं भवति य एवं वेद ॥ ४ ॥

कर्णौ वाद्यावृषीतत्रायं दक्षिणो गोतमः एवं चक्षुषी द्वितीयौ नासिके तृतीयौ अद्यतेनेने-त्यत्तिः अत्तिरिति वक्तव्येऽत्रिरित्युच्यते इत्यर्थः पञ्चभूतात्मकानि देहदेवेन्द्रियाणि प्राणा इत्येत-द् ब्राह्मण तात्पर्यम् ॥ ४ ॥

इति द्वितीयम् ।

अथ पञ्चभूतात्मकप्राणानां सत्यत्वं निर्णेतुमाह द्वेवाव ब्रह्मणो रूपे मूर्तं चैवा-मूर्तं च मर्त्यं चामृतं च स्थितं च यच्च स च्चत्यं च ॥ १ ॥

रूपे निरूपके स्वाधिष्ठानतया बोधके । मूर्तं मूर्तिमत्सावयवम् । मर्त्यं मरणशीलम् । स्थितम-चलम् । सत् दृश्यम् । एतद्विपरीतमन्यचतुर्णा-मर्थः ॥ १ ॥

आद्यरूपं विभज्याह तदिति—

तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्चैत-न्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यै-तस्य स्थितस्यैतस्य सत एष रसोय एष त-पति सतो ह्येष रसः ॥ २ ॥

वाय्वाकाशभिन्नं यद्भूतत्रयं मूर्तादिचतुर्विशे-षणकं तस्य सारो रसः सूर्यमण्डलम् ॥ २ ॥

द्वितीयमाहाथेति—

अथामूर्तं वायुश्चान्तरिक्षं चैतदमृतमे-तद्यदेतत्त्यम् तस्यै तस्या मूर्तस्यै तस्या-मृतस्यै तस्य यतः एतस्य त्यस्यैष रसो य एष एतस्मिन्मण्डले पुरुषस्त्यस्य ह्येष रस इत्यधिदैवतम् ॥ ३ ॥

वाय्वाकाशभूतद्वयममूर्तत्वादेवामृतं चलं च आकाशे तु च लत्वं व्यापकत्वम्। भूतद्वयरसश्च मण्डलान्तर्गतो हिरण्यगर्भः सूक्ष्मत्वात् इति सूर्यदेवमधिकृत्य मूर्तामूर्तविभागकथनम् ॥३॥

अथाध्यात्मम् इदमेव मूर्तं यदन्यत्प्रा-णाच्चयश्चायमन्तरात्मन्नाकाश एतन्मर्त्यमे-

तत्स्थितमेतत्सत् तस्यै तस्य मूर्तस्यै तस्य मर्त्यस्यै तस्य स्थितस्यै तस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥ ४ ॥

आत्मन्नात्मनिदेहन्तः प्राणोवायुश्च ताभ्यामन्यद्यदस्थ्याद्यात्मना भूतत्रयं तदेव मूर्तादि चतुर्विशेषणावत् तद्रसश्चक्षुः ॥ ४ ॥

अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यदेतत्त्यम् तस्यैतस्यामूर्त्तस्यै तस्यामृतस्यै तस्य यत एतस्यत्यस्यैष रसो योयं दक्षिणेऽक्षन्पुरुषस्त्यस्य ह्येषरसः ॥ ५ ॥

अमूर्तादिविशेषणकंदेहान्तर्वर्ति यद्भूतद्वयं तद्रसो दक्षिणेक्षिण सूक्ष्मशरीरो जीवात्मा ॥ ५ ॥

तस्य हैतस्य पुरुषस्य रूपम्—

यथामाहारजनं वासो यथापाण्डवाविकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथापुण्डरकिंयथा सकृद्विद्युत्तः सकृद्विद्युत्तेवहवा अस्यश्रीर्भवति य एवं वेद अथात आदेशो नेति नेति न ह्येत

स्मादिति नेत्यन्यत्परमस्त्यथ नामधेयꣳ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥ ६ ॥

महारजनं हरिद्रा तद्रक्तं वस्त्रम् । पाण्डुवर्णमवेरिदमूर्णादि । इन्द्रगोपोऽतिरक्तः कीटः । अग्निज्वाला । श्वेतकमलम् । विद्युतः सकृद्विद्योतनम् । यथैतत्सर्वं तथा रङ्गरूपानेकविधवासनामयं रूपमस्योक्तस्य मूर्तरसस्य सूक्ष्मपुरुषद्वयस्य । तत्राधिदेवहिरण्यगर्भस्यैवं वासनारूपं यो वेद तस्य विद्युदिव श्रीः प्रकाशः ख्यातिर्भवति । एतावता सच्चत्यं चेति सत्यं भूतपञ्चकमिति सिद्धम् भौतिकत्वाच्च प्राणा जगद्वस्तु तत्सत्यमेवेत्यर्थात्सिद्धम् । अथ तेषां भूतानामपि सत्यं परमार्थस्वरूपम् किमित्याकाङ्क्षायामाहाथेति अथ सत्यस्वरूपोक्त्यनन्तरं यतः सत्यस्य सत्यमेव वक्तव्यम् तत्र चासङ्गबोधमात्रात्मब्रह्मणि निमित्ताभावेन शब्दमात्रप्रवृत्त्यसंभवोऽतस्तस्यादेश उपदेशोऽखिलजगद्भ्रमानिषेधार्थको नकार एव यत्र न किंचित्तदेव तदिति विधयेति भावः न द्वयं तु निषेध्यस्यानवशेषायात्रैकालिकत्वाय च । कुतोऽयमेवादेशस्तत्राह नेति हि यत

एतस्मादन्यत्परमादेशनं नास्तीति हेतोर्नेति नेत्येवादेशः। अथैवं सिद्धं ब्रह्मणो नाम सत्यस्य सत्यमिति पूर्वोक्तम्। अयंभावः शक्यानिषेधं यावत्तावन्निषिध्य तूष्णीं भावे निषेधसाक्षिसंविदात्मस्वरूपं परिशेषविधया प्रसिध्यत्येव। न चैषासुकृतसमूहपरिसमूहितदुरितानां मुमुक्षुविवेकिजनानां विविदिषा बिलसितमानसानां निरुद्धाखिलचित्तप्रवृत्तिकानां निर्विकल्पसमाधि दशामुपस्थितानां हृदयेष्वसङ्गनिर्विशेषसंवित्स्वरूपप्रसिद्धिरप्रसिद्धेति ॥ ६ ॥

।इति तृतीयम्

अथप्रकारान्तरेण ब्रह्मात्मज्ञानं स साधनं वक्ष्यन् नेति नेतीति निषधस्मृतस्त्याग एवानिषेध्यस्यात्मनः साक्षात्कारस्य साधनानां श्रवणमनननिदिध्यासनानां साधनम् न यतो वित्तसुतकलत्रादिविक्षिप्तचित्तेन निर्विशेषवेदान्तविषयोऽध्यवसातुं शक्य इतिसूचिकामाख्यायिकामाह मैत्रेयीति—

मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरे अहमस्मात्स्थानादस्मिहन्ततेनया कात्यायन्यान्तं करवाणीति ॥ १ ॥

हे मैत्रेयि इत्युवाच ह स्फुटमभिमुखीकरणाय पूर्वम् ततोऽस्माद्गृहस्थानादुत्कृष्टं निर्विक्षेपं स्थानं वै निश्चयेन यास्यन् यातुमुद्युक्तोऽहमस्मि तस्मात्तवानयासपत्न्यासहाविवादायान्तं निर्णयं वित्तविभागं करिष्यामीत्युवाच ॥ १ ॥

साहोवाचमैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवीवित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितꣳस्यादमृतत्वस्यतुनाशास्तिवित्तेनेति ॥ २ ॥

ततः प्राक्कृतसुकृतवशात् सपद्यवगताविवेकाविरागा भगोऽहं भगवन्किमियता धनसंपूर्णा सर्वापि पृथ्वी यद्यदिमेस्यात्तेनापि धनेनामृतामुक्ता कथं स्यांभविष्यामीति नु तर्कयामीत्युवाच सा न कथमपीति सः किन्तु भोगसाधनवतां यथा तथा सुखेन जीव नमात्रमेव तेस्याद्वित्तेनेति च ॥ २ ॥

सा होवाच मैत्रेयी येनाहं नामृतास्यां

किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहीति ॥ ३ ॥

तेन वित्तन किं कुर्यां मुक्त्यसाधनं वित्तं न ग्रहीष्यामीति भावः । यदेव मुक्तिसाधनं भवान् जानाति ॥ ३ ॥

स होवाच याज्ञवल्क्यः प्रियावतारे नः सती प्रियंभाष स एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ४ ॥

अरे मैत्रेयि यत एवं मम प्रियं भाषसे यस्त्वं नो अस्माकं प्रियावतानुकम्पया सती पतिव्रता चेत्येह्यागच्छ समीपमास्स्व वसवक्ष्यामि मुक्तिसाधनम् परन्तु व्याचक्षाणस्य व्याख्यातुर्मे निदिध्यासस्व तात्पर्येणासकृद्विचारय वचनानीतिशेषः ॥४॥

सहोवाच नवा अरे पत्युः कामाय पतिः प्रियोभवत्यात्मनस्तु कामाय पतिःप्रियोभवति । नवा अरे जायायै कामाय जायाप्रिया भवत्यात्मनस्तु कामाय जायाप्रिया भवति । नवा अरे पुत्राणां कामाय पुत्राः प्रियाभवन्त्यात्मनस्तु कामाय पुत्राः प्रियाभवन्ति ।

नवा अरे वित्तस्य कामाय वित्तं प्रियं भवत्या-
त्मनस्तु कामाय वित्तं प्रियं भवति । नवा
अरे ब्रह्मणः कामाय ब्रह्मप्रियं भवत्यात्म-
नस्तु कामाय ब्रह्मप्रियं भवति । नवा अरे
क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु
कामाय क्षत्रं प्रियं भवति । नवा अरे लो-
कानां कामाय लोकाः प्रिया भवन्त्यात्मन-
स्तु कामाय लोकाः प्रिया भवन्ति । नवा
अरे देवानां कामाय देवाः प्रिया भवन्त्या-
त्मनस्तु कामाय देवाः प्रिया भवन्ति । न-
वा अरे भूतानां कामाय भूतानि प्रियाणि
भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि
भवन्ति । नवा अरे सर्वस्य कामाय सर्वं
प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भ-
वति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो
मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो
वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेने-
दꣳसर्वंविदितम् ॥ ५ ॥

यस्याऽऽभासस्वरूपाय पतिः स्त्री पुत्रोधनं ब्राह्मणत्वं क्षत्रियत्वं लोकादेवाभूतानीत्यादि सर्वं प्रियं भवति स परः प्रियः श्रेयानात्मात्मै आत्मैव गुरुमुखाद्ग्रहणेन श्रवणेन युक्तिभिर्द्दढीकरणेन मननेन चिरं मुहुर्ध्यानेन निदिध्यासनेन च द्रष्टव्यो ज्ञातव्यस्साक्षात्कर्तव्यः । तथा सति न किं चिज्ज्ज्ञातव्यमवशिष्यते न्यस्याभावादात्मन इत्यद्वितीयात्मज्ञानमेवा मृतत्वसाधनमिति भावः ॥ ५ ॥

य देवात्मनोन्यत्वेन जानाति यस्तदेव तमनात्मज्ञं करोति यतस्सर्वमिदमात्मैवेत्याह

ब्रह्मेति—

ब्रह्म तं परादाद्यो न्यत्रात्मनो ब्रह्मवेद क्षत्रं तं परादाद्योन्यत्रात्मनः क्षत्रंवेद लोकास्तं परादुर्योन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योन्यत्रात्मनो देवान्वेद भूतानि तं परादुर्योन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानि इदꣳ सर्वं यदयमात्मा ॥ ६ ॥

ब्रह्मब्राह्मणजातिरेवं क्षत्रम् । परादाच्च्युतमका-र्षीदात्मज्ञत्वतः । यत इदं सर्वं ब्रह्मक्षत्रादिकमय-मात्मा ॥ ६ ॥

कथमिदं सर्वमात्मेतिचेत् सामान्यस्वरूपान्नपृ-थग्विशेषो गृह्यते इति सामान्यस्वरूप एव विशेषः तथा च यथा सामान्योदुन्दुभिशब्दः पूर्वं गृह्य-तेनन्तरं च तद्गता विशेषा दण्डाघातशब्दाद्या गृह्यन्ते सर्वे च ते विशेषा न सामान्यदुन्दुभिश-ब्दतोभिन्नाः । एवमन्येपि शङ्खशब्दाद्यास्सा-मान्याः । सर्वेप्येते सामान्या न शब्द सामान्या-त्पृथग्गृह्यन्ते इति शब्द सामान्यस्य विशेषा दु-न्दुभि शब्दादयो न शब्दतो भिन्नाः । तथा घटो-स्ति घटोयमित्यादयस्सर्वेपि सत्तास्फुरणविशेषा अखण्डसामान्यसत्तास्फुरणात्मकात्मनो न भि-न्ना इतीत्थमित्याह स यथेत्यादि तिसृभिः—

स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्र-हणेन दुन्दुभ्याघातस्य वा शब्दो गृ-हीतः ॥ ७ ॥

स यथा शङ्खस्य ध्मायमानस्य न बाह्यान् शक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ८ ॥

स यथा वीणायै वाद्यमानायै न बाह्यान् शब्दान् शक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ ९ ॥

यथा ताडितस्य दुन्दुभेः शब्दान् बाह्यान्दुन्दुभितो निस्सृतान्विशेषाकारान् दुन्दुभिशब्दसामान्यात्पार्थक्येन ग्रहीतुं न शक्नुयात्कोऽपि किन्तु दुन्दुभेर्दुन्दुभिशब्दसामान्यस्य ग्रहणेन ग्रहणानन्तरं दण्डेन दुन्दुभेराघा तस्य ग्रहणानन्तरं वा शब्दोविशेष शब्दोऽवान्तरः शब्दभेदो गृहीतो भवति तथा स उक्तो ब्रह्मक्षत्राद्यखिलभेद इत्यर्थः। एवमग्रिमकण्डिकयोरप्यर्थः ॥ ७ ॥ ध्मायमानस्य वायुना पूर्यमाणस्य। शङ्खध्मस्य वायुपूरणस्य॥ ८ ॥ वीणायै वीणायाः। वीणावादस्य वीणावादनस्य ॥ ६ ॥

एवं स्थितिकाले सर्वस्यात्मतामुपपाद्योत्पत्तिकाले पितामह स इति—

स यथार्द्रैधाग्नेरभ्याहितात्पृथग्धूमाविनिश्चरन्त्येवं वा अरेस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोथर्वाङ्गिरस इतिहासः १ पुराणं २ विद्या ३ उपनिषदः ४ श्लोकाः ५ सूत्राण्य ६ नुव्याख्यानानि ७ व्याख्यानान्य ८ स्यैवैतानि निश्वसितानि ॥ १० ॥

आर्द्राण्येधांसि काष्ठानि यत्र तस्मादाभिमुख्येनाहितादग्नेः सकाशात्पूर्वमभिन्ना एव धूमादयोनिस्सरन्तियथैवं वै एव मेवास्यात्मनोमहतो भूतस्ये श्वरस्य ब्रह्मस्वरूपस्य वा निश्वासो वेदामन्त्रात्मकाः ब्राह्मणं चेतिहासाद्यष्ट विधमुपलक्षणत्वात्सर्वं जगदिति यावत् तथा च स आत्मैव सर्वमुत्पत्तेः प्रागपीति शेषः ॥ १० ॥

विशेषाणां कार्याणामन्ते सामान्ये कारणे एकीभावादन्तेपि स बोधस्वरूपआत्मै वेत्याह

दृष्टान्तैः स इति—

स यथा सर्वासामपाᳬसमुद्रमेकाय नमेवᳬसर्वेषाᳬस्पर्शानां त्वगेकाय नमेवᳬसर्वे-

षां गन्धांनां नासिके एकायनमेव॰सर्वेषा॰ रसानां जिह्वै कायनमेव॰ सर्वेषा॰ रूपाणां चक्षुरेकायन मेव॰ सर्वेषा॰ शब्दाना॰ श्रोत्रमेकायनमेव॰सर्वेषा॰संकल्पानां मनएकायनमेव॰सर्वासां विद्याना॰हृदयमेकायनमेव॰सर्वेषां कर्मणा॰हस्तावेकायनमेव॰सर्वेषामानन्दानामुपस्थ एकायनमेव॰सर्वेषां विसर्गाणां वायुरेकायनमेव॰सर्वेषामध्वनां पादावेकायनमेव॰सर्वेषां वेदानां वागेकायनम् ॥ ११ ॥

अपां मे घनद्यादि द्वारेणागतानां फेनबुद्बुदतरङ्गादि रूपाणां वार्धिरेकाय नमेकीभावः तथानेकविधानां मृदुकठिनादिस्पर्शानां त्वक्त्वागिन्द्रियग्राह्यः सामान्यस्पर्शः एवमग्रेप्यूह्यम् । विद्यानां ज्ञानानाम् । हृदयमन्तःकरणं बुद्धिर्वा । कर्मणां हस्तेन्द्रियसाध्यानाम् । हस्तौ हस्तेन्द्रियसाध्यकर्मसामान्यम् । अध्वनामध्वोपलक्षितविशेषाणां गमनानाम् । वेदानामुक्तिविशेषाणां ॥११॥ यद्यपीत्थमिदं त्रिकालेष्वात्मैव तथाप्यनादिद्वैतभ्र-

मजन्यद्द्वैतसंस्कारो यावदेकनिर्विशेषाधिष्ठानाचिदात्मज्ञानेन न नश्यति न तावत्कैवल्यमिति सूचयति स इति—

स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायेवस्यात् यतो यतस्त्वाददीत लवणमेव एवं वा अर इदं महद्भूतमनन्तमपारं विज्ञान घन एव एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ॥ १२ ॥

सैन्धवो जलजो वह्न्यादि सम्बंधेन लवणाख्यः खण्डो यः स उदकान्तरे क्षिप्तः स्वप्रकृत्युदकं द्रवीभूतमनुपश्चाल्लीयते ततश्च पुनरस्य खिल्यस्य रूपस्योद्ग्रहणायोद्धृत्य ग्रहणा एवापि न ह नैवस्यात्समर्थः कोपि । न चलयोत्तरमभावः यतो यद्देशात्तज्जलं रसनया गृह्णीयात्ततो लवणमेव गृह्यते । एवं वै एवमेवारे मैत्रायि मिथ्यापञ्चभूतेभ्यश्शरीरादि रूपेभ्यस्संपृक्तेभ्यो हेतुभ्यः स सामान्यज्ञान स्वरूप आत्मैव विज्ञानघनो विशेषज्ञानमूर्तिरेव

न वस्त्वन्तरं समुत्थाय खिल्य इव परिच्छिन्नीभूय अथ वेदान्तविचारजात्मबोधेन कारणनाशे विनष्टानि तानि भूतान्यनुपश्चान्नश्यति नाशोनाऽभावः किन्त्वेवं प्रेत्य प्रकृष्टस्वरूपमेत्यविशेषसंज्ञानभवतीति ब्रवीमि नश्यति पदेन। यतो ब्रह्मविद्दृष्ट्या अनन्तं न सापेक्षं किन्त्वपारं देशकालवस्तुभिरसंस्पृष्टं वस्तुतोनन्तं महद्भूतं ब्रह्मस्वरूपमिदं सर्वं जगद्रसनया लवणमिवेत्यर्थः ॥ १२ ॥

न प्रेत्य संज्ञास्तीत्यस्तोक्तार्थमविदुषीं मरणोत्तरं बोधाभावो भवतीत्यर्थे च विनाशित्वमात्मन इत्यभिप्रायां मैत्रेयीं संबादयति सेति—

सा होवाच मैत्रेय्यत्रैव मा भगवान् मूमुहन्नप्रेत्य संज्ञास्तीति स होवाच न वा अरेहं मोहं ब्रवीम्यलं वा अरे इदं विज्ञानाय ॥१३॥

न प्रेत्यसंज्ञास्तीत्यत्रैवार्थे भगवान्समर्थो भवान्मामामवलां मोहमविवेकं प्रापितवानिति सोवाच । स याज्ञवल्क्यस्तु नैवाहं मोहदं वाक्यं ब्रवीमि यतोरे इदमविनाशित्वमात्मनो विज्ञानायालं पर्याप्तं न गुप्तमहरहः सुषुप्तिसाक्षिणामति स्फुटमिति यावदित्युवाच ॥ १३ ॥

यथावं विज्ञानाय तत्स्वयमाह यत्रेति—

यत्र हि द्वैतमिव भवति तदितरइतरं जिघ्रति तदितर इतरं पश्यति तदितर इ-तर ँ शृणोति तदितर इतरमभिवदति त-दितर इतरं मनुते तदितर इतरं विजानाति। यत्र वा अस्य सर्वमात्मैवाभूत्तत्केनकं जि-घ्रेत्तत्केनकं पश्येत्तत्केनक ँ शृणुयात्तत्केनक मभिवदेत्तत्केनकं मन्वीत तत्केनकं विजानी-यात् येनेद ँ सर्वं विजानाति तं केन विजा-नीयात् विज्ञातारमरे केन विजानीयादि-ति ॥ १४ ॥

यत्र निर्विशेषाधिष्ठान चिदबोधदशायां द्वैत-मिवावस्तुत्वात् तत्तदा । इतरो भिन्नः कर्ता । भिन्नं गन्धादिकं जानाति । यत्र तु चिदात्मसा-क्षात्कारदशायां सर्वं भ्रमद्वैतमात्मैवा भूदात्म-न्यधिष्ठाने लीनम् तत्तदासर्वोपि तत्तद्बोधात्मको व्यवहारो निवर्तते न बोधो संभवाद्यथा सुषुप्ता-विति भावः । ननु मास्त्व चित्पदार्थस्तदा चिदन्त-रेण चिदन्तरं ज्ञायेतेत्यत आह येनेति साक्षिचैत

न्येनेत्यर्थः । केनेति नान्योतोस्तिद्रष्टेत्यादि श्रुतेरनवस्थितेश्च चिदन्तराभाव इति भावः ॥ १४ ॥

इति चतुर्थम् ।

त्रिष्वपि कालेषु सर्वमिदमात्मै वा विनाशीत्यनन्तरमुक्तम् अथ पृथिव्याद्यखिलं जगच्च भोक्तृभोग्यात्मकम् भोक्तृभोग्यत्वे च परस्परानिरूप्ये भोग्यं च भोक्तृदृष्टजन्यमपीति परस्परोपकार्योपकारकत्वेन परस्परस्य परस्परं प्रियत्वान्मधु तथा च मृन्मयेमृदं शस्येव सर्वत्र प्रियत्वाभिव्यक्तानन्दाख्यात्मांशोपलम्भेनापि सर्वमात्मेत्यवसेयमिति मधुब्राह्मणमाहेयमिति—

इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधुयश्चायमस्यां पृथिव्यां तेजोमयोमृतमयः पुरुषो यश्चायमध्यात्म ऽ शारिरस्तेजोमयो मृतमयः पुरुषो यमेव स योयमात्मा इदममृतामिदं ब्रह्मेद ऽ सर्वम् ॥ १ ॥ इमा आपः सर्वेषां भूतानां मध्वासामपा ऽ सर्वाणि भूतानि मधु-

यश्चायमा स्वप्सुतेजोमयो मृतमयः पुरुषो यश्चायमध्यात्म ७ रैतसस्तेजोमयो मृतमयः पुरुषो यमेव स योयमात्मेदममृतमिदं ब्रह्मेद ७ सर्वम् ॥ २ ॥ अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु-यश्चायमस्मिन्नग्नौ तेजोमयो मृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोमृत-मयः पुरुषो यमेव स योयमात्मेदम मृत-मिदं ब्रह्मेद ७ सर्वम् ॥ ३ ॥ अयं वायुः सर्वेषां भूतानां मध्वस्य वायोः सर्वाणि भूतानि मधुयश्चाय मस्मिन्वायौ तेजोमयो मृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्ते-जोमयो मृतमयः पुरुषो यमेव स योयमा-त्मेदममृतमिदं ब्रह्मेद ७ सर्वम् ॥ ४ ॥ अयमादित्यः सर्वेषां भूतानां मध्वस्यादि-त्यस्य सर्वाणि भूतानि मधुयश्चायमस्मि-न्नादित्ये तेजोमयो मृतमयः पुरुषो यश्चा-यमध्यात्मं चाक्षुषस्तेजोमयो मृतमयः पुरु-

षो यमेव स योयमात्मेदम मृतमिदं ब्रह्मे-
द ँ सर्वम् ॥ ५ ॥ इमादिशः सर्वेषां भूता-
नां मध्वासां दिशा ँ सर्वाणि भूतानि मधु-
यश्चाय मासुदिक्षु तेजोमयो मृतमयः पु-
रुषो यश्चायमध्यात्म ँ श्रौत्रः प्रातिश्रुत्क-
स्तेजोमयो मृतमयः पुरुषो यमेव स योय-
मात्मेदममृतमिदं ब्रह्मेद ँ सर्वम् ॥ ६ ॥
अयं चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्र-
स्य सर्वाणि भूतानि मधुयश्चायमास्मि ँ
श्चन्द्रे तेजोमयो मृतमयः पुरुषो यश्चाय-
मध्यात्मं मानसस्तेजोमयो मृतमयः पुरुषो
यमेव स यो यमात्मेदममृतमिदं ब्रह्मेद ँ
सर्वम् ॥ ७ ॥ इयं विद्युत्सर्वेषां भूतानां म-
ध्वस्यै विद्युतः सर्वाणि भूतानि मधुयश्चा-
यमस्यां विद्युति तेजो मयोमृतमयः पुरुषो
यश्चायमध्यात्मं तैजसस्तेजोमयोमृतमयः
पुरुषो यमेव स यो यमात्मेदममृतमिदं ब्र-
ह्मेद ँ सर्वम् ॥ ८ ॥ अयं ँ स्तनयित्नुःसर्वेषां

भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधुयश्चायमस्मिन्स्तनयित्नौ तेजोमयोमृतमयः पुरुषो यश्चायमध्यात्मꣳशाब्दः सौवरस्तेजोमयो मृतमयः पुरुषो यमेव स यो यमात्मेदममृतमिदं ब्रह्मेदꣳसर्वम् ॥ ९ ॥ अयमाकाशः सर्वेषां भूतानां मध्वस्याकाशस्य सर्वाणि भूतानि मधुयश्चायमस्मिन्नाकाशे तेजोमयोमृतमयः पुरुषो यश्चायमध्यात्मꣳहृद्याकाशस्तेजोमयो मृतमयः पुरुषोयमेव स योयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १० ॥ अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधुयश्चायमस्मिन्धर्मे तेजोमयोमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोमृतमयः पुरुषोयमेव स योयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ ११ ॥ इदꣳसत्यꣳसर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधुयश्चायमस्मिन्सत्ये तेजोमयोमृतमयः पुरुषो य-

श्चायमध्यात्मꣳसात्यस्तेजोमयोमृतमयः पुरुषो यमेव स योयमात्मेदममृतमिदं ब्रह्मेदꣳ सर्वम् ॥ १२ ॥ इदं मानुषꣳसर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधुयश्चायमस्मिन्मानुषे तेजोमयोमृतमयः पुरुषो यश्चायमध्यात्मं मानुषस्तेजोमयोमृतमयः पुरुषोयमेव सयोयमात्मेदममृतमिदं ब्रह्मेदꣳसर्वम् ॥ १३ ॥ अयमात्मा सर्वेषां भूतानांमध्वस्यात्मनः सर्वाणि भूतानि मधुयश्चायमस्मिन्नात्मनि तेजोमयोमृतमयःपुरुषो यश्चायमात्मा तेजोमयोमृतमयःपुरुषोयमेव सयोयमात्मेदंममृतमिदं ब्रह्मेदꣳसर्वम् १४॥

अर्थः । भूतानां प्राणिनाम् । मधुप्रिया । अस्यै अस्याः । यश्चयोपि । तेजोमयश्चिन्मयोऽमृतमयस्सद्रूपः पुरुषोन्तर्यामीपृथिव्युपाधिकः तथा यश्चायमध्यात्ममात्मानमधिकृत्य शरीररूप पृथिव्यां शारीरः शरीरोपाधिकः शरीरस्याभिमान्यधिष्ठाता अनयोः परस्परमधुत्वं चोपाधिमधुत्वोक्त्यैव सिद्धमिति नोक्तम् । एवं च स उभयस्सोपाधिः पुरुषोयमेव कः यो यं निरुपाधिकः प्रोक्त

आत्मा । इदमेव चात्मवस्त्वमृतं नित्यं च ब्रह्म च सर्वं चेत्यर्थः अथाग्निमपर्यायेष्वप्येवमेवार्थः ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ षष्ठे तु प्रतिश्रुत्काप्रतिश्रवण वेलातत्रभवः प्रतिध्वनिसमये श्रोत्र देशे सन्निहितः प्रातिश्रुत्क इतिविशेषः ६ ॥ ७ ॥ अष्टमे तु तेजस्त्वक् तत्रभवस्तदुपाधिकस्तैजस इति ८ ॥ नवमे तु स्तनयित्नुर्मेघः । स्वरे निषादादौ शब्दविशेषेभवः सौवर इति ९ ॥ दशमे तु हृद्याकाशो हृदयाकाशोपाधिक इति १० ॥ एकादशे तु चोदनालक्षणो धर्मो द्विधा पृथिव्यादेर्हेतुरध्यात्म शरीरादेर्हेतुश्चेति तत्रान्त्ये धर्मे भवोधार्मस्तद्धर्मोपाधिक इति ११ ॥ द्वादशे तु वर्तमानजन्मनि सदाचारजप्रभावस्सत्यम् तदपि धर्मवद्द्विधा तत्रान्त्योपाधिकस्सात्य इति १२ ॥ त्रयोदशे तु मानुषं मनुष्यत्वं जातिः तच्च स्वशरीरनिष्ठमध्यात्मं तत्रभवो मानुष इति १३ ॥ चतुर्दशे तु आत्मा स्वस्वजीवात्मा । भूतानामन्यजीवात्मनाम् । आत्मन्यन्यस्य संघाते । आत्मास्वसंघाते इति शेषः इति १४ ॥

एवमिदमात्मैव यतः सर्वमतः सर्वमात्माधीनमित्याह स वा इति—

स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानाꣳराजा तद्यथा रथनाभौ च रथनेमौचाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः ॥ १५ ॥

अधिपतिः स्वामीनामात्य इव किन्तु राजा परमस्वतन्त्रः तथाननाममात्रेण राजा किन्त्वधिपतिरित्युभयथानिर्देशः । रथचक्रस्यमध्यान्त्यकाष्ठयोर्यथारास्तिर्यक्काष्ठानि प्रोतानि । भूतानि चराचराणि सामान्यतः । आत्मानश्चिदाभासाः ॥१५॥ एवं भार्ययाऽमृतत्वसाधनं पृष्टो याज्ञवल्क्य आत्मज्ञानमात्मज्ञानप्रकार विशेष विषयकं मधुब्राह्मणं चोक्तम् तत्र मधुब्राह्मणे संमतये आत्मज्ञानं दुर्लभमिति सूचनाय च मन्त्रद्वयमवतारयतीदमिति—

इदं वै तन्मधुदध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् तद्वांनरासनयेदꣳस उग्रमाविष्कृणोमि तन्यतुर्नवृ-

ष्टिम् । दध्यङ्ह यन्मध्वाथर्वणो वामश्वस्य शीर्ष्णा प्रयदीमुवाचेति ॥ १६ ॥ इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् । आथर्वणायाश्विनादधीचेऽश्व्यशिरः प्रत्यैरयतम् । सवांमधु प्रवोचदृतायन्त्वाष्ट्रं यद्दस्रावपि कक्ष्यंवामिति ॥ १७ ॥

उभयत्रावोचदित्यन्तं ब्राह्मणं ततो मन्त्रः । यन्मध्वाथर्वणो दध्यङ्ङृषिरश्विभ्यां स्वर्गवैद्याभ्यामुवाच तदिदं यदियं पृथिवीत्यादिनोक्तमिति वैस्मर्यते । तत्तद्दधीचो वचनं जानन्नृषिर्मन्त्रो वोचदिति ब्राह्मणभागार्थः । हे नरौ नराकारौ स्वर्वैद्यौ सनये लाभाय ब्रह्मविद्याया वां युवयोर्यदुग्रं क्रूरं दंसः कर्म तद्गुप्ततयापि कृतमहमाविः प्रकटं करोमि । तन्यतुर्मेघः न इवार्थे मेघो यथा वृष्टिं प्रकटीकरोति तथा । आत्मज्ञानाख्यं यन्मधु तद्दध्यङ्नामा ऋषिरश्वस्य शिरसा वां युवाभ्यां यत्प्रोवाच ईमिदं तत्कर्मेतिशेषः । इतिवाक्य पूर्तौहःस्फुटे ॥ १६ ॥ हे अश्विनौ दधीचे ऋषये यदा पूर्वशिरश्छित्वान्यत्रनीत्वाऽश्व्यम-

श्वसंवन्धि शिरः प्रत्यैरयतं प्रत्यर्पितवन्तौ युवाम् तदा स दध्यङ् ऋतायन् वक्ष्यामीति स्ववचनं सत्यं कुर्वन् त्वाष्ट्रं कर्म विशेष संवन्धि यन्मधु हे दस्रौ स्ववैद्यौ कक्ष्यंगोप्यमात्मज्ञानाख्यं यन्मधु तदपि वां युवाभ्यां प्रवोचत् । इयमत्राख्यायिकात्मविद्यादौर्लभ्यसूचिका अश्विभ्यां प्रार्थितो वक्ष्यामीति प्रतिज्ञाययद्यन्यस्मै वक्ष्यसि शिरश्छेत्स्यामीतीन्द्रेणोक्तोपि दध्यङ् आवाभ्यां योजिते नाश्वशिरसाध्यापय ततः शक्रेण छिन्नेप्यश्वशिरसीदं छित्वान्यत्र रक्षितं ते शिरः पुनर्योजयिष्याव इत्याश्विभ्यामुक्तस्तथा चकारेति ॥ अथान्यदपि यन्मध्वात्मज्ञानार्थमुक्तं तत्प्रदर्शनाय मन्त्रद्वयमवतारयतीदमिति—

इदं वै तन्मधु दध्यङ्ङाथर्वणोश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् । पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः पुरः सपक्षी भूत्वा पुरः पुरुष आविशदिति । स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयोनैनेन किंचनाऽनावृतं नैनेन किंचनाऽसंवृतम् ॥ १८ ॥

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्। रूपꣳरूपं प्रतिरूपो बभूव तदस्य रूपं प्रति चक्षणाय। इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शतादशेति। अयं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मा पूर्वमनपरमनन्तरमवाह्यमयमात्माब्रह्म सर्वानुभूरित्यनुशासनम्॥

अनयोरपि ब्राह्मणभागस्तदर्थश्च पूर्ववत्। द्वौ चत्वारो वा यत्र पादास्ताः पुरश्शरीराणि कृत्वा पुरः पूर्वम्। स्थूलकारण शरीरे पक्षौ यस्येति पक्षीत्वक्षीणमालयमुत्सृज्यालयान्तरं यातीति वा पक्षी लिङ्गशरीरं भूत्वा स परमात्मा पुरश्शरीराणि पुरुषसंज्ञस्सन्नाविशत् एकएवात्मेतिभावः। अथद्विधा पुरुषसंज्ञां व्युत्पादयाति स वै इति। यतः पुरिशयः पुरिशरीरे शेते तस्स एवायमात्मा सर्वासु पूर्षु पुरुषस्तत्संज्ञः। तथानेनात्मनाऽनावृतमनाच्छादितमसंवृतमव्याप्तं न किंचिदप्यस्ति। आच्छादनं वाह्यतो व्याप्तिस्त्वन्तर्वहिस्सर्वत इ-

त्ति सर्वस्य वहिरन्तश्चात्मास्तीति यावत् तथा च पूर्णत्वादपि पुरुष इति भावः ॥ १८ किमर्थं पुरुषभावस्तदाह प्रवेशानन्तरं रूपं रूपं प्रति लिङ्गशरीरम् । प्रतिरूपोभिव्यक्त प्रतिबिंवरूपो वभूव तच्च प्रतिविंवाख्यं रूपमस्यात्मनो विंवस्य प्रतिचक्षणाय प्रातिलोम्येन प्रत्यक्तया ख्यापनाय । भवति चादर्शादि प्रतिविंवेन दृगादि विंवख्यापनमन्यथा तु न । एवं च कुतो न ज्ञायत एकात्मानेकात्मता च ज्ञायते तदाह । हि यस्माद्रथेश्वा इव प्रति शरीरे दश दश हरय इन्द्रियाणि युक्ता योजिताः सन्ति । शरीरानन्त्याच्च हरीणामपि दशाद्यनन्तान्तत्वम् । अस्य प्रमातात्मनो विषयेषु सदा हरणात्प्रापणाच्च हरित्वमिन्द्रियाणाम् इतीन्द्रियाणामुपाधि परत्वाद्धतोरिन्द्रः परमात्मैक एव मायाभिर्मायाकार्यदेहाद्युपाधिभिरुपाधेर्वहुत्वात्पुरुरूपो वहुरूपःप्रतीयते। अस्येत्युक्तितः प्राप्तं भेदं वारयाति हरयो हर्याद्युपाधयोप्ययमेवाय मेवात्मैव । ननु सर्वात्मत्वं ब्रह्मणो नत्वात्मन इति चेत्तदाह पूर्वं कारणमपरं कार्यम् तथा च कार्यकारणान्तर्वाह्यभेदशून्यं हि

ब्रह्म तथा सर्वानुभवकर्ता चात्मा अयं च भेदो मायाभिरित्ययमात्माब्रह्मैव वस्तुत इतीत्येवानुशासनमुपदेशः सर्ववेदान्तेष्वित्यर्थः ॥ १६ ॥

इति पञ्चमम् ।

अथातीताध्याय चतुष्टयस्याध्येतृध्यापकानां वेणुपर्वणामिव परं पराक्रमो वंशो हिरण्यगर्भात्पौतिमाष्यान्तः यतो न कस्यापि शिष्यो हिरण्यगर्भः पौतिमाष्यस्य च न कोपि शिष्यः। स चाध्ययनाध्यापनाभ्यामदृष्टार्थ इति मन्त्रत्रयेणान्तत आरभ्य ब्रह्मविद्यास्तुतये चाहाथेत्यादिना—

अथ वꣳशः पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥ आग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चानभिम्लात आनभिम्लातादानभिम्लात आनभिम्लातानभिम्लातादानभिम्लातो गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्याꣳसैतवप्राचीनयोग्यौ पाराश-

र्यात्पाराशर्यो भारद्वाजाद्भारद्वाजो भारद्वाजा-
च्चगौतमाच्चगौतमो भारद्वाजाद्भारद्वाजः पा-
राशर्यात्पाराशर्यो वैजवापायनाद्वैजवापाय-
नः कौशिकायनेः कौशिकायनिः ॥ २ ॥
घृतकौशिकाद्घृतकौशिकः पाराशर्यायणा-
त्पाराशर्यायणः पाराशर्यात्पाराशर्यो जा-
तूकर्ण्याज्जातूकर्ण्य आसुरायणाच्चयास्काच्चा-
ऽऽसुरायणस्त्रैवणेस्त्रैवाणे रौपजन्धनेरौपज-
न्धनि रासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रे-
यादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौत-
माद्गौतमो वात्स्याद्वात्स्यः शाण्ल्याच्छा-
ण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यःकाप्यः कुमा-
रहारितात्कुमारहारितो गालवाद्गालवो वि-
दर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनूपा-
तोवाभ्रवाद्वत्सनपाद्बाभ्रवः पथःसौभरात्प-
न्थाःसौभरोऽयास्यादाङ्गिरसादयास्य आङ्गि-
रस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्व-
रूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्वि-

नौ दधीचआथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणोदैवादथर्वादैवो मृत्योःप्राध्वꣳसनान्मृत्युःप्राध्वꣳसनः प्रध्वꣳसनात्प्रध्वꣳसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोःसनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनःपरमेष्ठी ब्रह्मणोब्रह्म स्वयम्भु ब्रह्मणेनमः ॥ ३ ॥

अत्र प्रथमान्त पदेन शिष्यः पञ्चम्यन्त पदेनाचार्योज्ञेयः १ ॥ २ ॥ परमेष्ठी विराट् । ब्रह्मणोहिरण्यगर्भात् ॥ ३ ॥

इति बृहदारण्यकोपनिषत्प्रसादे द्वितीयाध्याये षष्ठं ब्राह्मणं द्वितीयोध्यायश्च ।

---

अथ विधान्तरेणात्मविद्या विवक्षया तृतीयाध्यायमुपादित्सन् गुरुसेवामेवात्मविद्याधिगमोपायमनपायमादेयमादरेण सूचयन्सेवा विशेषधनार्पणोपाख्यान गर्भितां वादिप्रतिवादिवहूपपत्तिनिर्णीतविशयोचलतयासपदि बुद्धि विषयो भवतीति च सूचयन् तादृशीमाख्यायिकामवतारयति जनक इति—

जनकोहवैदेहो वहुदक्षिणेन यज्ञेनेजे तत्रहकुरुपञ्चालानां ब्राह्मणा अभि समेता वभूवुः तस्यह जनकस्य वैदेहस्य विजिज्ञासा वभूव कःस्विदेषां ब्राह्मणानामनूचानतमइति सहगवाᳫसहस्रमवरुरोध दशदश पादा एकैकस्या शृङ्गयोरावद्धावभूवुः ॥ १ ॥

जनकोहप्रसिद्धोराजा विदेहाज्जातःसोश्वमेधेनेजे। तत्र यज्ञे कुरु पञ्चाल इशयोर्वहु विद्वांसोभिसंगताः। स्विदिति वितर्के एषां मध्ये व्याख्यातृतमः कइति जिज्ञासया स जनकः प्रतिशृङ्गं पञ्च पञ्च पादान्सुवर्णांस्य बध्वा गवां सहस्रं गोष्ठे स्थापयामास। पलचतुर्थांसः पादः ॥ १ ॥

तान्होवाच ब्राह्मणाभगवन्तो यो वो ब्रह्मिष्ठः स एतागा उदजतामिति—

तेह ब्राह्मणानदधृषुरथहयाज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सोम्योदजसामश्रवा ३ इति ताहोदाचकार तेह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठोब्रुवीतेत्यथह जनकस्य वैदेहस्य होताऽश्वलो बभूव स हैनं

पप्रच्छ त्वंनु खलु नो याज्ञवल्क्य ब्रह्मिष्ठो सी३ इति स होवाच नमोवयं ब्रह्मिष्ठाय कुर्मोगोकामा एव वय९स्म इति त९ह तत एव प्रष्टुं दध्रेहोताश्वलः ॥ २ ॥

तान्ब्राह्मणान् । हे ब्राह्मणा वोयुष्माकं मध्ये यो ब्रह्मिष्ठोतिशयेन ब्रह्मावेदार्थज्ञः उदजतां नयताम् । नदधृषुर्ब्रह्मिष्ठोह मित्युक्तौ धृष्टानबभूवुः । हे सामश्रवाः सामपाठिन् । उदजमदृगृह मिति शेषः । तागाः । नो स्माकं सतामहं ब्रह्मिष्ठ इति कथं ब्रुवीतेतिक्रोधः । बभूवासीत् । नोस्माकं मध्ये त्वं ब्रह्मिष्ठोसीति भर्त्सनेप्लुतिः प्रश्ने । ततो ना ब्रह्मिष्ठाब्रह्मिष्ठार्था एताः कामयेतेति गो कामा इत्यनेन ब्रह्मिष्ठ प्रतिज्ञानादेव हेतोः प्रष्टुं मनोदध्रे ॥ २ ॥

प्रश्नोत्तरेआहयाज्ञेति—

याज्ञवल्क्येति होवाच यदिद९ सर्वं मृत्युनाऽऽप्त९ सर्वं मृत्युनाऽभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति होत्रर्त्वि-

जाग्निनावाचा वाग्वैयज्ञस्य होतातद्येयं वा-
क्सोयमग्निः स होतासमुक्तिः साऽतिमुक्तिः ३

हे याज्ञवल्क्य यदिदं कर्मतत्साधनं चर्त्विगादि
तत्सर्वं संस्पृष्टं ग्रस्तं च मृत्युनाऽतः केनोपायेन
मृत्युमतिक्रम्यमुच्यते यजमान इत्युवाचाश्वलः
होत्वाऋत्विजाग्निनावाचा उपायेनेति याज्ञव-
ल्क्यः । कथं तत्राह यो होता स यज्ञस्य यजमा-
नस्य वाग्वैवागेव इयं वाक्स्वदेवाग्न्यभिन्ना तथा
चाऽग्न्यभिन्न वागभिन्नहोतुरग्न्यभिन्नत्वमिति सो-
ग्निरेव होता अथाग्नित्वेन भावितो वागभिन्नः स
होतैव मुक्तिर्मुक्तिसाधनं यजमानस्य । सामुक्ति-
रेव चातिमुक्तिः । वाचिहोतरिचाग्निदृष्टिरेवाति-
मुक्त्युपाय इति भावः ॥ ३ ॥

याज्ञवल्क्येतिहोवाच यदिद ँ सर्वमहो-
रात्राभ्यामाप्त ँ सर्वमहोरात्राभ्यामभिपन्नं
केन यजमानो होरात्रयोराप्तिमति मुच्यत
इत्यध्वर्युणर्त्विजा चक्षुषादित्येन चक्षुर्वै य-
ज्ञस्याध्वर्युस्तद्यदिदं चक्षुः सो सावादित्यः
सोध्वर्युः सा मुक्तिः सातिमुक्तिः ॥ ४ ॥

अत्राप्तं स्पृष्टं जायते ऽभिपन्नं ग्रस्तं विनश्यतीत्यर्थः । पूर्ववदन्योर्थः चक्षुष्यध्वर्यौ चादित्यदृष्टिः कालसंबन्धमतिक्रम्य मुक्तेरुपाय इति भावश्च ॥ ४ ॥

यद्यपि पक्षावहोरात्रान्तर्गतौ तथाप्यहोरात्रयोरादित्यश्चन्द्रकलावृद्धिक्षयमूलकपक्षयोस्तु चन्द्रः कर्तेति भेदेनाह याज्ञेति—

याज्ञवल्क्येतिहोवाच यदिद ँ सर्वं पूर्वपक्षापरपक्षाभ्यामाप्त ँ सर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमति मुच्यत इत्युद्गात्रर्त्विजा वायुना प्राणेन प्राणो वै यज्ञस्योद्गाता तद्यो ऽयं प्राणः स वायुः स उद्गाता स मुक्तिः सातिमुक्तिः ॥ ५ ॥

अत्र यद्यपि प्राणोद्गात्रोः कारणचन्द्रदृष्टया कार्यपक्षातिक्रमेण मुक्त्युक्तिरुचिता तथापि चन्द्रवृद्धिक्षयावपि वाय्वधीनाविति वायुनेत्युक्तम् । अर्थस्तु पूर्ववत् ॥ ५ ॥

एवं कर्मतत्साधनकालविशेषेभ्यः पृथग्भावरूपातिमुक्तिरुक्ताथ पृथग्भूतस्य स्वर्गप्राप्तिरूपासोच्यते याज्ञेति—

याज्ञवल्क्येतिहोवाच यदिदमन्तरिक्षम-नारम्वणमिव केनाऽऽक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति ब्रह्मणर्त्विजा मनसा च-न्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सो सौचन्द्रः स ब्रह्मा स मुक्तिः सातिमु-क्तिरित्यति मोक्षा अथ संपदः ॥ ६ ॥

अन्तरिक्षमालम्बनरहितमिव भातीति केना-वलम्बेन स्वर्गं यातीति प्रश्नः ब्रह्ममनसोश्चन्द्र-दृष्ट्या चन्द्राभिन्नमनसेति यावदित्युत्तरम् । इ-तीमेऽति मोक्षा उक्ता अथ संपद उच्यन्ते इति शेषः संपच्च केनचित्साम्येन निकृष्टेउत्कृष्टस्य सं-पादनं ध्यानेन यथा कर्मत्वसाम्येनाग्निहोत्रेश्व-मेधस्य तत्फलस्य वा भावना । शेषं पूर्ववत् ॥६॥

अथोक्तहोत्राद्यृत्विक् चतुष्टयसंवन्धिप्रश्नाद्याह चतसृभिः कण्डिकाभिर्याज्ञेति—

याज्ञवल्क्येतिहोवाच कतिभिरयमद्य-र्ग्भिर्होतास्मिन्यज्ञे करिष्यतीति तिसृभि-रिति कतमास्तास्तिस्र इति पुरोनुवाक्या च याज्याच शस्यैव तृतीया किं ताभिर्ज-

यतीति यत्किंचेदं प्राणभृदिति ॥ ७ ॥

कतिमन्त्रैः शंसनं करिष्यति शंसतीति यावदिति संख्याप्रश्ने तिसृभिरित्युत्तरम् । यागकालात्पुरः पूर्वं या ऋचः प्रयुज्यन्ते सा ऋग्जातिरनुवाक्या । एवं यागेऽयाः सा याज्या । अन्यायाः साशस्या । त्रित्वसंख्यासाम्येनाखिल प्राण्युपलक्षित त्रिलोक जयफल संपादन मन्त्र बोध्यम् ॥७॥

याज्ञवल्क्येतिहोवाच कत्ययमद्याध्वर्युरस्मिन्यज्ञआहुतीर्होष्यतीति तिस्र इति कतमास्तास्तिस्र इति याहुता उज्ज्वलन्ति याहुता अतिनेदन्ते याहुता अधिशेरते किं ताभिर्जयतीति याहुता उज्ज्वलन्ति देवलोकमेवताभिर्जयति दीप्यत इव हि देवलोको याहुता अतिनेदन्ते पितृलोकमेवताभिर्जयत्यतीवहि पितृलोको याहुता अधिशेरते मनुष्यलोकमेवताभिर्जयत्यध इव हि मनुष्यलोकः ॥ ८ ॥

कति कति प्रकाराः । याः समिदाज्याहुतयः । यामांसाद्याहुतयः नेदन्ते कुत्सितशब्दं कुर्वन्ति ।

याः पयः सोमाहुतयोऽधिशेरते भूमावधो गच्छन्ति । उज्ज्वलत्वं नरकस्थजनाक्रन्दनेन कुत्सितशब्दवत्त्वं स्वर्गापेक्षयाधोभूगतत्वं च क्रमेण तत्तत्फल संपादने साम्यम् ॥ ८ ॥

याज्ञवल्क्येतिहोवाच कतिभिरयमद्यब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीत्येकयेति कतमासैकेति मन एवेत्यनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ॥ ९ ॥

दक्षिणतःस्थितो ब्रह्मा मनसा ध्यानेन यज्ञं गोपायति मनश्च वृत्तिभेदादनन्तं वृत्यभिमानिनो विश्वेदेवाश्चानन्ता इत्यनन्तत्वमत्र साम्यम् ॥९॥

याज्ञवल्क्येति होवाच कत्ययमद्योद्गातास्मिन्यज्ञेस्तोत्रियाः स्तोष्यतीति तिस्र इति कतमातास्तिस्र इति पुरोनुवाक्या च याज्या च शस्यैव तृतीया कतमास्तायां अध्यात्ममिति प्राणएव पुरोनुवाक्याऽपानो याज्याव्यानः शस्या किं ताभिर्जयतीति पृथिवीलोकमेव पुरोनुवाक्यया जयत्यन्तरिक्षलोकं याज्यया द्युलो-

कथंशस्यया ततो ह होताऽश्वल उपरराम ॥ १० ॥

कतिजातीयाः स्तोत्रिया ऋक्साम समुदायाः स्तोष्यति गास्यतीत्याद्य प्रश्नः प्रगीता ऋचःस्तोत्रमप्रगीताः शस्त्रमिति भेदः। अध्यात्मं देहे या ऋचस्ताः कतमाःका इति तृतीयप्रश्नः। पूर्वं लोकं पूर्वया मध्यं मध्ययोत्तरमुत्तरया जयतीति पूर्वत्वादि सामान्यमत्र फलसंपादने ज्ञेयम् ॥ १० ॥

इति बृहदारण्यकोपनिषत्प्रसादे तृतीयाध्यायस्य प्रथमं ब्राह्मणम् ।

---

मुक्त्युपायात्मविद्यावर्णने प्रवृत्तस्तत्तद्दृष्ट्यावान्तरातिमुक्तिमश्वल ब्राह्मणेनोक्त्वाथ बन्धमविदुषो मुमुक्षैव न स्यादिति बन्धनिरूपणाय प्रच्छकान्तरमवतारयत्यथेति ।

अथ हैनं जारत्कारव आर्तभागः पप्रच्छ । याज्ञवल्क्येति होवाच कतिग्रहाः कत्यतिग्रहा इति अष्टौ ग्रहा अष्टावतिग्रहा इति येतेष्टौ ग्रहा अष्टावतिग्रहाः कतमेत इति ॥ १ ॥

अथाश्वल तूर्ष्णींभावानन्तरमृतभागपुत्रो जर-

रकारुगोत्रः पप्रच्छ । गृह्णातीति ग्रहो वन्ध इति यावत् । आद्यः संख्या प्रश्नः ॥ १ ॥

उत्तरमाह प्राण इत्याद्यष्टकण्डिकाभिः—

प्राणो वै ग्रहः सोपानेनातिग्राहेण गृहीतोऽपानेन हि गन्धान् जिघ्रति ॥ २॥

हि यतो पानेन नासां विशताश्वासेनाऽऽनीतान् गन्धान् गृह्णाति प्राणो घ्राणमतश्चानेत्वा ने ययोरभेदादपानेन गन्धेन स प्राणो गृहीतो वशीकृतः गन्धार्थमेवयतो घ्राणम् ग्रहस्यापि ग्रहत्वाद्गन्धोतिग्रहो मुख्यो ग्रह इति भावः ॥ २ ॥

वाग्वैग्रहः स नाम्नातिग्राहेण गृहीतो वाचा हि नामान्यभिवदति ॥ ३ ॥ जिह्वा वै ग्रहः सरसेनाति ग्राहेण गृहीतो जिह्वया हि रसान्विजानाति ॥ ४ ॥ चक्षुर्वैग्रहः स रूपेणाति ग्राहेण गृहीतश्चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥ श्रोत्रं वै ग्रहः स शब्देनाति ग्राहेण गृहीतः श्रोत्रेण हि शब्दान् शृणोति ॥ ६ ॥ मनो वै ग्रहः स कामेनाति ग्राहेण गृहीतो मनसा हि कामान्कामयते ॥ ७ ॥

हस्तौ वै ग्रहः स कर्मणातिग्राहेण गृहीतो हस्ताभ्या ँ हि कर्म करोति ॥ ८ ॥ त्वग्वै ग्रहः स स्पर्शेनातिग्राहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥

वागिन्द्रियम् । नामवचनम् । यद्यदर्थं भवति तत्तेन वशीक्रियते यथा भोग्यं भोक्तृर्थमिति भोग्येन भोक्ता तथा च हि यतो वाचा वदत्यतो वाचो ग्रहत्वं नामार्था वागिति ध्वननेन नाम्ना गृहीतत्वं चेत्यर्थः एवमग्रेपि । ३ । ४ । ५ । ६ । कामो विषयः । ७ । ८ । ९ ।

सर्वनाशकस्याप्यग्नेर्जलमिवास्य बन्धस्य नाशकं किमिति पृच्छति याज्ञेति—

याज्ञवल्क्येति होवाच यदिद ँ सर्वं मृत्योरन्नं कास्वित्सा देवता यस्या मृत्युरन्नमित्यग्निर्वै मृत्युः सोपामन्नमप पुनर्मृत्युं जयति ॥ १० ॥

सर्वं जगन्मृत्योरन्नं मृत्युग्रस्तं ग्रहाति ग्रहरूपम्मृत्युवशमिति यावत् । यद्वशे स मृत्युः सा का देवता । न चानवस्थाभियामृत्योर्मृत्युरप्रसिद्धः य-

थाग्निः सर्वमृत्युरप्यपामन्नं तथा स्वस्य मृत्योश्च मृत्युरात्मज्ञानमिति प्रसिद्धेरिति भावः । तस्मादपजयाति पुनर्मृत्युं ज्ञानीमुच्यत इति यावत् ॥१०॥

मृत्युं जयतीति स्पष्टीकर्तुं प्रश्नमवतारयति याज्ञेति—

याज्ञवल्क्येतिहोवाच यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो३नेति नेति होवाच याज्ञवल्क्योत्रैव समवनीयन्ते स उच्छ्वयत्याध्माय त्याध्मातोमृतः शेते ॥११॥

यदा यं ज्ञानी मरणोन्मुखस्तदास्य देहात्प्राणाल्लिङ्गशरीरं निस्सरति न वा । न निस्सरति किन्त्वत्रैव देहे स्वकारणे लीयते । स स्थूल देहस्तूच्छ्वयत्यन्तर्गत वायुवेगेन पृथुत्वं यात्याध्मायति ब्राह्य वायुं चा कर्षति ततो वाह्य वायु पूर्णो निश्चेष्टो भवति। लिङ्गलयो मृत्यु जय इति भावः ॥ ११ ॥

न तत्वज्ञानेन किञ्चिद्बन्धजाते वशिष्यते यस्मादमुक्तिः प्रसज्येतेत्याह याज्ञेति—

याज्ञवल्क्येतिहोवाच यत्रा यं पुरुषो म्रियते किमेनं न जहातीति नामेत्यनन्तं वै

त्त्वज्ञानेन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ॥ १२ ॥

एनं मृतं ज्ञानिनं किं न जहाति न लीयते वशिष्यत इति यावत् । नाममात्रमित्युत्तरम् । यतो नामानन्तं नित्यम् । न वास्तवं नित्यं किन्तु यथा सर्वे देवा अमरा उच्यन्ते तथा सापेक्षम् । स तत्त्ववित्तु तेन सर्वकर्माग्निना तत्त्वज्ञानेन वा स्तवमेव नित्यं ब्रह्माख्यलोकमाप्नोति मुच्यत इति भावः ॥ १२ ॥

अज्ञस्य तु मरणेस्थूलदेहातिरिक्तं सर्वमवशिष्यते तत्र मुख्यो हेतुः कर्मेत्याह याज्ञेति—

याज्ञवल्क्येतिहोवाच यत्रास्य पुरुषस्य मृतस्याग्निं वा गप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवी ᳡ शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितं चरेतश्च निधीयते क्वायं तदा पुरुषो भवतीत्याहरसौम्य हस्तमार्तभागाऽऽवामेवैतस्य वेदिष्यावो न नावेतत्सजन इति । तौ होत्क्रम्य मन्त्रयांचक्राते

तौ ह यदूचतुः कर्म हैवतदूचतुरथ यत्प्रशश‍ृ्सतुः कर्म हैव तत्प्रशशृ्सतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति ततो ह जारत्कारव आर्तभाग उपरराम ॥ १३ ॥

मृतस्यास्य प्राणिन इन्द्रियाणि स्व स्व देवतासु लीयन्ते देवताधिष्ठतानि न भवन्ति तथा देहगत हृदयाकाशाद्याकाशाद्यं शाश्वाकाशादिषु लीयन्ते यदा तदा यं जीवः क कुत्राश्रये वर्तते एतत्पृष्टं वस्तु सजने देशेत्र नावयोर्निर्णेतुं शक्यं रहसि तु आवामेवास्य निर्णयं करिष्यावोतो हे सौम्य स्वहस्तं देह्युत्तिष्ठेति यावत् एवं तौ मुनी तत उत्थाय रहसि कालकर्मादिषु प्राणिनां मुख्याश्रयनिर्णयं चक्राते कर्मैवाश्रयमूचतुः प्रशंसतुश्चेति यावत् तस्य च पुण्यपापोभयविधकर्मणः क्रमेण पुन्यं पापं कर्महेतुर्नान्यादिति जायत एव पुनः पुनरज्ञो न मुच्यत इति भावः ॥ १३ ॥

इति द्वितीयम् ।

कर्ममूलोयं बन्ध इति कर्मनाशान्मुक्तिरित्युक्तम् तत्रोत्कृष्टतमपुण्यकर्मभिरेव मोक्षोपिस्यादलं त-

त्वज्ञानेनेत्याशङ्कानिवृत्तये तादृक्ककर्मभिर्यत्फलं त-
त्परासाख्यायिकामवतारयत्यथेति ।

अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ या-
ज्ञवल्क्येति होवाच । मद्रेषु चरकाः पर्यऽव्र-
जामते पतञ्चलस्य काप्यस्य गृहानैम-
तस्याऽऽसीद्दुहिता गन्धर्वगृहीतातमपृ-
च्छाम कोसीति सो ब्रवीत्सुधन्वाऽऽङ्गिरस
इति तं यदा लोकानामन्तानऽपृच्छामाऽथै-
नमऽब्रूम क्क पारिक्षिता अभवन्निति क्क पारिक्षि-
ताऽभवन्स त्वा पृच्छामि याज्ञवल्क्य क्क पारि-
ता अभवान्निति ॥ १ ॥

लह्यसुतो लाह्यस्तत्सुतो लाह्यानिर्भुज्युः । च-
रका अध्ययनार्थव्रतं चरन्तो वयं कदाचिन्मद्रदे-
शेषु पर्यटनं कृतवन्तोथ कापिगोत्रपतञ्चलस्य गृ-
हानगच्छाम ततः पतञ्चलकन्यापतिः पृष्टोब्रवी-
त्सुधन्वा गन्धर्व आङ्गिरसगोत्रोस्मीति ततो लोका-
नामन्तान्पृष्ट्वा पारिक्षिताः कुत्रागच्छन्निति पृष्ट-
वन्तः अतः सः गन्धर्वाल्लब्धतज्ज्ञानो हं त्वां
पृच्छामि याज्ञवल्क्य वीप्सादरार्था प्रश्नस्य ॥ १ ॥

उत्तरमाह सहेति—

सहोवाचोवाच वैसोऽगच्छन्वैते तद्य-त्राश्वमेधयाजिनो गच्छन्तीति क्वन्वश्वमेध-याजिनो गच्छन्तीति द्वात्रि९ शतं वै देवरथा-ह्न्यान्ययं लोकस्त९ समन्तं पृथिवीद्विस्ता वत्पर्यैतिता९ समन्तं पृथिवीं द्विस्तावत्समु-द्रः पर्यैति तद्यावतीक्षुरस्य धारायावद्वाम-क्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान्वायुरात्म-निधित्वातत्रागमयद्यत्राश्वमेधयाजिनोऽभव-न्नित्येवमिववै स वायुमेव प्रशश९ स तस्मा-द्वायुरेवव्यष्टिर्वायुः समष्टिः अपपुनर्मृत्यु जयति य एवं वेद ततोह भुज्युर्लाह्याय निरुपरराम ॥ २ ॥

ते पारिक्षिताः तत्त्रागच्छन्यत्राश्वमेधकृतो-यान्तीति स गन्धर्वस्तुभ्यमुवाचेति वै स्मर्यतेम-येति स याज्ञवल्क्य उवाच परिक्षीयते येन पापं स परिक्षिदश्वमेधोश्वमेधयाजिन एव च पारि-क्षिता इति भावः । ततः क्वन्वित्यादि प्रश्नेउत्तर-

माह अहोरात्रकालेन रविरथगत्यापरिच्छिन्नो देशो देवरथाह्न्यम् द्वात्रिंशद्देवरथाह्न्यानिचलोकालोकगिरिवेष्टितोयं लोकः लोकस्य च समन्ततो लोकाद्द्विगुणा पृथिवी ब्रह्माण्डाधः कपालमिति यावत् । पृथिव्याश्च समन्ततः पृथिवीद्विगुणः समुद्रो ब्रह्माण्डाधारभूतः । तत्तत्र ब्रह्माण्डेन्तरेण-मध्येण्डकपालयोः क्षुरधारामक्षिकापक्षतुल्यसूक्ष्मो य आकाशश्छिद्रं तेन प्राप्तान् तान् पारिक्षितानिन्द्रोश्वमेधेचितोग्निः पक्षीभूत्वा वायवे ददात्स वायुः स्वस्मिन्धृत्वा वायुभूतान् तान् तत्र प्रापयद्यत्राण्डाद्बहिः पूर्वेपारिक्षिता अगच्छन् ब्रह्माण्डाद्बहिस्सदागति रेतावत्कर्म गतिरिति भावः । इतिः समाप्तौ । अथ श्रुतिर्ब्रूते । एकमेव स गन्धर्वोपि भुज्यवेवायुमेव प्रशशंस तस्मात्सर्वरूपं वायुं यो जानाति स वय्वात्मा सन् न पुनर्जायते ॥ २ ॥

इति तृतीयम् ।

न कर्मणात्मावगतिरिति सूचयित्वात्मावगतये आहाथेति—

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्यसर्वान्तरो यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानीति स त आत्मा सर्वान्तरो यो व्यानेन व्यानीति स त आत्मा सर्वान्तरो य उदानेनोदानिति सतआत्मासर्वान्तर एष त आत्मा सर्वान्तरः ॥ १ ॥

अपरोक्षं तु घटाद्यपि परं तु न साक्षात् किंतु द्रष्टृद्वाराब्रह्मापरिच्छिन्नचेतनं तु द्रष्ट्रादीनां स्वरूपमेवेति साक्षादपरोक्षम् तथा च यत्स्वतोपरोक्षं ब्रह्म सत् सर्वबाधेन लभ्यत्वात्सर्वस्याभ्यन्तर आत्मा यस्तं मह्यं कथयेति चक्रापत्योषस्तप्रश्नः । ततो याज्ञवल्क्योक्तिः । कतमो हे याज्ञवल्क्य सर्वान्तर इति पुनरुषस्तोक्तिः तत उत्तरम् । चेतनेनाचेतनरथादिचेष्टादर्शनात् यः प्राणादिचेष्टां कारयति स आत्मेत्युत्तरार्थः ॥ १ ॥

न लिङ्गं पृच्छामि किंतु शृङ्गे गृहीत्वेयं गौरिति व-

द्ब्रह्मात्मानं ब्रूहीति तथा वस्तुस्वभावात्तथा दर्शयितुमशक्यं वस्तुलिङ्गेनैव बोधनीयमित्याशयके पुनः प्रश्नोत्तरे आह स इति—

सहोवाचोषस्तश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्यपदिष्टं भवति यदेव साक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येषत आत्मा सर्वान्तरः कतमो याज्ञवल्क्यसर्वान्तरः। न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारꣳ शृणुयानमतेर्मन्तारं मन्वीथानविज्ञातेर्विज्ञातारं विजानियाः। एष त आत्मा सर्वान्तरोतोन्यदार्तम् ततो होषस्तश्चाक्रायण उपरराम ॥ २ ॥

यथा दर्शयामीति प्रतिज्ञायकश्चिद्विरुद्धं ब्रूयादेतल्लक्षणायाऽसौगौरिति एवमेवैष इति प्रतिज्ञाये तव्यः प्राणेनात्यादिव्यपदिष्टं विरुद्धं वचनं तवास्ति तस्माद्व्यक्तं पुनर्व्याचक्ष्वेति प्रश्नः। ततः सर्वान्तर इत्युक्ते कतम इति प्रश्नः तदुत्तरं तु यथा रव्यादिप्रकाशः ज्ञानेन प्रकाश्यते ज्ञानप्रकाशने त्वसमर्थः एवं दृष्टेश्चाक्षुषवृत्तिज्ञानस्य

द्रष्टारं साक्षिणं चिदात्मानं प्रकाशितुं दृष्टिरसमर्थेति न तं त्वं पश्येः एवं श्रावणमानसबौद्धादिवृत्तिष्वप्यूह्यमसामर्थ्यमतो दर्शयितुमशक्यत्वाल्लिङ्गगम्य एवात्मादन्यत्तु सर्वमार्तमनित्यमिति ॥ २ ॥

इति चतुर्थम् ।

अथ षडूर्मिरहितत्वलिङ्गेनात्मविदेषणाः संन्यस्य भिक्षावृत्तिपारमहंस्यमाश्रयोदित्याहाथेति—

अथ हैनं कहोलः कौषितकेयः पप्रच्छ याज्ञवल्क्येति होवाच य देवसाक्षादपराक्षाद् ब्रह्म य आत्मा सर्वान्तरस्तं मेव्याचक्ष्वेत्येषत आत्मा सर्वान्तरः । कतमो याज्ञवल्क्य सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति । एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथभिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणो भेह्येतेएषणे एव भवतः तस्माद् ब्राह्मणः पाडित्यं निर्विद्यवा-

ल्येन तिष्ठासेत् । बाल्यं च पाण्डित्यं च निर्विद्याथमुनिरमौनं च मौनं च निर्विद्याथब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेने दृशएवातोन्यदार्तं ततोह कहोलः कौषीतकेय उपरराम ॥ १ ॥

कुषीतक सुतकहोलप्रश्नः तदुत्तरं पुनः प्रश्नश्चोषस्त ब्राह्मणवत् । अशनायावुभुक्षातदादिभिरसंस्पृष्टो यस्स आत्मातं ज्ञात्वालब्ध ब्राह्मण संज्ञाः मुमुक्षवः पुत्र धन लोक कामनास्त्यक्त्वाभिक्षाटनं चक्रुः । वित्तं द्विविधं दैवं मानुषं च दैवमुपासनामानुषं तु पुत्र पशुरजतादि तथा च न पुत्रवित्तैषणेभिन्ने अथ पुत्रेणायं परश्चलोको यथा जप्यस्तमान्यैरपि वित्तैरिति लोकार्थैव वित्तैषणा तथा च न लोकैषणापि भिन्नावित्तैषणातः एवं चैषणैकत्वेपि लोकः साध्योवित्तं साधनमिति भेदादुभे एवैषणेवस्तुतो भवत इति ज्ञेयम् अथ यतः पुर्वं चक्रु स्तस्माद्यापि ब्राह्मणो ब्रह्म विद्ब्रह्मज्ञानं निर्वशेषं कृत्वा ब्रह्मज्ञानरूपबलभावेन स्थातुमिच्छेत् द्वयं च पूर्णं कृत्वा मुनिर्भवेत् अमौनं बाल्यपाण्डित्यं मौनं चात्ममननाऽना-

त्माऽननुसन्धानं च पूर्णं कृत्वा हि यथार्थो ब्राह्मण संज्ञो भवति । स च ब्राह्मणो यावज्जीवं केनाऽऽच रणेन स्यादसतावेत्याशयः अनीच्छयारब्धतोयेन केनापिस्यात्परं त्वीदृश एव नाऽब्राह्मणः कदापि यतो ब्रह्मात्मनो ब्रह्मणादन्यदार्तं विनाशिब्राह्मणत्वं तु नित्यैकरसमिति भावः ॥ १ ॥

इति पञ्चमम् ।

अथात्मनः सर्वान्तरत्वं निर्णेतुं ब्राह्मण त्रयमाहाथेति—

अथ हैनं गार्गीवाचक्नवीपप्रच्छ याज्ञवल्क्येतिहोवाच यदिद ँ सर्वमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु खलु वायु रोतश्च प्रोतश्चेत्यन्तरिक्षलोकेषु गार्गीति कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्वलोका ओताश्चप्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोकाः ओताश्च प्रोताश्चेति चन्द्रलोकेषु

गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्चप्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति स होवाच गार्गि माति प्राक्षीर्मा ते मूर्द्धा व्यपप्तदनतिप्रश्न्यां वै देवता मति पृच्छसि गार्गि माऽति प्राक्षीरिति ततो ह गार्गी वा चक्नव्युपरराम ॥ १ ॥

वचक्नुकन्या गार्गी काचिद्ब्रह्मज्ञा । इदं पार्थिवम् । ओतं दीर्घपटतन्तुवत्प्रोतं तिर्यक्तन्तुवदिति भाष्यम् । कारणे कार्यमोतं प्रोतं भवतीति कार्याधारः कारणमिति पूर्वं पूर्वमान्तरं परं परं बाह्य-

मिति च कारणमान्तरम् एवञ्च परमकारणमात्मा सर्वान्तर इत्येतद्ब्राह्मण तात्पर्यम् । आप्य पार्थिवाभ्यां पृथगग्ने रनुपलम्भादपामग्नौ नोक्तमोतत्वादि । अन्तरिक्षलोकेष्विति अन्तरिक्षेऽयोम्नीत्यर्थः । लोकोक्तिर्भुवर्लोके एवाकाशत्वस्याऽऽपाततो मनुष्येषु प्रसिद्धेः गार्गी तु लोकार्थमेव परीक्षार्थमङ्गीकृत्य पृच्छति स्मान्तरिक्षलोका इति । पाञ्चभौतिकत्वेन सर्वत्रलोके वहुवचनम् । लोकेषु कार्यकारणभावाभावेप्यऽधरोत्तर भावेन स्थिते रोतत्वादि प्रश्नोत्तरे विजिगीषया प्रौढ्या कौतुकेन वा । अथागमोक्तोर्थस्तर्केण निश्चयो न दुष्यः आगमे च परमकारणमात्मोक्तः इदमपि क्वचिदोतं प्रोतं च कार्यत्वादेः पृथिव्यादि वदित्यादि तर्केण गार्ग्या एवं प्रश्नस्य तु न कदापि विरामः स्यादिति क्रुद्धः स याज्ञवल्क्यउवाच हे गार्गि अति प्रश्नं माकुरु कुर्वन्त्याश्चते शिरोमापतेत् । अतिप्रश्नत्वं निरूपयति वेदानुसारिप्रश्नमातिक्रान्तः तर्क प्रधानो गार्ग्याः प्रश्नोयस्या आत्म देवतायाः सातिप्रश्न्या तद्भिन्ना वेदानुसारिप्रश्न

विषयोऽनति प्रश्न्या तां तर्केण पृच्छस्य तस्ते प्र-
श्नोति प्रश्नस्तं मा कुर्वित्यर्थः ॥ १ ॥

इति षष्ठम् ।

अथ स्त्रक् पुष्पाणीव ब्रह्मादिलोकायदवलम्बेन
स्थिताः सन्ति तत्सूत्रं तथा सर्वेषामन्तर्गतं शक्तेः
प्रेरकं च वक्तुमाहाप्येति ।

अथ हैनमुद्दालक आरुणिः पप्रच्छ या-
ज्ञवल्क्येतिहोवाच मद्रेष्ववसामपतञ्चलस्य
काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद्भा-
र्या गन्धर्व गृहीता तमपृच्छाम कोसीति सो
ब्रवीत्कवन्ध आथर्वण इति सो ब्रवीत्पत-
ञ्चलं काप्यं याज्ञिका९श्च वेत्थनु त्वं काप्य
तत्सूत्रं येना यंचलोकः परश्चलोकः सर्वाणि
च भूतानि संदृब्धानि भवन्तीति सो ब्रवी-
त्पतञ्चलः काप्योनाहं तद्भगवन्वेदेति सो ब्र-
वीत्पतञ्चलं काप्यं याज्ञिका९श्च वेत्थनु
त्वं काप्यतमन्तर्यामिणं यं इमं च लोकं
परं च लोक९सर्वाणि च भूतानि योन्तरो-

यम्भयतीति सो ब्रवीत्पतञ्चलः काप्योनाहं तं भगवन्वेदेति सो ब्रवीत्पतञ्चलं काप्यं याज्ञिकाᳪश्च यो वै तत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणमिति स ब्रह्मवित्सलोकवित्स देववित्स वेदवित्स भूतवित् स आत्मवित्स सर्वविदिति तेभ्यो ब्रवीत्तद हं वेद तच्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वाᳪस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धाते विपतिष्यतीति वेद वा अहं गौतम तत्सूत्रं तं चान्तर्यामिणमिति यो वा इदं कश्चिद्ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥ १ ॥

आरुणिररुण पुत्रः । काप्यः कपिगोत्रः । यज्ञं यज्ञशास्त्रम् । तस्य पतञ्चलस्य । तं गन्धर्वम् । सो थर्व पुत्रः कबन्धसंज्ञा गन्धर्वः । याज्ञिका नस्मान् । दृब्धानि ग्रथितानि । अन्तरः सन् यमयाति स्व स्व व्यापारे प्रवर्तयति । इति एव मुक्त्का तेभ्यः स पतञ्चलेभ्योऽस्मभ्यमब्रवीत्सूत्रमन्तर्यामिणं चेति शेषः । तत्तस्माद्गन्धर्वोक्तं वा सूत्रान्तर्यामिरूपमहं जानामि त्वं चेन्न जानासि ब्रह्मज्ञानां गाश्चन

यसि तर्हि शिरः पतिष्यति । जानामि हे गौतम गोत्रोद्दालक । वेद वेदेति इदं वचनमात्रं यदि कश्चिद्ब्रूयात्तेन किम् यथावेत्सिं तथा वद ॥१॥

सूत्रं वक्तुमाह स हेति—

स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वै गौतम सूत्रेणायं चलोकः परश्चलोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति तस्माद्वै गौतम पुरुषं प्रेतमाहुर्व्यस्रꣳसिषतास्याङ्गानीति वायुना हि गौतम सूत्रेण संदृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ॥ २ ॥

स याज्ञवल्क्यः । हि यतः संदृब्धानि विधृतानि भवन्ति तस्मात्सूत्रच्छेदे तत्प्रोतानीवास्य प्रेतस्याङ्गानि व्यस्रंसिषत पतितानि । एतत्सूत्रं तु यथोक्तं त्वयैवमेवाथान्तर्यामिणं ब्रूहि ॥२॥

तमाह य इति—

यः पृथिव्यां तिष्ठन् पृथिव्याअन्तरो यं पृथिवी न वेदयस्य पृथिवी शरीरं यः पृ-

थिवीमन्तरोयमयत्येष तआत्मान्तर्याम्य-
मृतः ॥ ३ ॥

भूगत प्राण्युदासायान्तर इति । पृथिव्य-
धिष्ठा तृ देवताव्युदासायन वेदेति । पृथिव्यधिष्ठा
तृ देव देहेन्द्रियाद्येव यस्य शरीरेन्द्रियादि ईदृशो
योन्तः प्रेरक एष ते प्रष्टुः सर्वस्येति यावत् आ-
त्मा स एवान्तर्याम्य विनाशी । स्व स्वाधिष्ठा तृ
देव प्रेरिताः पृथिव्यादयोह्य विशीर्णतयास्थित्यादौ
स्व स्वव्यापारे प्रवर्तन्ते अधिष्ठा तृषु प्रेरकता च
चिदात्म संवन्धादिति भावोन्तर्यामि ब्राह्मणस्य॥३॥
अन्तरर्यामयति प्रसिद्ध इति तं वहुषु दर्शमिष्य
न्पृथिव्यामि वा न्यत्राप्येकादशदेवेषुतं दर्शयति
योप्स्वित्यादिना—

योप्सुतिष्ठन्नद्योन्तरो य मापोन विदुर्य-
स्यापः शरीरं योपोन्तरो य मयत्येषत आ-
त्मान्तरर्याम्य मृतः ॥ ४ ॥ योग्नौतिष्ठन्न-
ग्नेरन्तरोय मग्निर्नवेदस्याग्निः शरीरं योग्नि-
मन्तरोय मयत्येषत आत्मान्तर्याम्य मृतः॥
५ ॥ योन्तरिक्षेतिष्ठन्नन्तरिक्षादन्तरो य

मन्तरिक्षं न वेद यस्यान्तरिक्ष ँ शरीरं यो-
न्तरिक्षमन्तरो यमयत्येष त आत्मान्तर्याम्य-
मृतः ॥ ६ ॥ यो वायौ तिष्ठन्वायोरन्तरोयं
वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो
यमयत्येष त आत्मान्तर्याम्यमृतः ॥ ७ ॥
यो दिवि तिष्ठन्दिवोन्तरोयं द्यौर्नवेद यस्य द्यौः
शरीरं यो दिवमन्तरो यमयत्येष त आत्मान्त-
र्याम्यमृतः ॥ ८ ॥ य आदित्ये तिष्ठन्ना-
दित्यादन्तरो यमादित्योन वेद यस्यादित्यः
शरीरं य आदित्यमन्तरोयंमयत्येष त आ-
त्मान्तर्याम्यमृतः ॥ ९ ॥ यो दिक्षु तिष्ठन्दि-
ग्भ्योन्तरोयं दिशो न विदुर्यस्य दिशः श-
रीरं यो दिशोन्तरो यमयत्येष त आत्मान्त-
र्याम्यमृतः ॥ १० ॥ यश्चन्द्रतारकेतिष्ठ ँ
श्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद
यस्य चन्द्रतारक ँ शरीरं यश्चन्द्रतारकम-
न्तरोयमयत्येष त आत्मान्तर्याम्यमृतः॥ ११॥
य आकाशे तिष्ठन्नाकाशादन्तरोयमाकाशो

न वेद यस्याकाशः शरीरं य आकाशमन्तरोयमयत्येष त आत्मान्तर्याम्यमृतः॥१२॥ यस्तमसि तिष्ठᳫँस्तमसोन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोन्तरोयमयत्येष त आत्मान्तर्याम्यमृतः ॥ १३ ॥ यस्तेजसि तिष्ठᳫँस्तेजसोन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोन्तरोयमयत्येष त आत्मान्तर्याम्यमृत इत्यधिदैवतमथाधिभूतम् ॥ १४ ॥

प्रथमपर्यायवदेषामर्थः ।४।५।६।७।८।९।।१०।११।१२।१३।१४।

अथ ब्रह्मादिस्तम्बपर्यन्त भूतेषु दर्शयत्यन्तर्यामिणं य इति—

यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योन्तरोयᳫँ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरोयमयत्येष त आत्मान्तर्याम्यमृत इत्यधिभूतमथाध्यात्मम् ॥ १५ ॥

पूर्ववदर्थः ॥ १५ ॥

अथाध्यात्मप्राणाद्यष्ट स्वन्तर्यामिणमाह य इति—

यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येषत आत्मान्तर्याम्यमृतः ॥ १६ ॥ यो वाचि तिष्ठन्वाचोन्तरो यं वाङ् न वेद यस्य वाक् शरीरं यो वाचमन्तरोयमयत्येषत आत्मान्तर्याम्यमृतः ॥१७॥ यश्चक्षुषि तिष्ठꣳश्चक्षुषोन्तरो यं चक्षुर्नवेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरोयमयत्येषत आत्मान्तर्याम्यमृतः ॥ १८ ॥ यः श्रोत्रेतिष्ठन् श्रोत्रादन्तरोयꣳ श्रोत्रं न वेद यस्य श्रोत्रꣳ शरीरं यः श्रोत्रमन्तरोयमयत्येषत आत्मान्तर्याम्यमृतः ॥ १९ ॥ यो मनसि तिष्ठन् मनसोन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोन्तरोयमयत्येषत आत्मान्तर्याम्यमृतः ॥ २० ॥ यस्त्वचि तिष्ठꣳस्त्वचोन्तरो यं त्वङ् न वेद यस्य त्वक् शरीरं यस्त्वचमन्तरोयमयत्येषत आत्मान्तर्याम्यमृतः॥२१॥

यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेदयस्य विज्ञान ँ शरीरं यो विज्ञानमन्तरोमयत्येषत आत्मान्तर्याम्यमृतः २२
यो रेतसि तिष्ठन् रेतसोन्तरोय ँ रेतोनवेद यस्य रेतः शरीरं यो रेतोन्तरोयमयत्येषत आत्मान्तर्याम्यमृतोऽदृष्टोद्रष्टाश्रुतः श्रोताऽमतो मन्ताऽविज्ञातो विज्ञातानान्योऽनोस्ति द्रष्टानान्योतोस्ति श्रोतानान्योतोस्ति मन्तानान्योतोस्ति विज्ञातैषत आत्मान्तर्याम्यमृतोऽतोऽन्यदार्तं ततो होद्दालक आरुणिरुपरराम ॥ २३ ॥

अत्रापि पूर्ववदर्थः।१६।१७।१८।१९।२०।२१।२२। पृथिवीदेवतादयः कुतोनात्मस्थमन्तर्यामिणं जानन्तीत्यत आहादृष्ट इति । असङ्गस्वभावत्वेन चक्षुः श्रोत्रमनो बुद्ध्यविषयोपि यश्चक्षुरादिषु तादात्म्य मापन्नो द्रष्ट्रादिः किंच नित्यशुद्धसंविद्रूपान्तर्याम्य भावे जगदान्ध्य प्रसङ्गेन सर्वव्यवहारोपप्लवाद्योन्तर्याम्येव द्रष्ट्रादिर्नान्यः अन्यत् त्वार्त्त विनाश्येव सोन्तर्याम्येव मुख्यआत्मेत्यर्थः

अन्तर्यामिता तु प्रेरकता स्वसत्तामात्रेण यथा सूर्यस्य यद्वान्य सत्तास्फूर्ति प्रदत्वम् यथा सर्पाद्यधिष्ठानरज्ज्वाः ॥ २३ ॥ इति सप्तमम् ।

अथ सर्वान्तरनिरुपाधिक ब्रह्मवक्तुं पुनर्गार्गीं संवादयत्यथेति—

अथ हवाचक्नव्युवाच ब्राह्मणा भगवन्तोहन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि [illegible] चेन्मेवक्ष्यति न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति पृच्छ गार्गीति ॥ १ ॥

भो ब्राह्मणा हन्ते दानीम् । युष्माकं मध्ये कश्चित्कोपीमं याज्ञवल्क्यं ब्रह्मोद्यं ब्रह्मवदनं प्रतिनजेष्यतीत्युवाच गार्गी । पृच्छ गार्गीति ब्राह्मणा उचुः ॥ १ ॥

साहोवाचाहं वैत्वा याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ वाणवन्तौ सपत्नाति व्याधिनौ हस्तेकृत्वोपोत्तिष्ठे देव मेवाहं त्वां द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति ॥ २ ॥

काशिविदेहदेशसंभवः शूरपुत्रो यथाऽवतारितज्य मारोपि तज्यं कृत्वा वाणः शराग्रदत्तवंशखण्डः तद्युतौ शत्रवति पीड़ाकरौ शरौ गृहीत्वा-समीपे उत्तिष्ठेत्तथा शररूप श्चाभ्यामहमुत्थितवत्यस्मीति तौ प्रश्नौ ब्रूहीति सा पृच्छेति याज्ञवल्क्यउवाच ॥ २ ॥

सा होवाच य दूर्ध्वं याज्ञवल्क्यदिवो-यद्वाक् पृथिव्या यदन्तराद्यावा पृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्या चक्षते कस्मिंस्तदोतं च प्रोतं चेति ॥ ३ ॥

दिवऊर्ध्वाण्डकापालाद्य दूर्ध्वं पृथिव्या अधोण्डकपालाद्यदधः यच्चाऽन्तरामध्ये कपालयोरिमे-कपाले च भूतादि शब्दोक्तं च यत्तत्सर्वं द्वैतं कस्मिन्कारणेऽस्ति ॥ ३ ॥

स होवाच यदूर्ध्वं गार्गिदिवो यदवाक् पृथिव्या यदन्तराद्यावा पृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्या चक्षत आकाशे तदोतं च प्रोतं चेति ॥ ४ ॥

अव्याकृताकाशे वर्तते त्रिषु कालेष्वित्यर्थ ॥४॥

सा होवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवोचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति ॥ ५ ॥

यस्त्वं ममैतं प्रश्नमवोचस्तस्मै नमोऽथ द्वितीयप्रश्नाय मनः सावधानं कुर्विति सा पृच्छेति स उवाच ॥ ५ ॥

द्वितीयप्रश्नस्याद्यप्रश्नोत्तरमूलकत्वादुक्ते एव प्रश्नोत्तरे दृढीकृत्यापरप्रश्नमाह द्वाभ्याम्—

सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिꣳस्तदोतं च प्रोतं चेति ॥ ६ ॥ स होवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति ॥ ७ ॥

उक्तोऽभिव्यक्तश्चार्थः ।६।७।

यत्राकाशं तदाकाशादप्यति दुर्ज्ञेयं वागाद्यवि-

षयत्वादतोऽनुक्तौ पराजयोऽथ वक्ष्यति चेद्
वाच्यस्य वक्तृत्वात्पराजय इत्युभयथा-
जिगीषन्ती मभिप्रेत्यान्य वचने
नोत्तरयति स इति—

स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्य स्थूलमनणव ह्रस्वमदीर्घम लोहितम स्नेहम च्छायम तमोऽवाय्वनाकाशम सङ्गमरसमगन्धम चक्षुष्कम श्रोत्रम वागमनोऽतेजस्कम प्राणम मुखम मात्रमनन्तरम वाह्यं न त दश्नाति किंचन न तदश्नाति कश्चन ॥ ८ ॥

हे गार्गि यदा काशकारणं त्वया पृष्टं तदविनाशित्वेनैतदक्षरं ब्रह्मविदो वदन्ति । एव मुक्त्या च स्वस्य तज्ज्ञत्वम वाच्या वक्तृत्वं च सूचितम् । किं तदक्षरमित्याकाङ्क्षायां, वागगोचरत्वात्प्रतिषेध मुखेनाहास्थूलमित्यादि । स्नेहनं जलगुणः । मीयते नेनेति मात्रं मानम् । प्रथमं तत्कर्त्परं कर्मभोक्तृ भोग्यं चेत्यर्थः । स्थूलादि भोग्यान्त सर्वविशेषणशून्य मक्षरमित्यर्थः ॥ ८ ॥

लोकेनुशासननियन्त्रिता नामेव नियतकार्यकारित्वदर्शनेन सूर्यादीनां नियतोदयास्तादि कार्यकारित्वेनाप्यनुशासनपूर्वकेणैव भवितव्यमित्यक्षरसिद्धये आहैतस्येति—

एतस्य वा अक्षरस्य प्रशासने गार्गि-सूर्याचन्द्रमसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गिनिमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्त्येतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योन्यायां यां च दिशमन्वेतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रश९सन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः ॥ ९ ॥

प्रशासने प्रभावेभिप्राये विधृतौ तदनुकूलव्यापारौ। निमेषाद्या इत्येते कालावयवाः। श्वेतेभ्यो हिमवदादिभ्यः प्राच्यः पूर्वदिग्गताः प्रतीच्यः प-

श्चिमदिग्गताः यां यां दक्षिणामुत्तरां च दिशमनुगताः स्यन्दन्ते वहन्ति । ददतो दानिनः पुरुषान् । तत्तद्दानफलानुशासनानु सन्धानादेव प्रशंसन्ति फलदाक्षराभावे तु विफलां धनहानिं कुर्वतो न प्रशंसोचितेति भावः । तथा देवा यजमानमनुगतास्तदधीनाः पितरस्तु प्रकृति विकृति भावेन रहितोदर्वीहोमस्तदधीनाः समर्थानां तृप्तानामीदृगधीनतापि नान्यानुशासन मन्तरेण संभवन्तीति भावः ॥ ९ ॥

एवमीश्वरं निरूप्यतज्ज्ञानफलमाह य इति—

यो वा एतदक्षरं गार्ग्यविदित्वास्मि ए लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तव देवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति सकृपणोथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात् प्रैति स ब्राह्मणः ॥ १० ॥

अस्याज्ञस्य तत्सर्वमन्तवद्विनाश्येव । कृपणः कर्मवशः सदा । ब्राह्मणो ब्रह्मवित्सदैकरसा द्वितीयब्रह्मस्वरूपः ॥ १० ॥

चितोनुशासनमपि वस्तुतोऽचित्सत्तास्फूर्तिप्र-
दत्वमेवेत्याह तद्वै इति—

तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्ट्रश्रुतं श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृनान्यदतोस्ति द्रष्टृनान्यदतोस्ति श्रोतृनान्यदतोस्ति मन्तृनान्यदतोस्ति विज्ञातृ तस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ॥११॥

असङ्गत्वाददृष्टत्वादि सर्वात्मत्वेन चक्षुरादि द्वाराद्द्रष्टृत्वादि च ज्ञेयम् ॥ ११ ॥

उक्तार्थदार्ढ्याय गार्गीमुपरमयति सा हेति—

सा होवाच ब्राह्मणा भगवन्तस्तदेव बहुमन्येध्वं यदस्मान्नमस्कारमात्रेण मुच्येध्वम् न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततोहवाचक्नव्युपरराम ॥ १२ ॥

भो ब्राह्मणा भगवन्तोपि यूयं नमस्कारमात्रेण प्रसादिताच्छापसमर्थादस्माद्याज्ञवल्क्यात्त्वेषां मुक्तिर्यत्तदेव बहुलाभं मन्यध्वं न जयम् यतो न जातु कदापि कोपि युष्माकं मध्ये ब्रह्मनिरूपणं प्रतीमं याज्ञवल्क्यं जेष्यति ॥ १२ ॥

इत्यष्टमम् ।

अनन्तरं ब्राह्मणयोरन्तर्याम्यक्षराख्ये ब्रह्मप्रोक्ते तयोर्ब्रह्मणश्च न भेदः नान्योतोऽस्ति द्रष्टेत्यादिना चिदन्तरप्रतिषेधादस्थूलमित्यादिना निरूपाधित्व निरूपणाच्चेति प्रकृतब्रह्मण एवान्तर्यामिणः परोक्षत्वापरोक्षत्वे नियन्तव्य देवतासंबन्धिकिंचिद्दर्शनेन वर्णयितुं प्रकरणान्तरमवतारयत्यथेति ।

अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति स हैतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रिꣳशदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमितिहोवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ १ ॥

शकलसुतो विदग्धः । निवित्संख्याशब्दः । एतया वक्ष्यमाणया प्रतिपेदे उत्तरं ददौ वैश्वदेवस्य मन्त्रे निविदि संख्याशब्द यावन्तस्तावन्त इति । निविदमाह त्रयश्चेत्यादि । त्रयः त्रीणि च सहस्राणि षडुत्तर त्रिशताधिकत्रिसहस्रदेवा इति तदर्थः । ओमित्यङ्गीकार वचनं ह स्फुटमुवाच विदग्धः । एवमग्रेऽल्पसंख्याप्रश्नोत्तरं ज्ञेयं । अध्यर्धोऽर्धाधिक एकः । संख्यय पृच्छति कतमे इति ॥१॥

सहोवाच महिमान एवैषामेते त्रयस्त्रिꣳशत्त्वेव देवा इति कतमे ते त्रयस्त्रिꣳशदित्यष्टौ वसव एकादशरुद्रा द्वादशादित्यास्त एकत्रिꣳशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशाविति ॥ २ ॥

एषां त्रयस्त्रिंशतां विभूतयोन्ये देवास्तु त्रयस्त्रिंशदेव। त्रयस्त्रिंशत्संख्यापूरणाविन्द्र प्रजापती २

कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदꣳसर्वꣳहितमिति तस्माद्वसव इति ॥ ३ ॥

हि यत इदं जगदेषु हितं धृतं वसतीति यावत् तस्माद्वसुसंज्ञाः ॥ ३ ॥

कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति ॥ ४ ॥

इन्द्रियाणि मनश्च तत्तत्रमरणकाले यद्यस्मात्संबन्धिनो रोदयन्ति तस्माद्रुद्रसंज्ञाः ॥ ४ ॥

कतम आदित्या इति द्वादश वै मासाः संवत्सरस्यैत आदित्याः एते हीद॰ सर्वमाददानायन्ति ते यदिद॰ सर्वमाददानायन्ति तस्मादादित्या इति ॥ ५ ॥

एते मासा हि यत इदं जगदाददाना गृह्णन्त आयुर्हरणेन संहरन्तो यन्ति परिवर्तन्ते तत आदित्या उच्यन्ते ॥ ५ ॥

कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुरित्यशनिरिति कतमो यज्ञ इति पशव इति ॥ ६ ॥

अशनिर्वज्रं बलमिति यावत् । यज्ञसाधनत्वात्पशुरपि यज्ञः ॥ ६ ॥

त्रयस्त्रिंशद्देवानुक्त्वा षड्देवा इति पक्षे आह कतम इति—

कतमे षडित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्चैते षडेते हीद ँ सर्व ँ षडिति ॥ ७ ॥

हि यतो यदिदमुक्तं वस्वादितत्सर्वमेते षडेव षट्स्वेवान्तर्भवत्यतः षडेव देवाः ॥ ७ ॥

कतमे ते त्रयो देवा इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ द्वौ देवा वित्यन्नं चैव प्राणश्चेति कतमोऽध्यर्ध इति योऽयं पवत इति ॥ ८ ॥

हि यत एषु लोकेषु । योऽयं पवते वायुरित्यर्थः ॥ ८ ॥

तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्ध इति यदस्मिन्निद ँ सर्वमध्यार्ध्नोत्तेनाध्यर्ध इति कतम एको देव इति प्राण इति स ब्रह्मत्यदित्याचक्षते ॥ ९ ॥

यद्यस्मादयं वायुरेक इव पवते तः कथं साद्धे इति तत्त्रोक्तार्थ आहुः शङ्कन्ते । यस्माद्वायौ सति सर्वमधिकामृद्धिं प्राप्नोति तेनाध्यर्ध इत्युच्यते । स प्राणो ब्रह्म । तद्ब्रह्मत्यदिति वदन्ति यतस्त्यज्यतेन दृश्यते ॥ ६ ॥

ब्रह्मणोष्टभेदानष्टकण्डिकाभिराह—

पृथिव्येव यस्यायतनमग्निर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायण ᳪ स वै वेदितास्यात् याज्ञवल्क्य वेद वा अहं तं पुरुष ᳪ सर्वस्यात्मनः परायणं यमात्थ य एवायं शारीरः पुरुषः स एव वदैव शाकल्य तस्य का देवतेत्यमृतमिति होवाच ॥ १० ॥

देहेन्द्रिय संघातो यस्याश्रयः तथाग्निर्लोकनसाधनमग्निना यः पश्यतीति यावत् मनश्चज्योतिः सर्वत्र तुन्नोधकं तं पुरुषं सर्वस्यात्मनः संघातस्य पितृजस्यास्थिमज्जाशुक्ररूपस्य परमाश्रयं यो जानीयात्स एव विद्वान् हे याज्ञवल्क्य नत्वमिति भावः। यं पुरुषं त्वमीदृशमात्थ त महं वेद वै ज़ानाम्येव ।

यः शरीरे भवो मातुरंशेन जातस्त्वङ्मांसरुधिराख्यः स एष पुरुषो हे शाकल्य यदत्रान्यद्वक्तव्यं तद्वद पृच्छ । तस्य शारीरस्य का देवता नामको हेतुरिति प्रश्नः अमृतमन्नरस इत्युत्तरम् । एवमग्रेऽप्यर्थो बोध्यः ॥ १० ॥

काम एव यस्या यतन ँ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायण ँ स वै वेदितास्यात् याज्ञवल्क्य वेद वा अहं तं पुरुष ँ सर्वस्यात्मनः परायणं यमात्थ य एवा यं काममयः पुरुषः स एष व दैव शाकल्य तस्य का देवतेति स्त्रिय इति होवाच ॥ ११ ॥

स्त्रीसंभोगेच्छा कामः स कामदेवस्यायतनं शरीरम् । हृदयं बुद्धिर्लोको ज्ञानसाधनम् । कामपूर्वकत्वाद्देहस्य कामः परायणम् । कामश्च स्त्रिया दीप्यत इति स्त्रीहेतुकः ॥ ११ ॥

रूपाण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायण ँ स वै वेदिता स्यात् याज्ञवल्क्य वेद वा अहं

तं पुरुषꣳसर्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष वदैव शाकल्य तस्य का देवतेति सत्यमिति होवाच ॥१२॥

रूपाणि शुक्लादीनि । भुवोऽभिमानी देवो यथा भुवस्तथाखिलरूपाभिमान्यादित्यस्थो देवः सर्वस्यात्मनो रूपस्य परायणमाश्रयः । आदित्यपुरुष हेतुः सत्यमीश्वरचक्षुः चक्षोः सूर्यो ऽजायतेत्युक्तेः ॥ १२ ॥

आकाश एव यस्यायतनꣳश्रोत्रं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳस वै वेदिता स्यात् याज्ञवल्क्यवेद वा अहं तं पुरुषꣳसर्वस्यात्मनः परायणं यमात्थ य एवायꣳ श्रौत्रः प्रातिश्रुत्कः पुरुषः स एषवदैवशाकल्य तस्य का देवतेति दिश इति होवाच ॥ १३ ॥

आकाशः कर्णविवरम् श्रोत्रमिन्द्रियम् श्रौत्रः श्रोत्रस्थितः प्रतिश्रवणवेलायां विशेषतः स्थितः श्रोत्रस्याश्रयः श्रोत्राभिमानी देवः पुरुषः तस्य हेतुर्बाह्यादिशः ॥ १३ ॥

तम एव यस्यायतनꣳहृदयं लोको मनो-ज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं छायामयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति मृत्युरिति होवाच ॥ १४ ॥

तमोन्धकारः। लोको ज्ञानसाधनम्। सर्वतमस आश्रयश्छायामयश्चिदाभासस्तस्य हेतुर्मृत्युश्चिदीश्वरः ॥ १४ ॥

रूपाण्येव यस्यायतनं चक्षुर्लोकोमनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वैवेदिता स्यात् याज्ञवल्क्य वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायमादर्शे पुरुषः स एष वदैव शाकल्यतस्य का देवतेत्यसुरिति होवाच ॥ १५ ॥

अत्र तु रूपाणि स्वच्छान्यादर्शादीनीति न पुनरुक्तिः प्रकाशकरूपाणामाश्रयः प्रतिबिंबरूपः

पुरुषस्तस्य हेतुरसुः प्राणः प्राणिस्पृष्टनिघृष्टादर्शादौ प्रतिविंबोदयात् ॥ १५ ॥

आप एव यस्यायतनꣳ हृदयं लोकोमनोज्योतिर्योवै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳस वै वेदिता स्यात् याज्ञवल्क्य वेद वा अहं तं पुरुषꣳसर्वस्यात्मनः परायणं यमात्थ य एवायमप्सुपुरुषः स एष वदैव शाकल्यतस्य का देवतेति वरुण इति होवाच ॥ १६ ॥

आपोजलानि सर्वजलेष्वहमित्याभिमानी देवः सर्वजलानामाश्रयः तस्य हेतुर्जलद्वारा वरुणः वरुणो हि जलानां कर्ता भर्ता च ॥ १६ ॥

रेत एव यस्यायतनꣳ हृदयं लोकोमनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ सवैवेदितास्यात् याज्ञवल्क्य वेद वा अहं तं पुरुषꣳसर्वस्यात्मनः परायणं यमात्थय एवायं पुत्रमयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच ॥ १७ ॥

रेतः शुक्रम् । स्वकारणाखिलशुक्रस्याश्रयः पुत्रदेहरूपः पुरुषः तस्य हेतुः प्रजापतिः पितेत्यर्थः ॥ १७ ॥

उपासनार्थैकल्पितानष्टभेदानभिधाय कार्यकारणाभावेनैकतां गतं भेदान्तरं वाचयितुमाह शाकल्येति—

शाकल्येति होवाच याज्ञल्क्यः त्वाᳫं स्विदि मे ब्राह्मणा अङ्गारावक्षयणमक्रता३ इति ॥ १८ ॥

हे शाकल्य इति संबोध्य स्विद्वितर्के इमे ब्राह्मणाः स्वयं भीतास्त्वामङ्गारस्याश्रयं मरणोन्मुखं चक्रुरित्युवाच । मातिपृच्छेति भावः ॥ १८ ॥

याज्ञवल्क्येति होवाच शाकल्योयादिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्मविद्वानिति दिशोवेद स देवाः स प्रतिष्ठा इति यद्दिशोवेत्थ स देवाः स प्रतिष्ठाः ॥ १९ ॥

हे याज्ञवल्क्य ब्राह्मणान्प्रति यदिदमाक्षेपवचनमवोचः तत्किं त्वं ब्रह्मविदसींत्युवाच दैवचोदितः शाकल्यः । अथ स्वस्य सर्वात्मत्वविस्त्वरूप ब्रह्म-

वित्वं बोधयन् स देवाः साश्रयादिशोवेद जानामिदिशोहम स्मीतीत्युवाच याज्ञवल्क्यः । अथ यद्यदिवेत्थ जानासि ॥ १९ ॥

किं देवतोऽस्यां प्राच्यां दिश्यसीत्यादित्यदेवत इति स आदित्यः कस्मिन्प्रतिष्ठितइति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितमिति रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानीतिहृदय इति होवाच हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीत्येव मेवैतद्याज्ञवल्क्य ॥ २० ॥

तर्हि प्राच्यां दिशिपूर्वदिग्रूपस्त्वं किं देवतोसीतिशाकल्यः। पूर्वदिग्रूपस्य मे आदित्यो देवता। कार्यं च कारणे प्रतिष्ठितं भवतीति यथा कथंचित्कार्यकारण भावस्सर्वत्रोह्यः यथा चक्षोः सूर्यो अजायतेति चक्षुः कारणम् चक्षुश्च रूपग्रहणाय क्रियते इति रूपं कारणमिति। रूपाणि वासनारूपेण हृदये प्रतिष्ठितानिभवन्ति । एतन्मत्प्रश्नोत्तरमेवमेव यथावदसितथैव ॥ २० ॥

किं देवतोस्यां दाक्षिणायां दिश्यसीति यमदेवत इति सयमः कस्मिन्प्रतिष्ठितइति यज्ञइति कस्मिन्नुयज्ञः प्रतिष्ठितइति दक्षिणायामिति कस्मिन्नुदक्षिणा प्रतिष्ठितेति श्रद्धायामिति यदाह्येव श्रद्धन्तेथदक्षिणां ददाति श्रद्धाया ऽह्येवदक्षिणा प्रतिष्ठितेति कस्मिन्नु श्रद्धाप्रतिष्ठितेति हृदय इति होवाच हृदयेनहि श्रद्धां जानाति हृदयेह्येव श्रद्धाप्रतिष्ठिता भवतीत्येव मेवैतद्याज्ञवल्क्य ॥ २१ ॥

यज्ञ प्रभावाद्य मोदाक्षिण दिगीशः यद्वायमो धर्मराजः धर्मश्चयज्ञादि साध्य इत्यत आहयज्ञ इति । श्रद्धावृत्तिः सा च वृत्तिमत्यन्तः करणे प्रतिष्ठिता ॥ २१ ॥

किं देवतोस्यां प्रतीच्यां दिश्यसीति वरुण देवत इति स वरुणः कस्मिन्प्रतिष्ठित इत्यप्स्विति कस्मिन्न्वापः प्रतिष्ठिता इति रेतसीति कस्मिन्नुरेतः प्रतिष्ठितमिति हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदया दिवसृप्तो हृदया दिवनिर्मित इति

हृदयेह्येवरेतः प्रतिष्ठितं भवतीत्येव मेवैतद्याज्ञवल्क्य ॥ २२ ॥

वरुणो जलमयः जलं चेश्वररेतः रेतश्चकामतो हृदयाज्जायते यस्मात्तस्मादेव सदृशं ज़ातं सुतं हृदयान्निःसृतोनिर्मितोयमिति वदन्ति॥२२॥

किं देवतो स्यामुदीच्यां दिश्यसीति सोम देवत इति स सोमः कस्मिन्प्रतिष्ठित इति दीक्षायामिति कस्मिन्नुदीक्षाप्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्येह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नुसत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति हृदये ह्येवसत्यं प्रतिष्ठितं भवतीत्येव मेवैतद्याज्ञवल्क्य ॥ २३ ॥

सोमोलता देवता च दीक्षित एव सोमं क्रीणातीति दीक्षा कारणम् । यतः सत्यं कारणं तस्मादेव दीक्षितं वदन्ति सत्यं त्वं वदेति मिथ्यावादेकारण सत्यनाशात्कार्यं दीक्षानश्यतेति भावः२३

किं देवतो स्यां ध्रुवायां दिश्यसीत्यग्नि-

देवत इति सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति कस्मिन्नुवाक् प्रतिष्ठितेति हृदय इति कस्मिन्नुहृदयं प्रतिष्ठितमिति ॥ २४ ॥

सुमेरोरुपरि गतानां प्रकाश एव सदेति तत्रत्यादिग् ध्रुवा । प्रकाशात्मकोऽग्निरेव प्रकाशस्यदेवः । वागिन्द्रिय मग्निदेवताधिष्ठितमिति प्रसिद्धम् यद्वाग्निरपि वाचा प्रकाश्यत इति वाक् कारणम् । वाक् च हृदयाधीना । अयं भावः सर्वेषां हृदये प्रतिष्ठितत्वाद्देवताश्रयादिसहिताः पञ्चापिजगद्भेदादिशोयाज्ञवल्क्यस्य हृदयभूता-इति ॥ २४ ॥

अथ हृदयं क्व प्रतिष्ठित मित्यस्योत्तरमाह—

अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैत दन्यत्रास्मन्मन्यासै यद्ध्येतदन्यत्रास्मत्स्याच्छ्वानो वैनदद्युर्वयाꣳसिवैनद्विमथ्नीरन्निति ॥ २५ ॥

अहनिलीयत इति हे अहल्लिकप्रेत इति शाकल्य संबोधनम् । यदैत हृदयमस्मत्तोऽन्यदेशेस्तीति मन्यसे । यद्यदि हि हृदयमस्मत्तोऽन्यत्र

भवति तदा तर्हि एतच्छरीरं श्वानोऽद्युः पक्षिण-श्चाविमाथितं विलोडितमाकृष्टं च कुर्वन्ति । तस्मात्परस्पराश्रिते हृदयशरीरे हृदयं च शरीर-स्यात्मेति भावः ॥ २५ ॥

कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नूदानः प्रतिष्ठित इति समान इति स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यतेऽशीर्यो नहि शीर्यतेऽसङ्गो नहि सज्यते ऽसितो न व्यथते न रिष्यति एतान्यष्टावायत-नान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स य-स्तान् पुरुषान्निरुह्य प्रत्युह्यात्यक्रामत्तं त्वौ-पनिषदं पुरुषं पृच्छामि तं चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति तꣳ ह न मेने शाकल्य-स्तस्य ह मूर्धा विपपातापि हास्य परिमो-षिणोऽस्थीन्यपजह्रुरन्यन्मन्यमानाः ॥२६॥

त्वं देह आत्मा हृदयं च युवां क्व प्रतिष्ठिता

विति शाकल्य प्रश्नः । हृदेह पञ्चवायवोन्योन्य प्रतिष्ठा इत्युत्तरम् । अथ त्वं पदेन क्रुद्धो याज्ञवल्क्यो मधुकाण्डे निर्दिष्टं ब्रह्मात्मानं प्रष्टुमाह स एष इति । नेति नेतीति निषेधमुखेन यउक्तस्स एष आत्मा सूक्ष्मत्वादिन्द्रियाग्राह्यो न वयवत्वादभेद्योऽमूर्तत्वाद सङ्गोसङ्गत्वाद वंद्धत्वेनाव्यथोन विनश्यति । तथा च यः स आत्मा पुरुषः पृथिव्या द्यायतनादिसहितानष्ट पुरुषानुक्तान्निरुह्य प्रदर्श्य प्रत्युह्यादिगादि क्रमेणात्मनि संहृत्यात्य क्रामन्निरुपाधिकोऽभवत्तमुपनिषन्मात्रगम्यं त्वां पृच्छामि विस्पष्टं चेन्न वक्ष्यसि तर्हि ते शिरः पतिष्यतीत्याह याज्ञवल्क्यः । तं पुरुषं न मेनन ज्ञातवान् । अन्यदपि ब्रह्मविद्द्वेषस्य फलमाहापि हेति । अपिचास्य शाकल्यस्यास्थीनि संस्कारार्थं शिष्यैर्नीयमानानि चोराधनं मत्वा जह्रुः ॥ २६ ॥

अथ होवाच ब्राह्मणा भगवन्तो योवः कामयते समा पृच्छतु सर्वे वा मा पृच्छत योवः कामयते तं वः पृच्छामि सर्वान्वावः पृच्छामीति तेह ब्राह्मणा नदधृषुः ॥ २७ ॥

हे भगवन्तो वो युष्माकं मध्ये श्रोतुमिच्छा

चेदेकस्सर्वे वा मां पृच्छन्तु विवक्षाचेदेकं सर्वान्वा हं पृच्छामीत्युवाच याज्ञवल्क्यः ते तु किमपि वक्तुं न प्रगल्भावभूवुस्तदा ॥ २७ ॥

तान्हैतैः श्लोकैः पप्रच्छ—

यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा तस्य लोमानि पर्णानि त्वगस्योत्पाटिका-वहिः ॥१॥ त्वच एवास्य रुधिरं प्रस्यन्दि-त्वच उत्पटः तस्मात्तदाऽऽतृरुमात्प्रैतिरसो वृक्षादिवाऽऽहतात् ॥२॥ मा ९ सान्यस्य श-कराणि किनाट ९ स्नावतत्स्थिरम् अस्थीन्य-न्तरतो दारूणि मज्जामज्जोपमाकृता ॥ ३ ॥ यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्र-रोहति ॥४॥ रेतस इति मावोचत जीवत-स्तत्प्रजायते धानारुह इव वै वृक्षोञ्जसाप्रेत्य संभवः ॥५॥ यत्समूलमावृहेयुर्वृक्षं न पुनरा-भवेत् मर्त्यःस्विन्मृत्युनावृक्णः कस्मान्मूला-त्प्ररोहति ॥६॥ जात एव न जायते कोन्वेनं

जनयेत्पुनः विज्ञानमानन्दं ब्रह्मरातिर्दातुः परायणं तिष्ठमानस्य तद्विद इति ७ ॥२८॥

यथा महान्वृक्षस्तथैव पुरुष इत्यमृषा सत्यम् तथा हि पुरुषस्य लोमवृक्षस्य पत्रम् । पुंसोवहिः त्वक्तरोरुत्पाटिकाशुष्कत्वक् ॥१॥ पुंसः त्वचः सकाशाद्रुधिरं स्यन्दते तरोरुत्पटोनिर्यासः । पुरुषा दातृस्माद्धिंसितात्तद्रुधिरं निस्सरत्याहतवृक्षाद्रस इव ॥२॥ पुंसो मांसं तरोरार्द्रात्वक् पुंसः स्नावतरोः काष्ठ संलग्नं वल्कलम् तच्चास्थि स्नाववत् स्थिरम् । स्नावाभ्यन्तरे पुंसोस्थितरोः कीनाटान्तरे दारुमज्जातूभयोः समा ॥३॥ एवं सादृश्ये पुनर्जन्मापि पुंसो वाच्यम् तच्च वृक्षस्य मूलात् दृश्यते मृतस्य पुनस्तत्कस्माद्भवतीत्यर्थः । यद्यदिवृक्णश्छिन्नो रोहति जायते वृक्षस्तर्हि मर्त्यः स्विद्वितर्कें इत्यादि ॥४॥ वीर्याज्जायते इति न वाच्यम् यतस्तद्रेतो जीवतो जायते न मृतात् । किंच वृक्षो वीजरुहोपि वै भवति काण्डाद्वीजादप्युत्पद्यत इति भावः तथा च वृक्षस्य प्रेत्यसमूलनाशे वीजात्पुनर्जन्म संभवति मर्त्यस्य तु मृतस्य नेत्यर्थः ॥५॥ यदि मूलवीजाभ्यां सह वृक्षं नाशयेत्तर्हि न पुनर्भवद्वृक्षः मर्त्यस्त्व

वश्यं भवत्यन्यथा कृतहान्यादि प्रसक्तेः तथा च कस्माद्भवति ॥६॥ अथ जात एव जायते इत्यपि न जात एव स दास्ति न कदापि म्रियते मृतो वा जायत इत्यपि न वाच्यम् जातस्य हि ध्रुवो मृत्युरितिस्मृतेः कृतहान्यादेश्चेति भावः तस्मान्मृतं पुनः को जनयाति जगन्मूलं किमिति प्रश्नः। ब्रह्मविदो ब्रह्मनिष्ठस्य जीवन्मुक्तस्य परायणं स्वरूप भूतं रातेर्धनस्य दातुः कर्मिणश्च परायणं कर्मफलदं चिदानन्दं ब्रह्म जगन्मूलमिति स्वयमाह ब्राह्मणानां मूकीभावे ७ ॥ २८ ॥

इति बृहदारण्यकोपनिषत्प्रसादे तृतीयाध्यायस्य नवमं ब्राह्मणं तृतीयोध्यायश्च ।

---

यो यं जगन्मूलमौपनिषदः पुरुषोनिर्दिष्टः सवागादि देवता द्वारेणावगन्तव्य इति चिदानन्दब्रह्मात्मनो वगते रुपायान्तरं ब्राह्मणद्वयेन वक्तुमारभते जनक इति—

जनकोह वै देह आसाञ्चक्रेऽथ ह याज्ञवल्क्य आवव्राजत ऽँ होवाच याज्ञवल्क्य किमर्थमचारी पशूनिच्छन्नण्वन्तानीत्युभयमेव सम्राडिति होवाच ॥ १ ॥

अथ जनकोराजा कदाचिद्दासामासनं चक्रे स्थापितवानागतानामर्थेथ तदैवागतो याज्ञवल्क्यः तमुवाच राजा किमर्थमागतोसि पशून्सूक्ष्मनिर्णयान्प्रश्नान् वामत्तस्सकाशादिच्छन्निति हे सम्राडुभयमिच्छन्नित्युत्तरम् ॥ १ ॥

यत्तेकश्चिदब्रवीत्तच्छृणवामेत्य ब्रवीन्मे जित्वाशैलिनिर्वाग्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छैलिनोऽब्रवीद्वाग्वै ब्रह्मेत्य वदतो हि किꣳ स्यादित्य ब्रवीत्तु ते तस्या यतनं प्रतिष्ठां नमेब्रवीदित्येकपाद्वा एतत्सम्राडिति सवैनो ब्रूहि याज्ञवल्क्य वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येन दुपासीत का प्रज्ञता याज्ञवल्क्य वागेव सम्राडिति होवाच वाचावै सम्राड्बन्धुः प्रज्ञायत ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनु व्याख्यानानि व्याख्यानानीष्टꣳ हुतमाशितं पायितमयञ्चलोकः परश्चलोकः सर्वाणि च भूतानि वाचैव सम्राड् प्रज्ञायन्ते

वाग्वै सम्राट् परमं ब्रह्मनैनं वाग्जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पितामेऽमन्यत नाननुशिष्य हरे तेति ॥ २ ॥

परन्तु वहुविद्वांसो राजान मायान्त्यतो यदब्रवीत्तुभ्यं कश्चित्तत्प्रथमं श्रोतुमिच्छामीत्युक्तो राजा ह वाग्वै वाग्देवताग्निरेव ब्रह्माते शिलिनसुतो जित्वा मुनिर्मह्यमब्रवीदिति। हे राजन् पूर्वं माता ततः पिता तत आचार्यो यस्य शिक्षायै अभूत्स यथा ब्रूयाद्युक्तमेव तथा यमब्रवीदिदम् हि यत अवदतो मूकस्येहामुत्र वा किम्फलं स्यान्न किमपि अतः । परन्तु तस्य ब्रह्मण आयतनं शरीरं प्रतिष्ठामाश्रयश्चाब्रवीन्नवेत्युक्तो राजा ह नेति । एवञ्च हे सम्राडे तत्तदुक्तं ब्रह्म एक पादेव । तर्हि स सर्व पादवित्त्वमेव ब्रूहि । वागिन्द्रय मेवोक्ताग्निर्ब्रह्मण आयतनं शरीरमाकाशः प्रतिष्ठाश्रयः इमौ द्वौ पादौ तथैनद्ब्रह्म प्रज्ञा इति ज्ञानं चतुर्थः पादः । का प्रज्ञामुने । वागेव राजन् । यतो वन्ध्वादि सर्व

भूतान्तानि वाचा एव प्रज्ञायन्ते अत एव च वागेव परं ब्रह्मेति यो वेत्ति तं वाक् न त्यजति भूतानीष्टदानि भवन्ति एवं देवः पूज्यो भूत्वामृतोपि देवान्याति सः । अथैतच्छ्रुत्वा हस्तीतुल्य ऋषभो वृषभो यत्र तद्गोसहस्रन्ते ददामीत्युक्तो राज्ञा अननु शिष्यशिष्यं कृतार्थमकृत्वा शिष्यान्न धनमाददीतेति मम पितुश्च मतमित्युवाच याज्ञवल्क्यः ॥२॥

य देवते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मउदङ्कः शौल्वायनः प्राणो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छौल्वायनो ब्रवीत्प्राणो वै ब्रह्मत्य प्राणतो हि किᳪ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मे ब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य प्राण एवायतनमाकाशः प्रतिष्ठाप्रियमित्येनदुपासीत का प्रियताया-ज्ञवल्क्य प्राण एव सम्राडिति होवाच प्राणस्य वै सम्राट् कामाया याज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्कं भवति यां दिशमेति प्राणस्यैव सम्राट् कामाय

प्राणो वै सम्राट् परमं ब्रह्मनैनं प्राणो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवोभूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभ ए सहस्रं ददामीति होवाच जनको वैदेहः सहोवाच याज्ञवल्क्यः पितामेऽमन्यत नाननुशिष्य हरेतेति ॥ ३ ॥

शुल्वस्यापत्यमुदङ्कः । प्राणः प्राणदेवता वायुः । अप्राणतः प्राणचेष्टाशून्यस्य । ब्रह्मप्रियमिति भावना चतुर्थः पादः प्राण एव यतः प्रियोतः प्राणार्थमयाज्ययाजनं निन्दितात्प्रतिग्रहं यत्र वधशङ्का तत्रापि गमनं करोति । पूर्ववदन्यत् ॥ ३ ॥

य देवते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मेवर्कुर्व्वार्ष्णश्चक्षुर्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्य्यवान्ब्रूयात्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेत्य पश्यतो हि कि ए स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां नमेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्यचक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत का सत्यता याज्ञवल्क्य

चक्षुरेव सम्राडिति होवाच चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्षमिति तत्सत्यं भवति चक्षुर्वै सम्राट् परमं ब्रह्म नैनं चक्षुर्जहाति सर्वाण्येनं भूतान्यभिरक्षन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभ ँ सहस्रं ददामीति होवाच जनको वैदेहः सहोवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ४ ॥

वृष्णस्य सुतोवर्कुः। चक्षुः तद्देवतादित्यः। अपश्यतश्चक्षुर्हीनस्य। एतदुक्तं ब्रह्मसत्यस्वरूपमिति बोधश्चतुर्थपादः। किञ्चिद्वदन्तं पृच्छति जनस्त्वमेतदद्राक्षीरिति सयदिवदत्यद्राक्षमिति तदा तदुक्तं सत्यमिति जानात्यतश्चक्षुरेव सत्यम्। समानमन्यत् ॥ ४ ॥

यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे गर्दभीविपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति यथामातृ मान्पितृमानाचार्यवान्ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यशृण्वतो हि कि ँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रति-

ष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वैनो ब्रूहि याज्ञवल्क्य श्रोत्रमेवायतनमाकाशः प्रतिष्ठानन्त इत्येनदुपासीतकानन्तता याज्ञवल्क्य दिश एव सम्राडिति होवाच तस्माद्वै सम्राडपियां काञ्चदिशं गच्छति नैवास्या अन्तं गच्छत्यनन्ता हि दिशो दिशो वै सम्राट् श्रोत्र ँ श्रोत्रं वै सम्राट् परमं ब्रह्म नैन ँ श्रोत्रं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभ ँ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्यहरेतेति ॥ ५ ॥

भारद्वाजगोत्रोगर्दभी विपीताख्यो मुनिः। श्रोत्रं तदेवतादिशः। अशृण्वतः श्रोत्रेन्द्रियहीनस्य। दिगभिन्नत्वादनन्ते श्रोत्रे ते च ब्रह्मेति बोधश्चतुर्थपादः। कस्या अपि दिशोन्तं न याति कोपि गच्छन्निति दिगनन्तत्वं प्रसिद्धम् ॥ ५ ॥

य देवते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे सत्यकामो जाबालो मनो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान् ब्रूयात्तथा तज्जाबालोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य मन एवायतनमाकाशः प्रतिष्ठानन्द इत्येनदुपासीत का आनन्दता याज्ञवल्क्य मनएव सम्राडिति होवाच मनसा वै सम्राट् स्त्रियमभिहार्य्यते तस्यां प्रतिरूपः पुत्रो जायते स आनन्दो मनो वै सम्राट् परमं ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ६ ॥

जाबालायाः पुत्रः सत्यकामः । मनश्चन्द्रः ।

अमनसो मनोरहितस्य । आनन्दत्वेन भावन-मुक्त ब्रह्मणश्चतुर्थः पादः । मनसास्त्रियमनुकूलयति यदा तदा निजानुरूपः पुत्रो जायते स चानन्दहेतुः । तथा चानन्दहेतुहेतुत्वान्मन एवानन्दः । पूर्वं वदन्यत् ॥ ६ ॥

य देवते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे विदग्धः शाकल्यो हृदयं वै ब्रह्मेति तथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेत्य हृदयस्य हि किᳬस्यादित्यब्रवीत्तुते तस्या यतनं प्रतिष्ठां नमेब्रवीदित्येक पाद्वा एतत्सम्राडिति सवैनो ब्रूहि याज्ञवल्क्य हृदयमेवायतनमाकाशः प्रतिष्ठास्थिति रित्येन द्रुपासीत का स्थितता याज्ञवल्क्य हृदयमेव सम्राडिति होवाच हृदयं वै सम्राट् सर्वेषां भूतानामायतनᳬहृदयं वै सम्राट् सर्वेषां भूताना प्रतिष्ठा हृदयेह्येव सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति हृदयं वै सम्राट् परमं ब्रह्मनै-

न ह हृदयं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभ ह सहस्रं ददामीति होवाच जनको वैदेहः सहोवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥७॥

शकलसुतो विदग्धः। हृदयं तद्देवता प्रजापतिः अहृदयस्य हृदयहीनस्य। उक्तब्रह्मणिस्थिति भावनाचतुर्थः पादः। यतः सर्वाणि भूतानि हृदये एव स्थितानि सन्ति ततो हृदयं स्थितिः ॥७॥

इति बृहदारण्यकोपनिषत्प्रसादे चतुर्थाध्यायस्य प्रथमं ब्राह्मणम्।

---

ब्रह्मज्ञानसाधनोपासनान्युक्त्वा प्रकारान्तरेण ब्रह्मज्ञानायोपक्रमते जनक इति—

जनको हवैदेहः कूर्चादुपावसर्पन्नुवाच नमस्तेस्तु याज्ञवल्क्यानुमाशाधीति सहोवाच यथा वै सम्राण्महान्तमध्वानमेष्यन् रथं वानावं वासमाददीतैव मेवैताभिरुपनिषद्भिः समाहितात्माऽस्येवं वृन्दारक आढ्यः

सन्नधीत वेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति नाहं तद्भगवन् वेद यत्र गमिष्यामीत्यथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥ १ ॥

सर्वाणि ब्रह्माणि साकल्येन याज्ञवल्क्यो वेत्ति नाहं न ममाचार्या इतीत्थमाकलय्य गताभिमानमासनात्कूर्चाभिध स्व समीपमायान्तं नमस्यन्तं मामनुशाधीति वदन्तं राजानं राजन् दूरं गमिष्यन्यथा रथं नावं वाऽऽदत्ते तथैताभिरुपासनाभिर्युक्तचित्तः पूज्यो धानको वेदविल्लब्धोपासन कश्चाचार्येभ्योऽसि तथापि देहाद्विमुक्तः क्व गमिष्यसि किमात्मको भविष्यसीत्युवाच याज्ञवल्क्यः । परब्रह्मज्ञानाभावे तु नोपासनाभिः कृतार्थतेति भावः । व्यक्तमन्यत् ॥ १ ॥

अथ तुरीयं ब्रह्म दर्शयितुं विश्वमाहेन्ध इति—

इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥ २ ॥

जागरे दक्षिणनेत्रे यो विश्वस्तस्येन्धेति यन्नामदीप्तिमत्त्वात्तदिन्द्रेति ते वदन्ति देवा इव ये प्रत्यक्षनामग्रहणं द्विषन्तीति व्यक्तोर्थः ॥ २ ॥

तैजसं वक्तुमाहाथेति—

अथैतद्वामेऽक्षिणि पुरुषरूपमेषास्य पत्नी विराट् तयोरेष स५स्तावो य एषोन्तर्हृदय आकाशोथैनयोरेतदन्नं य एषोन्तर्हृदये लोहित पिण्डोथैनयोरेतत्प्रावरणं यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः सञ्चरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति यथा केशः सहस्रधा भिन्न एवमस्यैताहितानामनाड्योन्तर्हृदये प्रतिष्ठिता भवन्त्येताभिर्वा एतदास्रवदास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादात्मनः ॥ ३ ॥

यदेतद्वामनेत्रे पुरुषस्वरूपमेषास्येन्द्रस्य पत्नीन्द्राणी विराट् भोग्यवस्तु । तयोरिन्द्रेन्द्राण्योः संस्तावःस्तुतिदेशो हृदयाकाशः । स्वप्ने हृदितावेव एकत्वेन तैजसत्वं प्राप्नुत इति भावः । अथ तत्र रहो देशे मिथुनीभावेनैकत्वं गतयोर्जागरे भुक्त्वाथ

शयितयोः स्थूलदेहे तादात्म्यं गतयोस्तयोरन्नं स्थितिहेतुस्तु भुक्तान्नजं सूक्ष्मनाडीभिर्हृदित तं रुधिरम् । तथा बहुनाडी छिद्रयुत हृद्देशोजालतुल्याच्छादनवस्त्रम् । पुनर्जागरे संचरणमागमनं तस्य साधनीसृतिर्मार्गस्तु हृदयादूर्ध्वं या नाडी याति साया श्चकेश सहस्रभाग सदृशसूक्ष्माहिताख्या नाड्यो हृदयस्थितमूलास्ताभिरेतदुक्तमन्नं रुधिरं गच्छत्सर्वत्रदेहे गच्छति सूक्ष्मेपि। सूक्ष्मदेहस्थिति हेतुरिदमन्नमिति भावः । एवञ्च यतो हृद्गतं रुधिरपिण्डात्मकमन्नं स्थूलदेहस्य सूक्ष्मस्य त्वत्यन्त सूक्ष्मनाडीगतम् तस्मादस्माच्छारीरादात्मनः स्थूलशरीराभिमान्यात्मपेक्षया एषः सूक्ष्मः प्रविविक्ताहारतरोतिशयेन सूक्ष्माहारः ॥ ३ ॥

सुषुप्तौ प्राणमात्रस्य चेष्टोपलभ्यते तः प्राणशब्देन प्राज्ञमाह तस्येति—

तस्य प्राचीदिक् प्राञ्चः प्राणादक्षिणादिग्दक्षिणे प्राणः प्रतीचीदिक् प्रत्यञ्चः प्राणा उदीचीदिगुदञ्चः प्राणाऊर्ध्वादिगुर्ध्वाः प्राणा अवाचीदिगवाञ्चः प्राणाः सर्वादिशः सर्वे प्राणाः स एष नेति नेत्यात्माऽगृह्योन हि गृ-

ह्यतेऽशीर्य्यो न हि शीर्य्यतेऽसङ्गो न हि स-
ज्यतेऽसितो न व्यथते न रिष्यत्यभयं वै जनक
प्राप्तोसीति होवाच याज्ञवल्क्यः सहोवाच
जनको वैदेहोऽभयन्त्वा गच्छता याज्ञव-
ल्क्ययो नो भगवन्न भयं वेदयसे नमस्तेऽ-
स्त्विमे विदेहा अयमहमस्मी३ इति ॥४॥

तस्य तैजसस्य प्राज्ञत्वं गतस्यानभिव्यक्त देह-
द्वयाभिमानतया सर्वदिग्गतैः प्राणाख्यैः प्राज्ञैर्भे-
दो न भातीति सर्वाऊर्ध्वाधः सहितादिशः स्वरू-
पभूता एव भवन्ति अतः स उक्ताद्वितीय एव
एष प्रत्यगात्मा सुषुप्ति प्रसिद्धोवबोधात्मा नेति
नेति नतु स्थूल सूक्ष्मोपाधिरूपः । किञ्च अखण्डा
सङ्गस्वभावत्वादिन्द्रियादिभिर्ग्रहणा भेदनाऽऽसज्ज-
नाभावाद्बन्धनरहितो न व्यथते दुःखं न याति न-
रिष्यति न विनश्यति वायमात्मा तुरीय इत्यर्थः ।
अक्षिगतो विश्वोहृद्गतस्तैजसः सुषुप्ताव विद्यया
वृतत्वेनाज्ञातत्वात्प्राज्ञ इत्येक एव बोध उपाधितो
भिद्यते तो नेति नेतीत्युपाधि निषेधेभिव्यज्यत
एव शिष्टस्तुरीय भाव इति भावः । अथ क ग-
मिष्यसीत्यस्योत्तरं वदति हे जनक अभयमुक्त वि-

धर्मविनाशिस्वरूप प्रत्यगात्मानं प्राप्तएवासि न तु गन्तासीति । अथेदं श्रुत्वोवाच यस्त्वं नोस्मान भयं बोध यस्य तस्त्वामप्यभयं गच्छतान्नमोस्तु तुभ्यं राज्यं मां च दासं गृहाणगुरुदक्षिणामिति जनकः ॥ ४ ॥

इति द्वितीयम् ।

अथोक्तस्यैव चिदात्मनः प्रकारान्तरेण प्रसिद्धिं वदिष्यन्विद्यादानग्रहणरीति सूचिकामाख्यायिकामारभते जनकमिति—

जनक ᳪ हवैदेहं याज्ञवल्क्यो जगाम स मेनेन वदिष्य इत्यथहयज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रं समुदाते तस्मैह याज्ञवल्क्यो वरं ददौ सहकाम प्रश्नमेव वव्रेत ᳪ हास्मै ददौ त ᳪ सम्राडेव पूर्वं पप्रच्छ॥१॥

अथ कदाचिज्जनकं याज्ञवल्क्यो जगाम स्वार्थं न वदिष्य इति च मनसि चक्रे तूष्णीं स्थितो गत्वेति भावः परन्तु कदाचित्तावग्निहोत्रविषये संवादं चक्रतुः तदा वरं ब्रूहीत्युक्तो यथेष्टं मम प्रश्नास्त्वयिस्युरिति जनको वव्रेतो धाष्टर्याज्जनक एव पूर्वं पप्रच्छ ॥ १ ॥ प्रश्नमाह—

याज्ञवल्क्य किं ज्योतिरयं पुरुष इति आदित्यज्योतिः सम्राडिति होवाचादित्येनैव ज्योतिषास्तेपल्ययते कर्मकुरुते विपल्येतीत्येव मेवतद्याज्ञवल्क्य ॥ २ ॥

अस्य जनस्य सर्वव्यवहारहेतुः प्रकाशक इति प्रश्नः सूर्यप्रकाशेनैव जनउपविशति पर्यटति तत्तत्कर्म कुरुते विपर्येत्यागच्छति च पुनः कृत्वाऽत आदित्यज्योतिरस्येत्युत्तरम् । एवमेव यद्वदसि तदित्थमेवेति जनकोक्तिः ॥ २ ॥

व्यवहारस्तुरात्रावपि दृश्यत इत्यतः प्रश्नावुत्तरे चाहास्तमिति—

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तम्मिते किं ज्योतिरेवा यं पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवायं ज्योतिषास्तेपल्ययते कर्मकुरुते विपल्येतीत्येव मेवैतद्याज्ञवल्क्य ॥ ३ ॥ अस्तमित आदित्ये याज्ञवल्क्य किं ज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवतीति चन्द्रमसैवायं

ज्योतिषास्तेपल्ययते कर्म कुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ४ ॥

व्यक्तोऽर्थः पूर्ववत् ॥ ४ ॥

प्रसिद्धप्रकाशानामभावेपि व्यवहारदृष्टेराहास्तमित इति—

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ किं ज्योतिरेवायं पुरुष इति वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषास्तेपल्ययते कर्म कुरुते विपल्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरयत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञवल्क्य ॥ ५ ॥

यतो वाग्ज्योतिस्तस्मादेव यत्र यदा प्रावृषि नक्तं मेघाद्यन्धकारे स्वपाणिरपि न दृश्यते तदापि यत्र देशे श्वादिशब्दो भवति तत्रोपन्येत्येव गच्छत्येव श्वादिः ॥ ५ ॥

व्यवहारस्त्वेभिर्जाग्रत्स्वप्नेतु सर्वः सुषुप्तौ च सुखाज्ञानयोरनुभवरूपः कथं व्यवहारो ज्योतिषामभावादुक्तानामिति जिज्ञासायां ज्योतिषां ज्योतिरात्मचैतन्यंलक्षयत्यस्तमिति—

अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किं ज्योतिरेवा यं पुरुष इत्यात्मैवास्य ज्योतिर्भवतीत्यात्म नैवायं ज्योतिषास्तेपल्यते कर्मकुरुते विपल्येतीति ॥ ६ ॥

आत्मविवेकायाह कतम इति ।

कतम आत्मेति यो यं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव सहि स्वप्नोभूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ॥ ७ ॥

आत्मा क इति प्रश्नः । यो यं प्रत्यक्षः सर्वेषां प्राणेषु वाह्यान्तरकरणानां मध्ये विज्ञानं बुद्धिर्यातन्मयस्तत्तादात्म्य मापन्नः। वस्तुतस्तुहृद्यन्तर्बुद्धावपि व्याप्तो बुद्धेरन्य इति यावत् । तथा ज्योतिः पुरुषो बुद्धिसाक्षिबोधाकारः स समानः तादात्म्या बुद्ध्या तुल्यः कर्त्ता भोक्ता सन् इहामुत्र च यात्यायाति तथा बुद्धिव्यापारं चिन्तनमति च लनं च कुर्वन्निव भवति पुनश्च बुद्धौ सुप्तायां सुषुप्तायां

च सहितश्चात्मापि स्वप्नः सुप्तः सुषुप्तश्च भूत्वा इमं लोकं जाग्रद्व्यवहारम् तथा मृत्योर्मृत्युहेतोरविद्यादेः रूपाणि देहेन्द्रियादीनि चातिक्रामति न जानाति अयम्भावः बुद्धिं प्रकाशयद् बुद्धितादात्म्येन स्फुरच्चैतन्यं सदा सर्वस्य कर्तृभोक्त्रादि रूपेण भातितदेव बुद्धेः साक्षिपृथक् च बुद्धेश्चैतन्यमात्मा परमार्थत इति ॥ ७ ॥

देहादेरात्मनोन्यत्वाथाह स इति—

स वायं पुरुषो जायमानः शरीरमभिसम्पद्यमानः पाप्मभिः स ँ सृज्यते स उत्क्रामन्म्रियमाणः पाप्मनो विजहाति ॥ ८ ॥

स उक्तोयमात्मा शरीरे स्थूले तादात्म्य सम्पत्ति रूपजन्मसमये एव पाप हेतु देहेन्द्रियादिभिर्युज्यते तथा देहादुत्क्रमणरूप मरणसमये च तैर्वियुज्यते तोन्य आत्मेति भावः ॥ ८ ॥

जन्ममरण प्राप्य लोकद्वयसन्धिः स्वप्नस्थानं तत्रात्मज्योतिषैव व्यवहार इति वर्णयति तस्येति—

तस्य वा एतस्य पुरुषस्यद्वे एव स्थाने भवत इदञ्च परलोकस्थानञ्च सन्ध्यं तृतीय ँ स्वप्नस्थानं तस्मिन्सन्ध्येस्थाने तिष्ठन्ने

ते उभे स्थाने पश्यतीदञ्च परलोकस्थानञ्च अथ यथाक्रमो यं परलोकस्थाने भवति तमाक्रममाक्रम्यो भयान् पाप्मन आनन्दा ए श्च पश्यति स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवति ॥ ९ ॥

व्यवहारस्थाने द्वे एव स्वप्नस्तु तयोः सन्धौ भवो तोनताभ्यामतिरिच्यते स्वप्ने तिष्ठन्नुभे पश्यत्यतः सन्ध्यत्वम् आक्रामत्यनेनेत्याक्रमः साधनं कर्मादि तथा च परलोकनिमित्तं यथा साधनो भवति तत्साधनञ्चवासनात्मकमवलम्ब्य परलोक भावीनि दुःखानि सुखानि च पश्यति स्वप्ने कदाचिदित्युभयदर्शित्वम् अथ यत्र यदास्वपिति सन्धिस्थानं याति तदा सर्वानवति यस्तस्यास्य लोकस्येत्यर्थः मात्रामवयवं वासनामपादायाच्छिद्य गृहीत्वा देहं विहत्यासंज्ञं कृत्वा वासनामयदेहञ्च निर्माय निजरूपज्योतिमात्रो भवति ॥ ९ ॥

स्वयंज्योतिष्ट्वसिद्धये स्वप्ने पदार्थानां वासनामयत्वमाह नेति—

न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान्पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्त्यथा नन्दा मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्त्यथ वेशान्ताः पुष्करिण्यः स्रवन्त्यः सृजते स हि कर्त्ता ॥ १० ॥

तत्र स्वप्ने रथयोगा अश्वाः । आनन्दः सामान्यसुखम् । मुदिष्टलाभजा । सैवातिशयिता प्रमुत् । वेशन्तोऽल्पसरः । पुष्करिण्यस्तड़ागाः । स्रवन्ती नदी । एतानि वस्तुतो न सन्ति नापि सृज्यन्ते साधनाभावादतो वासनामयानि केवलमात्मना प्रकाश्यन्ते इति भावः ॥ १० ॥

अत्रार्थे त्रीनर्द्धाधिकान्मन्त्रान्वक्तुमाह तदिति—

तदेते श्लोका भवन्ति स्वप्नेन शारीरमभिप्रहत्या सुप्तः सुप्तानभिचाकशीति शुक्रमादाय पुनरैति स्थानꣳ हिरण्मयः पुरुष एकहꣳसः ॥ ११ ॥ प्राणेन रक्षन्नवरं कुलायं वहिष्कुलायादमृतश्चरित्वा स ईयतेऽमृतो यत्र कामꣳ हिरण्मयः पुरुष एक हꣳसः ॥ १२ ॥

स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते वहूनि उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ॥ १३ ॥

आराममस्य पश्यन्ति न तं पश्यति कश्चन। तत्तस्मिन्स्वयंज्योतिष्ट्वादौ श्लोका मन्त्राः। हिरण्यवत्प्रकाशमान एक एवावस्थासु लोकेषु च हन्ति गच्छतीति हंसोयः पुरुषः स स्वप्नेन निद्रया शरीरं निश्चेष्टं कृत्वा स्वयमलुप्तबोधो वासना सुलीनान्सर्वभावान्प्रकाशयति अथ शुक्रं सर्वं विषयबोधमादाय जागरस्थानं पुनरैत्यागच्छति ॥ १ ॥ स पुरुषः स्वप्ने अमृतो जीवन्ने वावरं निन्द्यं कुलायं देहं प्राणवृत्त्या रक्षन्स्वयन्तु वहिः देहाभिमान शून्यश्चरित्वा व्यवहृत्य यत्र वासना तत्र विषये काममिच्छा मीयते प्राप्नोति ॥२॥ किञ्च देवश्चिदात्मा स्वप्नान्ते स्वप्नस्थाने उच्चावचमुत्तमाधमं देवतिर्यगादि भावं गच्छन्वहुरूपाणि वासनामयानि कुरुते स्त्रीभिर्मोदं सखिभिर्हासं व्याघ्रादिदर्शनं कुर्वन्निव च भवत्यभावाद्वस्तुतः स्त्र्यादीनाम् एवमस्यात्मन आरामं क्रीड़नं वासनामयस्त्र्यादिभावमहरहः पश्यन्ति परन्त्व संकीर्ण-

मपि तमात्मानं न कोपि पश्यतीति । चित्रमिद-
मिति भावः ॥ १३ ॥

वैद्यानुभवेन स्वप्नस्थानस्य तत्रात्मनश्च देहा-
देः सकाशाद्व्यतिरिक्तत्व मथाव्यतिरिक्तत्वं च
केषां चिन्मते नाहतमिति—

तन्नायतं बोधयेदित्याहुः दुर्भिषज्य ७ हा-
स्मैभवति यमेष न प्रतिपद्यते थोखल्वाहु-
र्जागरितदेश एवास्यैष इति यानिह्येव
जाग्रत्पश्यति तानि सुप्तइत्यत्रायं पुरुषः
स्वयं ज्योतिर्भवति सोहं भगवते सहस्रं
ददाम्यत ऊर्द्ध्वं विमोक्षाय ब्रूहीति ॥१४॥

तं सुप्तमात्मानमायतं यथा स्यात्त्वरयेति यावन्न
बोधयेदित्याहुर्वैद्याः अन्यथा येभ्योदेह देशेभ्यः पृ-
थग्गतोस्तितेषु देशेषु यमिन्द्रियादि देशं प्रवेष्टुं त्व-
रोद्विग्नो नाप्नुयाद्विपरीतम्बाप्नुयात्तस्मैदेशाय
दुःखसाध्याचिकित्सा भवति स देशो विकृतो भव-
तीति । जागरितदेशात्स्वप्नदेशोभिन्न इति
भावः । अथास्यात्मन एषस्वप्नोजागरितदेशएव
हि यत्तोजागग्रत् यानि वस्तूनिपश्याति तान्येव सु-
प्तोपीत्यन्ये आहुः । तथा च देहेन्द्रियादिभिः स

हितएव स्वप्ने प्यात्मान तु व्यतिरिक्तः स्वयं ज्योतिरिति भावः । अथ स्वप्ने जागरित वस्तूनामभावस्य न तत्र रथा इत्यादि नोक्तत्वादनु भवसिद्धत्वाच्चात्र स्वप्ने ऽयं पुरुषः स्वयं ज्योतिरिति सिद्धम् । अथ स एवं भवता बोधितोऽहं सहस्रं ददामि तुभ्यमतः परन्तु मुक्तयेन्यदपि-ब्रुहीत्युवाच जनकः ॥ १४ ॥

जागरिते प्रतीतकर्तृत्वादिनि वृत्तये विविच्यात्मानं स्वप्ने प्रदर्श्यतत्रापि प्रतीतकर्तृत्वादेर्निवृत्तये सुषुप्तौ तं विविच्य दर्शयितुमाह स इति—

स वा एष एतस्मिन्सम्प्रसादे रत्वा च रित्वा दृष्ट्वैव पुण्यञ्चपापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायैव स य त्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्य सङ्गोह्ययं पुरुष इत्येव मेवै तद्याज्ञवल्क्य-सोहं भगवते सहस्रं ददाम्यतऊर्द्ध्वं विमोक्षायैव ब्रूहीति ॥ १५ ॥

य उक्तः स्वप्ने स एष पुरुषः रमणविह रणपुण्य पाप दर्शनानि लब्ध्वाश्रान्तः संप्रसादे सु-

षुप्तौ सर्वव्यवहार राहित्य प्रसादं प्राप्य अथ निश्चित आयोगमनं न्यायः तं योनिः स्थानं तच्चानाति क्रम्य यथा यतो वा पूर्वं गतः तथा तत्रैव सन्ध्येस्थाने पुनरायाति स्वप्नाय । प्राग्वादो यमवस्थासुक्रमनियमा दर्शनात् । अथ तत्र स्वप्ने यत्पश्यति तन्न सह आयाति । जागरिते स्वाप्न पापधनादिना न युज्यते तो सङ्ग एव वस्तुतः । सङ्गस्तू पाधिप्रतीत इति भावः य द्वदसित दित्थ मेवेत्यादि जनकोक्तिः ॥ १५ ॥

उक्तमेवानन्वागतत्व मसङ्गत्वदार्ढ्यायाह
स इति—

स वा एष एतस्मिन्स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तयैव सयत्तत्र किञ्चित्पश्य त्यनन्वागतस्ते न भवत्य सङ्गो ह्ययं पुरुष इत्येव मेवैतद्याज्ञवल्क्यसोहं भगवते सहस्रं ददाम्यत उर्ध्वं विमोक्षायैव ब्रूहीति ॥ १६ ॥

सुषुप्ते रागत एष आत्मा । बुद्धान्ताय जागरितस्थानाय ॥ १६ ॥

जागरितात्स्वप्नं गच्छन्नपि न जागरित पदार्थैः सह गच्छतीत्याह जागरिते प्यौपाधिकमेव कर्तृत्वादिनवास्तवमिति सूचनाय सवै इति—

स वा एष एतस्मिन्बुद्धान्ते रत्वाचरित्वा दृष्ट्वैव पुण्यञ्च पापंच प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नान्तायैव ॥ १७ ॥

सः स्वप्नादागतः। स्वप्नान्तः स्वप्नस्थानम्।

अवस्थाद्वयसंचारे दृष्टान्तमाह तद्यथेति—

तद्यथा महामत्स्य उभे कूले अनुसंचरति पूर्वं चापरं चैव मेवायं पुरुष एतावुभावन्तावनुसंचरति स्वप्नान्तं च बुद्धान्तं च ॥१८॥

नदीतटयोर्जले भ्राम्यन्नपि स्वच्छन्द एव यथा महामत्स्यस्तथात्माप्यवस्थयोरसङ्गएव भवति कर्तृत्वादिभिरिति भावः ॥ १८ ॥

इयमसङ्गताहरहस्सर्वानुभूता सुषुप्ता वित्याह तद्यथेति—

तद्यथास्मिन्नाकाशेश्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः स ९ हत्य पक्षौ सल्लयैव ध्रियत एव मेवायं पुरुष एतस्माअन्ताय धा-

वति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति ॥ १९ ॥

यथा काशे पक्षीपरितो विविधं पतनं गमनं कृत्वा श्रमयुतः संकुचितपक्षः संलयाय नीडाय नीडमेव गन्तु मुद्यतो भवत्येव मात्मावस्थयोः श्रान्तोऽन्ताय सुषुप्तौ विविक्ताया ज्ञाताऽखण्डपरिपूर्णचित्स्वरूपाय धावति सुषुप्त्युद्यतो भवति। यत्र यस्मिन्नन्ते गतो वस्थाद्वयधर्मैर्न युज्यते ॥१६॥

उपाधितद्धर्मतद्योगानां हेतुमविद्यां वक्तु-
माह ता इति—

तावा अस्यैताहितानामनाड्यो यथा केशः सहस्रधा भिन्नस्तावताऽणिम्ना तिष्ठति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनंघ्नन्तीव जिनन्तीव हस्तीव विच्याय यतिगर्त्तमिव पतति यदेव जाग्रद्भयं पश्यति तदत्राविद्यया मन्यतेथ यत्र देव इव राजे वाह मे वेद ए सर्वोऽस्मीति मन्यते सोस्य परमोलोकः ॥ २० ॥

सहस्रधा छिन्न केशाग्रैक भागस्य यावत्तावता

सौक्ष्म्येण युक्ताश्शुक्लादि रसपूर्णाहितानाड्योस्य देहस्य ताः प्रसिद्धानाड्यः तासु सूक्ष्मदेहोस्तीति शेषः अथैवं च यदा एनं सूक्ष्मदेहमात्राभिमानिनं केचनघ्नन्तीव केचनवशी कुर्वन्तीव हस्तीविद्रावयति स्वयं वा गर्त्तै पतति किम्बहुनाजाग्रत्सन् यद्यत्पश्यति भयादितत्सर्वमत्र स्वप्ने केवलं मन्यते शुद्धचिदात्माऽविद्यया न तु वस्तुतो वर्त्तते इव शब्देन हननाद्यभाव प्रसिद्धेर्बोधनात् । अथ यथा वासनावलतो जागरिते स्वप्ने कदाचिद्देवं राजानं वात्मानं मन्यते तथात्म विचारजन्य विद्यया यदेदं सर्वमात्मत्वेन जानाति सोस्य सर्वात्म भावो वास्तवं स्वरूपम् ॥ २० ॥

उक्तवास्तवरूपं विशेषणैर्विशदयति दृष्टान्तेन च तदिति—

तद्वा अस्यै तदतिच्छन्दा अपहत पाप्माऽभय ꣳ रूपं तद्यथा प्रियया स्त्रियया सम्परिष्वक्तो न वाह्यं किञ्चन वेदनान्तरमेवायं पुरुषः प्राज्ञेनात्मना सम्परिष्वक्तो न वाह्यं किञ्चन वेदनान्तरम् तद्वा अस्यै तदा ह्मकाममात्मकाममकाम ꣳ रूप ꣳ शोकान्तरम् ॥ २१ ॥

अस्यात्मनस्तदुक्तमेतद्रूपमतिच्छन्दं कामना-वर्जितं पाप्म कर्म भयं जगत्तदुभयरहितं च । न चेदमत्यन्ताप्रसिद्धम् यतः सुषुप्तावनेनैव प्राज्ञेन वास्तवेनात्मना स्वरूपेणाविद्यामात्रव्यवहिते ना-प्येकीभूतत्वादान्तरं बाह्यं वा नवेत्ति यथा प्रिय-स्त्रियालिङ्गितः । ज्ञानमात्रं तद्रूपं न तु ज्ञानीति सूचनाय पुनस्तद्रूपं वर्णयति तद्वै इति तदेतदस्य रूपमात्मैव कामो विषयो यस्य तत्स्वप्रकाशमि-त्यर्थः तथाप्ताखिलकामत्वेन कामशोकाभ्यां र-हितम् ॥ २१ ॥

उक्तमात्मनो सङ्गत्वादेः स्वरूपभूतत्वमुपा-ध्यविना भावित्वेन कर्त्तृत्वादेरागन्तुकत्वं च द्रढ-यन् पितृत्वादेरभावेन कर्तृत्वाद्ययोग्यमात्मस्व-रूपं सुषुप्तौ लक्षयत्यत्रेति—

अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवाअदेवा वेदा अवेदा अत्र-स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहाचाण्डा-लोऽचाण्डलः पौल्कसोऽपौल्कसः श्रमणो-ऽश्रमणस्तापसोऽतापसो नन्वागतं पुण्ये-

नानन्वागतं पापेन तीर्णो हि तदा सर्वा-ञ्छोकान्हृदयस्य भवति ॥ २२ ॥

देहेन्द्रियान्तः करणजन्यं हि कर्मेति प्रसिद्धम् । जननादिकर्मनिमित्तकं च पितृत्वादिकम् । बोधमात्रात्मस्वरूपन्तु पुण्यपापाद्यखिलकर्मभिरनुष्ठितैरनन्वागतमसम्बद्धं सम्बन्धायोग्यं सुषुप्तिप्रसिद्धम् । हि यतस्तदा सुषुप्तौ हृदयगान्सर्वाञ्छोकाञ्छोकादिहेतुवासनास्तीर्णो भवत्यात्मा । सकलहेतुवासनानामपि संबन्धस्याः योग्य इति भावः अत एव हि पितृत्वादिभावो न भवत्यत्र सुषुप्तौ । स्तेनश्चोरः । भ्रूणहा गर्भघाती । चण्डालपुल्कसौ प्रतिलोमजातिविशेषौ । श्रमणो यतिः । तापसो वानप्रस्थः ॥२२॥

नन्वस्त्यसङ्गश्चिदात्मा चेत्सुषुप्तौ किमिति न जानाति किञ्चिन्नजानातीति जडस्स्याद्विनष्टो वेत्यत आह यदिति—

यद्वैतन्न पश्यति पश्यन्वैतन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोन्यद्विभक्तं यत्पश्येत् ॥ २३ ॥

तत्त्रसुषुप्तौ यन्न पश्यति विशेषज्ञानाकारो न भाति तत्पश्यन्वै सामान्यज्ञानात्मना भासमान एव तथा न भाति । हि यतोद्रष्टुर्बाह्यान्तः करणाद्युपाधिभेदैर्द्रष्टृत्वादिभेदेन प्रतीतस्य सामान्यज्ञानस्य दृष्टेः स्वरूपभूतप्रकाशस्य विनाशो नास्त्यसंभवात्सुषुप्तौ सुखमस्वाप्समित्यनुस्मृतेर्निजाभावस्या भानाच्च । विशेषज्ञानाभावस्तु द्वैताभावात्तदेत्याह न त्विति । ततोद्रष्टुः सकाशादन्यत्वेन विभक्तं द्वितीयं तन्नास्ति यत्पश्येदित्यन्वयः। प्रकाश्याभावे स्वयं प्रकाशरूपः सन्नपि सूर्यो न प्रकाशयतीति प्रसिद्धोत्र दृष्टान्तोन्तरिक्षे । स्फटिके लौहित्यादिकमिवचक्षुरुपाधिनिमित्तकमात्मनि प्रतीतं द्रष्टृत्वं दृष्टित्वं च भ्रान्तिरेवेति तात्पर्यम् ॥ २३ ॥

एवं घ्रातृत्व घ्रातित्वादिकमपि घ्राणेन्द्रियादि निमित्तकमेवेत्याशयेन सप्तकण्डिका आह यद्वै इति—

यद्वै तन्नजिघ्रति जिघ्रन्वैतन्न जिघ्रति न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोन्यद्विभक्तं यज्जिघ्रेत् ॥ २४ ॥

गन्धस्य ज्ञाताघ्राताज्ञानं घ्रातिः ॥ २४ ॥

यद्वैतन्न रसयते रसयन्वैतन्न रसयते न हि रसयितू रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोन्यद्विभक्तं यद्रसयेत् ॥ २५ ॥

रसस्य ज्ञाता रसयिता ज्ञानं रसयतिः ॥२५॥

यद्वैतन्न वदति वदन् वैतन्न वदति न हि वक्तुर्वक्तेर्वि परिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोन्यद्विभक्तं यद्वदेत् ॥ २६ ॥

शब्दोत्पत्तेर्भासको वक्ताभास उक्तिः ॥ २६ ॥

यद्वैतन्न शृणोति शृण्वन्वैतन्न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोन्यद्विभक्तं यच्छृणुयात् ॥ २७ ॥

शब्दस्य ज्ञाता श्रोता ज्ञानं श्रुतिः ॥ २७ ॥

तद्वैतन्न मनुते मन्वानो वैतन्न मनुते न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशि-

त्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥ २८ ॥

यत्तद्विषयको मानसो विचारो मतिः तद्वान्मन्ता ॥ २८ ॥

यद्वैतन्न स्पृशति स्पृशन्वै तन्न स्पृशति न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ॥ २९ ॥

स्पर्शस्य ज्ञाता स्प्रष्टा ज्ञानं स्पृष्टिः ॥ २९ ॥

यद्वैतन्न विजानाति विजानन्वैतन्न विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥ ३० ॥

यत्तद्विषयको निश्चयो विज्ञातिः तद्वान्विज्ञाता । समानः शिष्टोऽर्थः सप्तानां त्रयोविंशति तमकण्डिकार्थेन ॥ ३० ॥

विशेषविज्ञानन्त्वविद्यारूपेण मायया कृत मात्मनो न वास्तवं रूपं नटस्येवेत्याशयेनाह यत्रेति—

यत्र वा न्यदिवस्यात्तत्रान्यो न्यत्पश्येदन्यो न्यज्जिघ्रेदन्यो न्यद्रसयेदन्यो न्यद्वदेदन्यो न्यच्छृणुयादन्यो न्यन्मन्वीतान्यो न्यत्स्पृशेदन्यो न्यद्विजानियात् ॥ ३१ ॥

यत्र स्वप्नजागरितयो रात्मनः सकाशादन्यद्भिन्न मिवाविद्ययादृश्यादिप्रतीतं भवति तत्र दर्शनादिविशेषज्ञानमपि भवत्येव ॥ ३१ ॥

प्रकृतमात्मनः स्वयं ज्योतिष्ट्वमुपसंहरन्नाह सलिल इति—

सलिल एकोद्रष्टाद्वैतो भवत्येषब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्य एषास्यपरमागतिरेषास्य परमासंपदेषोऽस्य परमोलोकएषोस्य परमआनन्द एतस्यैवानन्दस्या न्यानिभूतानिमात्रा उपजीवन्ति ॥ ३२ ॥

सलिलेजले सलिलमिव सुषुप्त्युपलक्षिते परात्मन्येकतां गतोद्रष्टात्माद्वैत शून्योभवति एषचाद्वितीयभावो हे सम्राट् मुमुक्षोर्वस्तुतोगतिः संपल्लोक आनन्दश्च अस्यैवानन्दस्य कलामात्रं

विषयानन्दाख्यं ब्रह्मादिभूतानि प्राप्नुवन्ति अ-न्यगत्यादयस्त्व विद्याकल्पितत्वादनित्या इति भावः ॥ ३२ ॥

उक्तानन्दस्य परमानन्दत्वं संभावयन्नाह-सय इति—

स यो मनुष्याणाꣳ राद्धः समृद्धो भवत्य-न्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः संपन्न-तमः स मनुष्याणां परम आनन्दोऽथ ये शतं मनुष्याणामानन्दाः स एकः पितॄणां जित-लोकानामानन्दोऽथ ये शतं पितॄणां जितलो-कानामानन्दाः स एको गन्धर्वलोकआनन्दो-ऽथ ये शतं गन्धर्वलोकआनन्दाः स एकः क-र्मदेवानामानन्दो ये कर्मणा देवत्वमभिस-म्पद्यन्ते अथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रि-योऽवृजिनोऽकामहतोऽथ ये शतमाजानदे-वानामानन्दाः स एकः प्रजापति लोकआ-नन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतं प्रजापतिलोकआनन्दाः स एको

ब्रह्मलोकआनन्दो यश्च श्रोत्रियोऽवृजिनो कामहतोऽथैष एव परम आनन्द एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीत्यत्र ह याज्ञवल्क्यो बिभयाञ्चकार मेधावी राजा सर्वेभ्यो मान्तेभ्य उदरौत्सीदिति ॥ ३३ ॥

सम्प्रसिद्धो यो मनुष्याणां मध्ये राधस्संसिद्धो दृढाखिलाङ्गः समृद्धो युवाखिलस्वामी पूर्णाखिल भोगवाँस्तस्य य आनन्दः स एकः पूर्णो मनुष्यस्यानन्दः एष आनन्दः शतगुणश्शतगुणो वर्द्धते वक्ष्यमाणानामुत्तरोत्तरम् । जितलोकाः श्राद्धादिना प्राप्तपितृलोकाः । गन्धर्वलोके ये गन्धर्वा इति शेषः । कर्मणा श्रौतेन ये भवन्ति देवाः । आजानदेवा उत्पत्तित एव देवाः न तु मनुष्यत्वं विहाय देवत्वं गताः । श्रोत्रियो वेदविदऽवृजिनोऽपापो निष्कामो यस्सोप्याजानदेवसमः । प्रजापतिलोके यो विराट् तस्येति शेषः । ब्रह्मलोके यो हिरण्यगर्भस्तस्येति शेषः । एष वीततृष्णोर्हिर-

रण्यगर्भेण चापरोक्षीकृतः परमो निरातिशयो ब्रह्म च । अथात्र पुनः प्रश्ने याज्ञवल्को भीतो बभूव। धीमानयं राजा सर्वेभ्योन्तेभ्यो निर्णयेभ्यः उत् ऊर्ध्वं पुनः पुनर्मामामरौत्सीदावृणोत्पुनः पुनः प्रश्नेनेति हेतोः । प्रश्नव्याजेन सर्वं मदीयं ज्ञानमादातु मिच्छतीति भावः ॥ ३३ ॥

अविद्याकार्येण सुषुप्तौ मोक्षोऽन्यावस्थयोर्बन्ध इत्युक्तं दृष्टान्तं मुख्यबन्धमोक्षदार्ष्टान्तिकेन यो जयितु मनुवदाति स इति—

स वा एष एतस्मिन्स्वप्नान्तेरत्वा चरित्वा दृष्ट्वैव पुण्यञ्च पापञ्च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव ॥ ३४ ॥

स्वप्नस्थाने मिथ्यैव व्यवहृत्य जागरितस्थानं पुनरायातीत्यादिरुक्त एवार्थः ॥ ३४ ॥

स्वप्नाज्जागरितं यथा तथा देहाद्देहान्तरं यातीत्याह तद्यथेति—

तद्यथानः सुसमाहितमुत्सर्जद्यायादेव मेवाय ७ शारीर आत्मा प्राज्ञेनात्मनान्वारूढ मुत्सर्जद्याति यत्रैतदूर्ध्वोच्छ्वासी भवति॥३५॥

यथा सुष्ठुसमाहितं भाराक्रान्तमनः शकटमुत्सर्जच्छब्दं कुर्वद्गच्छेदेवमयं लिङ्गोपाधिक आत्माप्राज्ञेन परेणात्मनाक्रान्तो लुप्तस्मृतिर्मर्मसुवेदनयार्त्तिं शब्दं कुर्वन्याति कदा यदा एतद्गमनं यथास्यात्तथोर्ध्वोत्कृष्टश्वासवान्भवति ॥ ३५ ॥

कदोर्ध्वश्वासः कथं वा देहं त्यजतीत्याह स इति—

स यत्राय मणिमानं न्येति जरयावोपतपतो वाणिमानं निगच्छति तद्यथाम्रं वोदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्यत एवमेवायं पुरुष एभ्योङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव ॥३६॥

उपतपज्ज्वरादिरोगस्तेन जरया वाणिमानं क्षीणतांन्येति नितरां याति यदा सोयं स्थूलदेहस्तदोर्ध्वश्वास इति शेषः अथ तत्तत्रसमये देहप्रदेशेभ्यो वायन्नादिनामूलदेशादाम्रादि फलं यथा तथा वियुज्यपिण्डी भूतानां मूर्छितानां प्राणानां पुनर्विशेषवृत्तिलाभाय तत्तद्योनिं देहं प्रतियाति । प्रतिन्यायं यथात्रदेहे आगमनम् ॥ ३६ ॥

अथयं देहं याति सदेहोस्य प्रारब्धकर्मणानिष्पाद्यते राज्ञो गृहादि भृत्यैरिवेत्याह तदिति—

तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पयन्तेऽयमायात्ययमागच्छतीत्येवꣳहैवं विदꣳ सर्वाणि भूतानि प्रतिकल्पयन्त इदं ब्रह्मायातीदमागच्छतीति ॥ ३७ ॥

तत्र पूर्वविषये इदमुच्यते इति शेषः । उग्राच्छेदनभेदनखननादि क्रूरकर्माणः । प्रत्येनसः प्रत्यपराधं चोरादि दण्डनादौ नियुक्ताः । सूताः सङ्करजाति विशेषाः । ग्रामरक्षकाश्च राजात्रागमिष्यतीति बुद्धान्नपान गृहादिपूर्वमेव संपाद्यं प्रतीक्षन्ते यथा तथा भूतानि पञ्चीकृतानीन्द्रिय देवताश्च संपादितभोगसाधनानि एवं विदं स्वकृत कर्मफलज्ञं सकामकर्मिणमायान्तं मिदमिदानीं ब्रह्मभोक्तात्मा आयातीति प्रतीक्षन्ते ॥ ३७ ॥

देहाद्गच्छन्तं केसहगच्छन्तीत्यत आह तद्यथेति—

तद्यथा राजानं प्रतियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योभिसमायन्त्येव मेवेममात्मान मन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३८ ॥

यथा गन्तुमिच्छामात्रेण युतं राजानं सर्वतः स्वयमायान्ति भृत्याः तथान्तकाले यदा गन्तुमुच्छ्वसिति तदा प्राणइन्द्रियादीनि गन्तुमेकी भूयात्मानमायान्त्याभिमुख्येन ॥ ३८ ॥

इति तृतीयम् ।

अथोक्तमनुवदन्देहाद्गमनरीतिमाह स इति—

स यत्राय मात्माबल्यं न्येत्यसम्मोहमिवन्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैष चाक्षुषः पुरुषः पराङ् पर्य्यावर्त्तते तथा रूपज्ञो भवति ॥ १ ॥

सो यमात्मा यदा जरादिभिरबलत्वमविवेकित्वरूपमोहं वादेहतोबुद्धितः प्राप्नोति ततः प्राणा इन्द्रियाणि गन्तुमेन मात्मान मभ्यायान्ति ततो यदाचाक्षुषः पुरुषश्चक्षुर्देवतादित्यं परावृत्य गच्छत्यथ चक्षुषारूपं न जानाति तदा स आत्मा तेजसामिन्द्रियाणां मात्राः सूक्ष्मस्वरूपाण्यादाय हृदयाकाशं याति ॥ १ ॥

ततः किं तद्वाहैकी भवतीति—

एकी भवति न पश्यतीत्याहुरेकी भवति न जिघ्रतीत्याहुरेकी भवति न रसयत इत्याहुरेकी भवति न वदतीत्याहुरेकी भवति न शृणोतीत्याहुरेकी भवति न मनुत इत्याहुरेकी भवति न स्पृशतीत्याहुरेकी भवति न विजानातीत्याहुस्तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वा न्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणो नूत्क्रामति प्राणमनूत्क्रामन्त ॅं सर्वे प्राणा अनूत्क्रामन्ति स विज्ञानो भवति स विज्ञानमेवान्ववक्रामति तं विद्याकर्मणी समन्वारभेते पूर्व प्रज्ञा च ॥२॥

तदा चक्षुरादीनां मनो बुद्ध्योश्च लिङ्गदेहेनैकीभावेजना वदन्ति नायं पश्यतीत्यादि ततो हृदयस्याग्रं स्वनिर्गमननाड़ीमुखद्वारं प्रद्योत ते वासनामय बुद्धिवृत्तिद्वाराजानात्यनेन मयागन्तव्यमिति। ततश्चक्षुरादिदेशेभ्यो वियुज्यतेन ज्ञातेन द्वारेण निर्याति तं निर्गच्छन्तं जीवात्मान मनुप्राण वायुस्तमनुप्राणा इन्द्रियाणि निर्यान्ति । अत्रेदं

ज्ञेयम् सहैव सर्वे निर्यान्ति अनुपदन्तु प्रधानेतर भावमात्रं बोधयति नतुक्रममिति । अथ निर्गमन समये कर्मवासना वशतः सविज्ञानो विशेषज्ञानवान्भवति सर्वोजनः। तथाचयं यं वापिस्मरन्भावमितिस्मृतेः विज्ञानविषयमेव भावं याति । अथ विद्योपासनाकर्मच शुभाशुभात्मकं पूर्वप्रज्ञातीत जन्मादिवासना चैतत्त्रयं भाविभोगसाधनं तं जीवात्मान मनुगच्छति ॥ २ ॥

अन्तकालेस्मृतभावेभिमानं कृत्वा पूर्वदेहाभिमानं त्यजतीति दृष्टान्ते नाह तदिति—

तद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसᳫंहरत्येव मेवाय मात्मेदᳫं शरीरं निहत्याऽविद्यां गमयित्वाऽन्य माक्रममाक्रम्यात्मान मुपसᳫंहरति ३

तत्तस्मिन्नुक्तेर्थे दृष्टान्त उच्यते इति शेषः । कीटविशेषो यथा तृणान्तं गत्वान्यमाक्रमणीयं तृणं गृहीत्वा तत्रैव देहं नयति तथा जीवः पूर्वं देहं निपात्याचेतनं कृत्वा स्मृतमन्यदेहं प्राप्यमभिमानेन गृहीत्वा तत्रैव लिङ्गदेहं नयति ॥ ३ ॥

अथ यमन्यं देहं याति सदेहः किमुपादानक
इत्यत आह तद्यथेति—

तद्यथा पेशस्कारी पेशसोमात्रामुपादा-
यान्यन्नवतरं कल्याणतर ँ रूपं तनुते एव
मेवाय मात्मेद ँ शरीरं निहत्याऽविद्यां ग-
मयित्वान्यन्नवतरं कल्याणतर ँ रूपं कुरुते
पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा
ब्राह्मं वाऽन्येषां वा भूतानाम् ॥ ४ ॥

यथा सुवर्णकारः भूषणादि रूपसुवर्णस्य ख-
ण्डमादाय नवीन मति सुन्दरं भूषणादि करोति
तथात्माऽदृष्टद्वारापित्रादिलोकयोग्यं देहान्तरं पा-
ञ्चभौतिक मेवेति भावः ॥ ४ ॥

अथ ब्रह्मस्वरूपोपियैस्तत्तदाकारोभात्यात्माता-
नुपाधीनाह सवै इति—

स वा अयमात्मा ब्रह्मविज्ञानमयो मनो-
मयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवी-
मय आपोमयो वायुमय आकाशमयस्तेजो-
मयोऽतेजोमयः काममयोऽकाममयः क्रोध-
मयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमय-

एतद्यदेतदिदम्मयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन अथोखल्वाहुः काममय एवायं पुरुष इति स यथा कामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्मकुरुते तदभिसम्पद्यते ॥ ५ ॥

विज्ञानं बुद्धिः तन्मयः पूर्णत्वेन तत्सन्निकर्षात्तदाकारः एवमग्रेपि । अतेजोन्धकारः । कामोभिलाषोऽकामः शान्तिः । क्रोधनिवृत्तिरक्रोधः । विहितप्रतिषिद्धौ धर्माधर्मौ । इदं प्रत्यक्षमदः परोक्षम् । एतदुभयमयत्वं यद्यस्मात्तत्तस्मादेतत्सर्वमयत्वम् । करणं नाम नियताक्रिया । चरणन्त्वनियता । तथा च नियमेन सत्कर्मशीलः साधुरनियमेनापि पापाचरणशीलः पापी । अथ पुण्यः पापस्तु सकृदेव कृतेन पुण्येन पापेन भवतीति विवेकः । अथ काममयत्वमेव सर्वोपाधिरूपजगन्मूलमिति केचिदाहुः यतः पुरुषः प्रथमं यदिच्छति ततस्तत्क्रतुस्तन्निश्चयी भवति ततस्तदर्थं कर्म कुरुते ततस्तादिष्टं फलं लभते ॥ ५ ॥

ब्राह्मणार्थे मन्त्रमवतारयति तदिति—

तदेषश्लोको भवति तदेवसक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययं तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण इति नुकामयमानोऽथाकामयमानो यो कामो निष्काम आप्तकाम आत्मकामः न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति ॥ ६ ॥

तत्तस्मिन्नुक्तेर्थे मन्त्रोस्ति । लिङ्गदेहस्य मनः प्रधानत्वान्मनसि लिङ्गशब्दः। यत्रफले लिङ्गरूपं मन आसक्तं भवति पुंसः तत्रासक्तः सन् तदर्थं कृतेन कर्मणा सह सहस्थेन तदेव फलमेति । तत इह यत्किञ्चित्कर्मफलाय कृतं तस्य फलभोगेनान्तं नाशं प्राप्य पुनः कर्मणे कर्मकरणाय परलोकादेतल्लोकमायाति इत्युक्तरीत्या तु सकामो गमनागमनरूपसंसारं प्राप्नोति अथ यस्तु आत्मैककामत्वेनाप्तकामत्वान्निष्कामतया कामनारहितो न किंचिदनात्मवस्तु कामयते तस्य तु प्राणा न शरीरान्निर्गच्छन्ति गन्तव्य वासनाभावात् । किन्तु जीवति देहे यथा तत्वज्ञानेन ब्रह्मत्वं तथैव मृतेपि

देहे इत्यर्थः लिङ्गभङ्गेन जगदाकारेणाऽभानमात्रं वै लक्षण्यमिति भावः ॥ ६ ॥

कामएव देहान्तरगमनरूपसंसारस्य हेतुस्तद्राहित्यं च मुक्तेरित्युक्तार्थे मन्त्रं वक्तुमाह तदिति—

तदेषश्लोको भवति। यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदिश्रिताः अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति तद्यथा हि निर्ल्वयनीवल्मीके मृता प्रत्यस्ताशयीतैवमेवेद ँ शरीर ँ शेतेथायम शरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥ ७ ॥

वुद्धौ वासना रूपेण स्थिताः स मूला एषणा यदा नश्यन्ति तदैव मरणरहितो भवति यतोत्रैव देहे ब्रह्मत्वमाप्नोति न गत्वेति भावः ननु सति देहे ब्रह्मत्वं चेन्न गतं तर्हि देहित्व मत आह यथा विलादौ सर्पेण त्यक्ता मृता सर्पत्वक् दृश्यमानापि स्वत्वेनागृहीतैव वर्तेत तथात्मविद्देहोपि। अयं मुमुक्षुस्तु अथात्मनो ब्रह्मत्ववोधानन्तरं देहित्व-

मृतत्वभावशून्यः प्राणस्सर्वचेष्टा हेतुर्ब्रह्मचिदेव भवति ॥ ७ ॥

उक्तार्थस्य विस्तरेण प्रतिपादकान्मन्त्रान्वक्तुमाह तदिति—

तदेते श्लोका भवन्ति । अणुः पन्था विततः पुराणो मा ँ स्पृष्टोऽनुवित्तो मयैव तेन धीरा अपि यन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः ॥ ८ ॥

दुर्विज्ञेयत्वात्सूक्ष्मो नन्तत्वाद्विततो नित्यत्वात्पुराणो मयालब्धत्वान्मां स्पृष्टो मत्संबन्धी चिरं मयैवानुवित्तोनुभूतो यो ब्रह्मज्ञानरूपः पन्थास्तेन धीरा विवेकिनो विमुक्तास्सन्त एवेतोस्मात्पतिताद्देहादनन्तरं स्वर्गं मोक्षं प्राप्नुवन्ति ॥ ८ ॥

कफादिरसपूर्णनाडीर्मुक्तिमार्गं वदन्तोमूढा इत्याशयेनाह तस्मिन्निति—

तस्मिञ्छुक्लमुतनीलमाहुः पिङ्गल ँ हरितं लोहितं च एष पन्था ब्रह्मणाहानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च ॥ ९ ॥

तस्मिन्मुक्तिमार्गे शुक्लादिरसंकेचिदाहुः परन्तु

ब्रह्मणा तत्त्वविदानुभूनस्तु एष ब्रह्मज्ञानमेव मुक्ति-मार्गः तेनैव मार्गेण निष्काम पुण्यकृत् ब्रह्मवि-द्भूत्वा तैजसश्चिन्मयो भवति ॥ ९ ॥

ज्ञानमार्गस्तुतयेन्य मार्ग निन्दति अन्धमिति—

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते
ततो भूय इव ते तमोय उविद्यायाꣳ रताः॥१०॥

अविद्यामवैदिक क्रियां ये कुर्वते तेन्धमज्ञानं तमो लभन्ते। ततोप्यधिक मिवतमस्ते ये वैदिक्या मेव क्रियायां रताः ॥ १० ॥

तमो लाभेदोषमाहानन्दा इति—

अनन्दानामतेलोका अन्धेन तमसाऽऽवृताः
ताꣳस्ते प्रेत्याभिगच्छन्त्य विद्वाꣳसोऽबु-धोजनाः ॥ ११ ॥

अवुधआत्मा वगमहीना अतएवाविद्वांसोऽज्ञा-ये ते मृत्वा तान् लोकान् यान्ति येह्यज्ञानपूर्णा अनन्दानित्य सुखहीना नाम प्रसिद्धाश्चतुर्दश॥११॥

ज्ञानमार्गगस्य दुःखराहित्यं दर्शयत्यात्मानमिति—

आत्मानं चेद्विजानीया दयमस्मीति पू-रुषः किमिच्छन्कस्य कामाय शरीर मनुसं-ज्वरेत् ॥ १२ ॥

यदिचिदात्मानमयमस्मीति साक्षात्कुर्यात् तर्हि सर्वात्म लाभेनेच्छाया विषयस्य कर्तुश्च भेदस्या भावात्किमिच्छन् कस्यार्थे शरीर संबन्धेन दुःखी-स्यान्नैवस्यात् ॥ १२ ॥

कृतकृत्यताफलं च ज्ञानमार्गगस्येत्याह यस्येति—

यस्यानुवित्तः प्रतिबुद्धआत्माऽस्मिन्संदेह्यो गहने प्रविष्टः स विश्वकृत्स हि सर्वस्य कर्ता तस्य लोकः सउलोक एव ॥ १३ ॥

संदेह्यो संदेहेनेकविध दुःखोपचये गहनेरागद्वे-षादि विषमेस्मिन्देहे प्रविष्टो यश्चिदात्मा स यस्या-त्मत्वेन प्रतिबुद्धत्वादनुवित्तोलब्धः स हि यतस्स-र्वस्य कर्ता ब्रह्मत्वादतो विश्वकृत् किंच तस्य सर्वो लोक आत्मा स च लोक एवात्मैव नत्वात्मनोन्यः पदार्थः ॥ १३ ॥

कृतकृत्यतायामात्मविदोनुभवमाहेहैवेति—

इहैव सन्तोथ विद्मस्तद्वयं न चेदवेदि-र्महती विनाष्टिः येतद्विदुरमृतास्ते भवन्त्य-थेतरे दुःखमेवापि यन्ति ॥ १४ ॥

इहोक्तविधदेहे एव सन्तोवयं कथं चित्तद्ब्र-

ह्यजानीमः यदिनाज्ञासिषन्तर्ह्यत्रेदिः वेदीज्ञानी नस्याम् तथा च महाननन्तो नाशो जन्ममरण-रूपः अथ वयमिव येन्येपि विदुस्तेप्यमृता इतरे त्वज्ञादुःखमेव यान्ति सदा ॥ १४ ॥

निर्भयत्वं फलं चाह यदेति—

यदैतमनुपश्यत्यात्मानं देवमञ्जसा ई-शानं भूतभव्यस्य न ततो विजुगुप्सते॥१५॥

त्रिकालस्य नियामकं देवं चिद्रूपमञ्जसा साक्षादात् मत्वेन अनुअविद्यानिवृत्यनन्तरं पश्यति यदा तदा तत ईशादात्मानं न गोपायितु मिच्छति भिन्नाद्धि चोरादेर्भीतो गोप न मिच्छति यतः॥१५॥

चित्साक्षीकत्वात्कालोपीशकार्यमेवेति नेशोग्रस्य ते कालेनेत्युक्तयेशस्य कालनियामकत्वं द्रढ-यति यस्मादिति—

यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते त-द्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् १६

संवत्सरात्मकः कालोहोरात्र रूपेण यस्मादीशा दर्वागन्यत्रैव पदार्थे भ्रमति नेशे इति भावः तद-विनाशि सूर्यादीनामपि ज्योतिः प्रकाशकं चैतन्य

मिति यावत् दीर्घायुष्कामादेवा आयू रूपेणोपासते ॥ १६ ॥

आत्मकामास्तु नित्याधिष्ठान चिद्रूपाएव भवन्तीत्याह यस्मिन्निति—

यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ॥ १७ ॥

पञ्चजनसंज्ञकानि देवपितृसुरगन्धर्वरक्षांसि पञ्च तथा काशो यस्मिन्नधिष्ठानेतमेवात्मान मविनाशि ब्रह्माहं मन्येजानाम्यतो विद्वानहमप्य मृत एवेत्यर्थः ॥ १७ ॥

आत्मनश्चिद्रूपत्वं साधयितुमाह प्राणस्येति—

प्राणस्य प्राणमुत चक्षुषश्चक्षुरुतश्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः ते निचिक्युर्ब्रह्म-पुराण मग्र्यम् ॥ १८ ॥

प्राणचक्षुरादीनां जडानां प्राण न दर्शनादि सामर्थ्यं न संभवतीति प्राणादेरपि प्राणादिं प्राणनादि हेतु मात्मानं ये विदुस्तग्र्यं स्रष्टेरग्रेपि सिद्धं पुराणं चिरन्तनं ब्रह्मनिश्चितवन्तः सर्व हेतु चिद्रूपत्वा देव ब्रह्मणापि ॥ १८ ॥

चिद्ब्रह्मबोधेसाधनमचिद्बोधे दोषं चाह मनसेति—

मनसैवानुद्रष्टव्यं नेह नानास्ति किञ्चन
मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति १९

चिद्ब्रह्मविचारजस्वाकारमनोवृत्त्यैवाविद्यावृतिभङ्गे प्रकाशते अथेहास्मिन्ब्रह्मणि द्वैतं नास्ति वास्तवम् यस्तु वस्तुतो द्वैतमिवात्र जानाति स मृत्योः सकाशान्मरणमाप्नोति मरणे जन्मावश्यं भावात्सदा संसरतीत्यर्थः ॥ १९ ॥

द्वैताभावे कथं द्रष्टव्यता तत्त्वेवाद्रष्टान्योवाच्य इत्येत आहैकधेति—

एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् विरजः पर आकाशादज आत्मा महान्ध्रुवः॥२०॥

ध्रुवमचलं सदैकरसमप्रमयमप्रमेयं ज्ञानाविषयमेतद्ब्रह्मेत्यनेनैवैकत्वप्रकारेण द्रष्टव्यम् द्रष्टात्मा तु वस्तुतः कर्मरजो रहितो पञ्चीकृता काशादपि परः सूक्ष्मो तो जन्मादिरहितो महानपरिच्छिन्नो ध्रुवः तथाचाभेदेप्यौपाधिको द्रष्टृत्वादि भेद इति भावः ॥ २० ॥

श्लोकैर्मोक्षस्वरूपनिरूपमुपसंहरति तमिति—

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः

नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनꣳ हि तदिति ॥ २१ ॥

तस्मात्तमुक्तविधात्मानमेव गुर्वादितो ज्ञात्वा प्रज्ञामपरोक्षधियं जनयेद्धीरो धीमान्ब्राह्मणो मुमुक्षुः किंचापरोक्षधीजननाय बहुशब्दचिन्तनमध्ययनादिरूपं न कुर्यात् यतः श्रमकरं वाण्यास्तत् । इतिः पूरकः ॥ २१ ॥

अथोक्तविधात्मन्येवाखिलवेदतात्पर्यमिति वक्तुमाह सवै इति—

स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशीसर्वस्येशानः सर्वस्याधिपतिः सनसाधुना कर्मणा भूयान्नो एवासाधुनाकनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनैतमेव विदित्वा मुनिर्भवति एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति एतद्धस्मवैतत्पूर्वे

विद्वाꣳसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नो यमात्माऽयं लोक इति ते हस्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्चव्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणो भेह्येते एषणे एव भवतः स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गोन हि सज्यतेऽसितो न व्यथते नरिष्यत्ये तमुहैवैतेन तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उहैवैष एष ते तरति नैनं कृता कृते तपतः ॥२२॥

प्राणेषु प्राणानां वाह्याऽऽन्तरकरणानां मध्ये विज्ञानं वुद्धिर्या तन्मयो यो य एव च हृदयस्यान्तराकाशः कूटस्थ चैतन्यं तत्र शेते सान्निध्यं याति सुषुप्तौ स एष जीवात्मा वस्तुतो महाननन्तो जनिरहितः सर्वस्य ब्रह्मादेर्वशी स्ववशेकर्तेशानः प्रेरकोधिपतिः पालको धर्मेण न वर्द्धते नापि पापेन क्षीयते यत एष सर्वस्य धर्मादेरपीशिताधिपतिः स्वतन्त्रः पालकः। तथा लोकानां चतुर्दशानां जनानां

चाऽसांकर्याय वर्णाश्रमादिव्यवस्थाया धारयिता सेतुः क्षेत्राणां यथा तथैष ईश्वराश्चिदात्मा अन्यथा मर्यादा भज्येतेति भावः । तमेतमुक्तं चिदात्मानं ब्राह्मणा ब्रह्मत्वायोद्यता निखिलवेदाध्ययनेन यज्ञदानतपोभिश्च ज्ञातुमिच्छन्ति । अनाशकेनेति तु चतुर्णां विशेषणं अनाशकमनशनं कामनाया इति कामनारहितेनेत्यर्थात् । आत्मविदेव मुनिर्भवत्यन्यावित्तुमननवान् कर्मी चेति भावः यत आत्मरूपलोकेच्छयैव कर्माणि त्यजन्ति न्यासिनः कुतस्त्यजन्तीत्यत आह तत्तत्रास्मिन् त्यागे एतत्कारणम् यतोहस्म वै प्राचीना आत्मविदः प्रजां प्रसिद्धलोकसाधनं पुत्रकर्मादिकं नेच्छन्ति येषां नित्यात्मरूपोयं लोकः फलं ते वयं प्रजया प्रजादिना किमनित्यमन्यल्लोकादि फलं साधयिष्याम इत्याशयेनेति । तर्हि पूर्वे विद्वांसः किं कृतवन्तस्तत्राह ते विद्वांसः पुत्रादीच्छाभ्य उपरम्य भिक्षाटनं चक्रुः यद्यप्याद्यैषणयोर्लोकार्थत्वेनाभेदस्तथा वित्तेच्छापि लोकार्थैव सतामिति लोकेच्छापि न पृथग्भवितुमर्हति वित्तेच्छाया इत्येषणैकत्वमेवायाति यद्वान्त्यासाध्याद्ये साधने इति द्वे एवैषणे

तथापि स्त्रीपुत्रार्थैवेति त्रयाणामेव प्रधानत्वं विषयेष्वित्येषणात्रयोक्तिरिति भावः। कुतस्त्यजन्त्यात्मेच्छया कर्माण्यत आह नेतीति निर्द्धारितो यमात्मा यतः सूक्ष्मनिरवयवासङ्गस्वभावत्वेनेन्द्रियाग्राह्यो हानिसङ्गरहितो वन्धव्यथानाशरहितो निर्विशेषो साध्य इति यावत् । तस्मादेतमुक्तविधात्मज्ञमतो हेतोरिदं पापं पुण्यं वा हमकरवमतो दुःखं सुखं वा वश्यं भविष्यतीत्येते शोकहर्षचित्तवृत्ती न प्राप्नुतः यत एष आत्मविदे ते पुण्यपापे ज्ञानाग्निना दहति अतएव च कर्मकरणाकरणफलरूपतापोप्येनं न स्पृशत्यसङ्ग निर्विशेषात्म भूतम् २२

उक्तार्थे मन्त्रमवतारयति तदिति—

तदेत दृचाभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य न वर्द्धते कर्मणा नो कनीयान् । तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति । तस्मादेवं विच्छान्तोदान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं

पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजोऽविचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोकः सम्राडेनं प्रापितोसीति होवाच याज्ञवल्क्यः सोहं भगवते विदेहान्ददामिमां चापि सहदास्यायेति ॥ २३ ॥

नेति नेतीत्याद्युक्तात्मस्वरूपो महिमानित्यः यतः पुण्यपापाभ्यां वृद्धिह्रासौ न याति किन्तु तस्य महिम्न एव पदवित्स्वरूपवित्स्यात् तं महिमानं ज्ञात्वा च पापकेन शुभाशुभाख्येन न युज्यते । यतो न लिप्यते तस्माच्छमदमादियुक्त एकाग्रो भूत्वा देह एव जीवन्नेव चिदात्मानं सर्वं चात्मरूपं जानाति । एवं चैनमात्मज्ञं कर्म न व्याप्नोति नापि संसारतापयुतं करोति सत्वाप्नोत्यात्मत्वेन दहति च ज्ञानाग्निना कर्म । तथा च बन्धकत्वेन पापाख्यशुभाशुभकर्मणा रजसा कामेन सर्वात्मत्वे संशयेन च रहितो ब्रह्मविद्भवति मुख्यः । एष सर्वात्मस्वरूपो ब्रह्माख्यो लोको हे राजन् तमद्यमया प्रापितो सित्वमेवमुपदेशेन । स ब्रह्मत्वं गमितो हं विदेह देशान्निजसर्वराज्यं मां च दास-

कर्म कर्तुं ददामीत्यत्र सर्वस्वदानोक्त्या नैतस्माद् ब्रह्मभावात्परं किञ्चिदपेक्ष्यं नाप्ये तदुपदेशस्य तुल्याकाचिदस्ति गुरुदक्षिणेति सूचितम् ॥ २३ ॥

अथात्मोपासनं सफलमाह स इति—

स वा एष महानजआत्मान्नादो वसुदानो विन्दते वसु य एवं वेद ॥ २४ ॥

उक्तमात्मानं सर्व प्राणिस्थत्वेनान्नभुक्त्वा दीश्वरत्वेन कर्मफलरूपधनदत्वाच्चान्नादत्व वसुदानत्व गुणाभ्यां युक्तं योऽध्यायति सोप्यन्नं धनं च वहुलभते ॥ २४ ॥

प्रकृतं ब्रह्मात्मत्वमुपसंहरति स वै इति—

स वा एष महानजआत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्माऽभयं वै ब्रह्माभय ँ हि वै ब्रह्म भवति य एवं वेद ॥ २५ ॥

जरामरणराहितत्वादमृतोनाश शून्यो जन्मादि विकाराभावात् त्वभयः अभयं च ब्रह्मेति वै प्रसिद्धं लोके तस्माद् ब्रह्म स उक्त एष आत्मा । अभयं ब्रह्मात्मानं यो वेद सोप्यभयं ब्रह्मैव भवति ॥२५॥

इति चतुर्थम् ।

शास्त्रेणो पपत्त्याचोक्तमेव ब्रह्मात्मज्ञानमभ्यासेन दृढ़ीकरणाय द्वितीयाध्याय गतचतुर्थ ब्राह्मणं किञ्चिद्वैलक्षण्येन पुनर्वक्तुमाहाथेति—

अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्री प्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योन्यद्वृत्तमुपा करिष्यन् ॥ १ ॥

अथ विवक्षितार्थनिरूपणानन्तरं स एवार्थः पुनरुच्यत इति शेषः । स्त्रीणां या गृहकृत्यविषया प्रज्ञात् द्युतैव तर्हि तदा कनिष्ठा भार्या कात्यायनी। गार्हस्थ्यादन्यद्वृत्तं संन्यासस्तत्स्वीकरिष्यन् १

मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थाना दस्मिहन्ततेऽनया कात्यायन्याऽन्तं करवाणीति ॥ २ ॥

हे मैत्रेयि इति संबोध्यारे प्रव्रजिष्यन्नित्यादुवाच अन्तं निर्णयं विभागम् ॥ २ ॥

सा होवाच मैत्रेयीयन्नुम इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्स्यांन्वहं तेनामृ-

ताऽऽहो ३ नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवित ए स्यादमृतत्वस्य तु नाऽऽशाऽस्ति वित्तेनेति॥ ३॥

यदि धनपूर्णा संपूर्णापि भूर्मदधीना भवेदपि तथापि तेन धनेनाहममृता भविष्याम्यथवा नेति पृष्टो न न किन्तु धनिनामिवस्यात् सुखेन जीवनमात्रमित्युवाच मुनिः ॥ ३ ॥

सा होवाच मैत्रेयी येनाहं नामृतास्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ॥ ४ ॥

येन न मृतिनिवृत्तिस्तद्धनं नेच्छामि किन्त्वमृतत्वाय यज्जानासि तदेव ब्रूहीत्युवाच सा ॥ ४ ॥

स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रियमवृधद्धन्त तर्हि भवत्येतद्व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ५ ॥

भवन्ती पूर्वमप्यस्माकं प्रिया सती संप्रति प्रियमेवाऽवृधद्वर्द्धितवती निश्चितवती तस्माद्धन्तेदानीं हे भवति तुभ्यमेतदमृतत्वसाधनं वक्ष्यामि

परन्तु मे वचनं विचारयावधानतया ॥ ५ ॥

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति। न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवन्ति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्त्या-

त्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे वेदानां कामाय वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदꣳ सर्वं विदितम् ॥ ६ ॥

यत आत्मार्थमेव सर्वं प्रियं भवत्यतो रे मैत्रेयि स एव श्रवणमनननिदिध्यासनेन साक्षात्कर्तव्यः तथा च सर्वमनात्मवस्त्वात्मतया ज्ञातं भवति ॥६॥

कथमात्मज्ञानेऽनात्मज्ञानमत आह ब्रह्मेति—

ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद वेदास्तं परादुर्यो-

न्यत्रात्मनो वेदान्वेद भूतानि तं पराद्‌दुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानीदꣳ सर्वं यदयमात्मा ॥ ७ ॥

सर्वमात्मैव यतो तो यत्किंचिदप्यात्मव्यतिरेकेण पश्यन्नैवात्मज्ञो भवेत् न चात्मज्ञानं विना मोक्ष इत्यात्मनो भेदेन ज्ञातं वस्तुज्ञातारं परादान्मोक्षाच्च्युतं कुर्यात् ॥ ७ ॥

जगदात्मनोरभेदस्य साधकेसामान्यविशेषभावे दृष्टान्तत्रयमाह स इति—

स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ८ ॥ स यथा शङ्खस्यध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥९॥ स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दा-

च्छब्दनुयाद् ग्रहणाय वीणायै तु ग्रहणेन वी-
णावादस्य वा शब्दो गृहीतः ॥ १० ॥

यथा शङ्खशब्दात् सामान्याच्छङ्खशब्दगतो
वायुपूरणाभिव्यक्तावान्तरशब्दविशेषः शङ्ख-
वीणादिशब्दविशेषश्च सामान्यान्न भिद्यते तथा
जगत्सत्तास्फुरणाख्यो विशेषः सामान्यसत्तास्फु-
रणरूपादात्मनो न भिद्यत इति भावः।८।९।१०॥

कार्यकारणभावादपि सर्वमात्मैवेत्याह स इति—

स यथार्द्रैधाग्नेरभ्याहितस्य पृथग् धूमा
विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य
निश्वसितमेतद्य ऋग्वेदो यजुर्वेदः सामवेदो-
थर्वाङ्गिरस इतिहासः पुराणं विद्याउपनिषदः
श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्याना-
नीष्ट ँ हुतमासितं पायितमयं च लोकः प-
रश्चलोकः सर्वाणि च भूतान्यस्यैवैतानि
सर्वाणि निश्वसितानि ॥ ११ ॥

यथार्द्रैन्धनाग्नेः कार्यं धूमास्तथा वेदादि व्या-
ख्यानान्ताः शब्दाः यागहोमभुक्तपीतादिपदा-
र्थाश्च परमात्मनो निश्वसितं कार्यमिति भावः॥११॥

अनेकभेदवतो जगतोन्ते चिदात्मन्येकीभावादप्यात्मैव सर्वमित्याशयेन दृष्टान्तानाह स इति—

स यथा सर्वासामपाꣳ समुद्र एकायनमेवꣳ सर्वेषाꣳ स्पर्शानां त्वगेकायनमेवꣳ सर्वेषां गन्धानां नासिके एकायनमेवꣳ सर्वेषाꣳ रसानां जिह्वैकायनमेवꣳ सर्वेषाꣳ रूपाणां चक्षुरेकायनमेवꣳ सर्वेषाꣳ शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्वेषाꣳ सकल्पानां मनएकायनमेवꣳ सर्वासां विद्यानाꣳ हृदयमेकायनमेवꣳ सर्वेषां कर्मणाꣳ हस्तावेकायनमेवꣳ सर्वेषामानन्दानामुपस्थ एकायनमेवꣳ सर्वेषां विसर्गाणां पायुरेकायनमेवꣳ सर्वेषामध्वनां पादावेकायनमेवꣳ सर्वेषां वेदानां वागेकायनम् ॥ १२ ॥

त्वगादि शब्दानां त्वगादि साध्यसामान्य स्पर्शादयोत्रार्थाः । विद्याशब्दस्य ज्ञानमर्थः । हृदयं बुद्धिः । वेदा उक्तयः । यथा नेकविधजलादीनामे-

कायनमेकी भावस्समुद्रादि तथा सर्वेषां स्व आ-
त्मेत्यर्थः ॥ १२ ॥

जगदात्मनोर्भेदस्त्वौपाधिक इत्याह स इति—

स यथा सैन्धवघनोऽनन्तरोऽवाह्यः कृत्स्नो
रसघनएवैवं वा अरेऽयमात्माऽनन्तरोऽवाह्यः
कृत्स्नः प्रज्ञानघन एवै तेभ्यो भूतेभ्यः स-
मुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञा-
स्तीत्परे ब्रवीमीति होवाच याज्ञवल्क्यः ॥१३॥

यथाग्न्यादिसंसर्गेण रूपान्तरं गत इवापि
लवणखण्डो वस्तुतो वाह्याभ्यन्तरभेदराहितः स-
र्वतः सर्वोपि रसरूप एव । एवमविद्या तत्कार्य-
पञ्चभूतैर्जगद्रूप इवाप्यात्मा वस्तुतः प्रज्ञानमूर्ति-
रेव । अतएव भूतेभ्यो संवद्धमात्मानं ज्ञात्वान-
न्तरं नष्टानि तानि भूतान्यनु स्वयमात्मापि विन-
श्यति नाम प्रेत्य वास्तवरूपं ज्ञात्वा विशेषसंज्ञा न
भवति वोधमात्रस्संपद्यत इति भावः ॥ १३ ॥

प्रेत्य विनश्यतीति पदाभ्यामभावमात्मनो व-
दतीति भ्रान्तमैत्रेयी प्रश्नोत्तरमाह सेति—

सा होवाच मैत्रेय्यत्रैव मा भगवान्माहोन्त-

मापीपिपन्न वा अहमिमं विजानामीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरे यमात्माऽनुच्छित्ति धर्मा ॥ १४ ॥

अत्रैवात्मन्येव भवान्मां मोहान्तं मोहमध्यम् आपीपिपत्प्रापितवान् अतः संशयादिममात्मानं निश्चितमहं न जानामीति श्रुत्वा विशेषसंज्ञा तदभावश्चोपाधिना न वस्तुतः तस्मादात्मा तु विनाशापक्षय रहित एवेत्येव निश्चय इत्युवाच याज्ञवल्क्यः १४

अथाध्यायचतुष्टयेनोक्तात्मस्वरूपं स्मारयन्नात्मविद्याप्रकरणमुपसंहरन्नाह यत्रेति—

यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतर ँ रसयते तदितर इतरमभिवदति तदितर इतर ँ शृणोति तदितर इतरं मनुते तदितर इतर ँ स्पृशति तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन क ँ रसयेत्तत्केन कमभिवदेत्तत्केन क ँ शृणुयात्तत्केन कं मन्वीत तत्केन क ँ स्पृशेत्तत्केन कं विजानीयाद्येनेद ँ सर्वं

विजानाति तं केन विजानीयात्स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न-रिष्यति विज्ञातारमरे केन विजानीयादित्युक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ॥ १५ ॥

यत्रात्माचिदज्ञानदशायां द्वैतभ्रमस्तत्रान्यस्सन्द्रष्ट्रादिरन्यं दृश्यादिपदार्थं पश्यतीत्यादि यत्र त्वात्मचित्साक्षात्कारदशायां सर्वमात्मैवाभूत् द्वैतभ्रमो नष्टस्तत्र भेदाभावान्नद्रष्टृत्वादिकम् किंच येन चिदात्मना सर्वं जानाति तं चिदात्मानं केन जानीयात् चिदन्यस्य चिदन्तरस्य चाभावान्न केनापीति भावः तस्मात्सर्वापवादेन विज्ञातस्स्वयं प्रकाशोपचयरहितो सङ्गस्वभावो बन्धदुःखनाशरहित आत्मा तज्ज्ञानं चामृतत्वसाधन मिति सिद्धम् ॥ १५ ॥

इति पञ्चमम् ।

अथ द्वितीयाध्यायान्ते मधुकाण्डस्यैव याज्ञवल्क्यकाण्डस्य वंशमाहाथेति—

अथवꣳशः पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥ आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद्गौतमः सैतवात्सैतवः पाराशर्यायणात्पाराशर्यायणो गार्ग्यायणाद्गार्ग्यायण उद्दालकायनादुद्दालकायनो जावालायनाज्जावालायनो माध्यन्दिनायनान्माध्यन्दिनायनः सौकरायणात्सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनिः॥२॥ घृतकौशिकाद् घृतकौशिकः पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्चयास्काच्चाऽऽसुरायणः त्रैवर्णेस्त्रैवर्णि रौपजन्धनेरौपजन्धनि रासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौत-

माद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातोबाभ्रवाद्वत्सनपाद्बाभ्रवः पथःसौभरात्पन्थाःसौभरोऽयास्यादाङ्गिरसादायास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणाद्दध्यङ्ङाथर्वणोऽथर्वणोदैवादथर्वादैवो मृत्योः प्राध्वꣳसनान्मृत्युः प्राध्वꣳसनः प्रध्वꣳसनात्प्रध्वꣳसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्मस्वयम्भु ब्रह्मणे नमः ॥ ३ ॥

अत्र वक्तव्यमुक्तं पूर्वत्र । १ । २ । ३ ॥

इति श्री बृहदारण्यकोपनिषत्प्रसादे चतुर्थाध्यायस्य षष्ठब्राह्मणमध्यायश्च चतुर्थः ।

अथोक्तस्याखण्डपरिपूर्णचिद् ब्रह्मात्मनोनिर्विशेषस्याविद्यया सोपाधिकस्यानुक्तान्युपासनानि वदिष्यन्पूर्वोक्तं ब्रह्मात्मनोरभेदज्ञानं मन्त्रेणानु वदति पूर्णमिति—

पूर्णमदः पूर्णमिदं पूर्णात्पूणमुदच्यते पूर्णस्य पूर्णमादाय पूर्णमेवाव शिष्यते ॥१॥

अदोब्रह्मपूर्णं व्यापितथेदमात्मतत्वमपि । यद्यपीदं पूर्णाद्ब्रह्मणउदच्यते उद्गच्छति जायते तथापि घटाद्याकाश इवा विद्यकोपाधिकृतत्वेन परिच्छेदस्य पूर्णमेव वस्तुतः । अतएवा विद्यया विस्मृतं पूर्णस्य निजवास्तव रूपस्य ब्रह्मणः पूर्णं पूर्णत्वं विद्ययादाय वुद्ध्वा पूर्णमेव सदा भवति न पुनः कदाप्यऽपूर्ण इवति भावः ॥ १ ॥

अथ ब्रह्मोपासनायां प्रतीकत्वेन प्रतिमावदोङ्कारः साधनम् तथा दमोदानं दयाचैतत्त्रयं सर्वोपासनसाधनम् यतोनाऽजितेन्द्रियोलुब्धः क्रूरो वा कश्चिदुपासनेधिकारमर्हति तत्रोङ्कारस्य प्रतीकत्वपरं मन्त्रमाहो मिति—

ओं खं ब्रह्म ॥ २ ॥

ओं शब्दश्चिदाकाशरूपं ब्रह्मेति भावये दि-
त्यर्थः ॥ २ ॥

ब्राह्मणमाहखमिति—

खं पुराणं वायुरंखमिति हस्माऽऽह कौ-
रव्यायणीपुत्रो वेदोयं ब्राह्मणा विदुर्वेदैनेन
यद्वेदितव्यम् ॥ ३ ॥

पुराणं सनातनं चिदात्मकं यत्खमाकाशं त-
देव वायुरं वायुमदाकाशम् भूताकाशादि चिदा-
काशकार्यमिति भावः इति कौरव्यायणी पुत्रआह।
ज्ञातव्यं यद् ब्रह्मतदेनेन प्रणवेनवेद जानाति सा-
धको यतस्ततोयमोङ्कारोवेदः चिदाकाशस्य वा-
चक इति भावः इति ब्राह्मणाआहुः । ब्रह्मणः का-
र्यत्वाद्वाचकत्वाद्वोङ्कारो ब्रह्मेति तात्पर्यम् ॥ ३ ॥

इति बृहदारण्यकोपनिषत्प्रसादे पञ्चमाध्या-
यस्य प्रथमं ब्राह्मणम् ।

अथ दमादिसाधनविधानायाहत्रया इति—

त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्र-
ह्मचर्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्र-
ह्मचर्यं देवा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो

हैतदक्षरमुवाचद इति व्यज्ञासिष्टा३ इति व्यज्ञासिस्मेति होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ १ ॥ अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानीति तेभ्यो हैतदेवाक्षरमुवाचद इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ॥ २ ॥ अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाचद इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषादैवीवागनु वदतिस्तनयित्नुर्ददद इति दाम्यत दत्तदयध्व मिति तदेतत्त्रय ँ शिक्षेद्दमं दानं दया मिति ॥ ३ ॥

गुर्वन्ति के गुरुसेवार्थं ब्रह्मचर्यं चक्रुर्देवमनुष्यासुराः। ततस्तैरुपदिशतुभवानस्मानिति प्रार्थितो द इति वर्णमुक्त्वैतदुपदेशार्थं ज्ञातवन्तो यूय मिति पृष्टवान् पिता । ज्ञातवन्त इत्यूचुस्ते । किमिति पुनः पृष्टाः अदान्तायूयमतोदान्ता भवतेति वदसीति

देवाः लुब्धा यूयमतो यथाशक्ति दानं कुरुतेति वदसीति मनुष्याः क्रूरा यूयमतो दयां कुरुत प्राणिष्विति वदसीत्यसुरा ऊचुः । तथ्यं ज्ञातवन्तो यूयमिति पितोवाच । अथाद्यापि मेघशब्देन दकारमुपदिशति प्रजापतिः । तस्मादवश्यन्दयाद्युपादेयम् ३

इति द्वितीयम् ।

हृदयोपासनमाहैष इति—

एष प्रजापतिर्यद्धृदयमेतद्ब्रह्मैतत्सर्वं तदेतत्त्र्यक्षरꣳ हृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ॥१॥

हृदयं बुद्धिरेव यतस्सर्वमतो हृदयं ब्रह्मेत्युपासीत । अथ हृदय शब्दे त्रयोवर्णाः आहरणार्थको हृकारः दानार्थो दः गत्यर्थो यः एवं यो वेत्ति तस्मै धनाद्यानयन्ति ददति चात्मीयाः परेच गच्छति च स स्वर्गमित्यर्थ वादोयत उपासनस्यैवै तत्फलम् ।१।

इति तृतीयम् ।

हृदयब्रह्मण एव सत्यमित्युपासनमाह तदिति—

तद्वैतदेतदेव तदास सत्यमेव स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमा ँल्लोकाञ्जित इन्न्वसावसद्यएवमेतन्महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्य ँ ह्येव ब्रह्म ॥ १ ॥

हृदयाख्यं ब्रह्मैव सच्चत्यच्चसत्त्वं भूतपञ्चकं बभूव तच्चश्यापिपूज्यं सर्वतः प्रथमजं चेति सत्त्वं ब्रह्मेत्युपासको लोकान् शत्रुं च जयति ॥ १ ॥

इति चतुर्थम् ।

अथ सत्यब्रह्मणः प्रथमजत्वमादित्येद्दिणत्वोपास्य त्वं चाहाप इति—

आपएवेदमग्रे आसुस्ता आपः सत्यमसृजन्त सत्यं ब्रह्म ब्रह्मप्रजापतिं प्रजापतिर्देवा ँस्ते देवाः सत्यमेवोपासते तदेतत्त्र्यक्षर ँसत्यमिति स इत्येक मक्षरं तीत्येक मक्षरं य मित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभयतः सत्येन परिगृहीत ँ सत्यभूयमेव भवति नैवं विद्वा ँ समनृत ँ हिनस्ति ॥ १ ॥ तद्यत्तत्सत्यमसौ

स आदित्यो य एष एतस्मिन्मण्डले पुरुषो य-श्चायं दक्षिणेऽक्षन्पुरुषस्तावेतावन्योन्यस्मि-न्प्रतिष्ठितौ रश्मिभिरेषोस्मिन्प्रतिष्ठितः प्रा-णैरयममुष्मिन्सयदोत्क्रमिष्यन्भवति शुद्ध-मेवैतन्मण्डलं पश्यति नैनमेतेरश्मयः प्र-त्यायन्ति ॥ २ ॥ य एष एतस्मिन्मण्डले पु-रुषस्तस्य भूरितिशिर एक ँ शिर एकमेतद-क्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्व-रिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्यो-पनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ॥ ३ ॥ योयं दक्षिणेऽक्षन्पुरुष-स्तस्य भूरितिशिर एक ँ शिर एकमेतद-क्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे त-स्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद ॥ ४ ॥

सोमाज्याद्या आपोहुता अदृष्टरूपा आदौ भू-तपञ्चकं जनयन्ति तस्माद्विराड् जायते तस्माद्देवाः

अथ यत्सत्यं ब्रह्मतदेवादित्यरूपेणादित्यमण्डले दक्षिणनेत्रे चाध्यात्मरूपेण स्थित्वा रश्मिभिश्चक्षुषं चक्षुषादित्यं प्रकाशयति अथ नेत्रार्कमण्डलस्थ पुरुषयोर्व्याहृतेर्भूरित्येकमक्षरं शिरः भुव इति द्वे बाहू स्वः इति द्वे पादौ । नामत्वक्षिस्थस्याह मन्यस्य त्वहः अथैव मुपासकः पापहीनो भवतीत्यर्थः ॥ ४ ॥

इति पञ्चमम् ।

सत्यस्यैव ब्रह्मणो मनोयुक्तत्वेनोपासनमाह

मन इति—

मनोमयो यं पुरुषोभाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवोवा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किञ्च ॥ १ ॥

हृदयस्यान्तर्व्रीह्यादि परिमाणोभाः स्वरूपो मनसावगम्यत्वान्मनोमयो यं पुरुषः सर्वस्य स्वामी पालकः शास्ता च । फलंतूपास्य रूपता ॥ १ ॥

इति षष्ठम् ।

तस्यैवोपासनान्तरमाह विद्युदिति—

विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युद्विद्यत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युद्ध्येव ब्रह्म ॥ १ ॥

तमोविद्यति खण्डयतीति विद्युद्ब्रह्म ॥ १ ॥

इति सप्तमम् ।

तस्यैव ब्रह्मणोन्यदुपासनमाह वाच मिति—

वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राणऋषभो मनोवत्सः ॥ १ ॥

दुग्धं स्तना इव देवादिभ्योन्नं ये शब्दा ददति तैः स्तनैः प्राणवृषभेण मनोवत्सेन च युतःत्रयी रूपाधेनुर्ब्रह्मेत्युपासीत ॥ १ ॥

इत्यष्टमम् ।

वैश्वानराख्यो जाठरोग्निर्ब्रह्मेत्युपासनं तस्यैवाहाय मिति—

अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येने-
दमन्नं पच्यते यदिदमद्यते तस्यैषघोषो भ-
वति यमेतत्कर्णावपिधाय शृणोति स यदो-
त्क्रमिष्यन्भवति नैनं घोषं शृणोति ॥१॥

जाठराग्निशब्दा श्रवणोक्तिः प्रासङ्गिकी ॥१॥

इति नवमम् ।

प्रकरणेऽत्रोक्तोपासनानां गतिं फलं चाह यदेति—

यदा वै पुरुषोऽस्माल्लोकात्प्रैति स वायुमा
गच्छति तस्मै स तत्र विजिहीते यथारथच-
क्रस्य खं तेन स ऊर्ध्व आक्रमते स आदि-
त्यमा गच्छति तस्मै स तत्र विजिहीते यथा
लम्बरस्य खं तेन स ऊर्ध्व आक्रमते स च-
न्द्रमसमागच्छति तस्मै स तत्र विजिहीते
यथा दुन्दुभेः खं तेन स ऊर्ध्व आक्रमते स
लोकमागच्छत्यऽशोकमहिमं तास्मिन्वसति
शाश्वतीः समाः ॥ १ ॥

उपासकस्योर्द्धगमनाय वायुः स्वावयवसंकोच-
नेन रथचक्रमध्यगतछिद्रपरिमाणकं द्वारं ददाति

सूर्याचन्द्रमसौ तु लम्बरदुन्दुभिवाद्य छिद्रपरिमा-
णकं तेन प्रजापतिलोकं शोकहिमोपलक्षिताखिल-
खिल मानसशारीरदुःखरहितं याति ॥ १ ॥

इति दशमम् ।

ब्रह्मोपासनप्रसङ्गेनोपासनान्तरमाह तदिति—

एतद्वै परमं तपो यद्व्याहितस्तप्यते परम ँ हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमरण्य ँ हरन्ति परम ँ हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति परम ँ हैव लोकं जयति य एवं वेद ॥ १ ॥

ज्वरादिव्याधियुतस्य यः सन्तापस्तथामृतं मां दाहाय ग्रामादरण्यं यन्नेष्यन्ति तथाग्नौ मृतं यन्नयन्ति त्रयमेतत्परमं तप इति भावयेत् ॥१॥

इत्येकादशम् ।

उपासनान्तरमाहान्न मिति—

अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्नमृते प्राणात्प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति वै प्राणऋतेऽन्नादेते ह त्वेव

देवते एकधा भूयं भूत्वा परमतां गच्छतस्त-द्धस्माऽऽह प्रातृदः पितरं कि९ स्विदेवैवं विदुषे साधुकुर्यां किमेवास्मा असाधुकुर्यामिति सहस्माऽऽह पाणिनामाप्रातृद कस्त्वेन योरेकधा भूयं भूत्वा परमतां गच्छतीति त-स्माउहैतदुवाच वीत्यन्नं वैऽव्यन्ने हीमानि स-र्वाणि भूतानि विष्टानि रमिति प्राणो वै रं प्राणे हीमानि सर्वाणि भूतानि रमन्ते स-र्वाणि ह वा अस्मिन्भूतानि विशन्ति सर्वाणि भूतानि रमन्ते य एवं वेद ॥ १ ॥

यदद्यते तदन्नं ब्रह्मेत्यके । अत्ता प्राणो ब्रह्मे-त्यन्ये । प्राणेन विनान्नेक्लेदेन दौर्गन्ध्यं भवति प्राणस्त्वन्नं विनाशुष्यत्यत उभयं मिलितं ब्रह्मेति प्रातृदोमुनिः पितरमाह । ततो हे प्रातृद मैवं वोचः यतो न कोप्यन्न प्राणो भयात्मक ब्रह्मज्ञ उत्तमो भवति । सर्वभूतानि चान्ने आश्रितानि प्राणबले च सति रमन्ते तस्मात्सर्वभूताश्रयत्वगुणकमन्नं सर्वभूतरमणहेतुबलवत्त्वगुणकः प्राण इति भिन्ने उपासने सहानुष्ठेये इत्युक्तवान्पिता ॥ १ ॥

इति द्वादशम् ।

चतुर्धा प्राणोपासनमाहोक्थमिति—

उक्थं प्राणो वा उक्थं प्राणो हीद ँ सर्वमुत्थापयत्युद्धास्मादुक्थविद्वीरस्तिष्ठत्युक्थस्य सायुज्य ँ स लोकतां जयति य एवं वेद ॥ १ ॥ यजुः प्राणो वै यजुः प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते युज्यन्तेहास्मै सर्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्य ँ स लोकतां जयति य एवं वेद ॥ २॥ साम प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि सम्यञ्चि हास्मै सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्य ँ स लोकतां जयति य एवं वेद ॥ ३ ॥ क्षत्रं प्राणो वै क्षत्रं प्राणो हि वै क्षत्रं त्रायते हैनं प्राणः क्षणितोः प्रक्षत्रमत्र प्राप्नोति क्षत्रस्य सायुज्य ँ स लोकतां जयति य एवं वेद ॥४॥

यथोक्थं शस्त्रेषु तथेन्द्रियेषु प्राणः प्रधानो नोत्तिष्ठति यतो प्राणः तस्मात्प्राण उक्थम् । तथा सर्व भूतानि प्राणे युज्यन्ते संगतानि च भवन्त्यतः

प्राणो यजुः साम च । क्षत्रं जातिर्यथा जनान् तथा देहं प्राणः त्रायते तः प्राणः क्षत्रमित्युपासीत ॥४॥

इति त्रयोदशम् ।

गायत्र्युपाधिकब्रह्मोपासनमाह भूमिरिति—

भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षर ँ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्सयावदेषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ १ ॥ ऋचो यजू ँ षि सामानीत्यष्टावक्षराण्यष्टाक्षर ँ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्सयावतीयं त्रयी विद्यातावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ २ ॥ प्राणोऽपानोऽव्यान इत्यष्टावक्षराण्यष्टाक्षर ँ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्सयावदिदं प्राणितावद्ध जयति योऽस्या एतदेवं पदं वेदाथास्या एतदेव तुरीयं दर्शतं पदं परोरजाय एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येषपरोरजा इति सर्वमुह्येवैष रज उपर्युपरितपत्येव ँ हैव श्रिया यशसा तपति

योऽस्या एतदेवं पदं वेद ॥ ३ ॥ सैषा गायत्र्येतस्मिꣳस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता तद्वै तत्सत्ये प्रतिष्ठितं चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एवं ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम तद्वै तत्सत्यं बले प्रतिष्ठितं प्राणो वै बलं तत्प्राणे प्रतिष्ठितं तस्मादाहुर्बलꣳसत्यादोगीय इत्येवम्वेषा गायत्र्यध्यात्मं प्रतिष्ठिता सा हैषा गयाꣳस्तत्रे प्राणा वै गयास्तत्प्राणाꣳस्तत्रे तद्यद्गयाꣳस्तत्रे तस्माद्गायत्री नाम स यामेवामूꣳसावित्री मन्वाहैषैव सा स यस्मा अन्वाह तस्य प्राणाꣳस्त्रायते ॥ ४ ॥ ताꣳहैतामेके सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूम इति न तथा कुर्याद्गायत्रीमेव सावित्रीमनुब्रूयाद्यदिह वा अप्येवंविद्बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकं च न पदं प्रति ॥५॥ स य इमाꣳस्त्रीꣳल्लोकान्पूर्णान्प्रतिगृह्णीयात्

सोऽस्या एतत्प्रथमं पदमाप्नुयादथ यावतीयं त्रयी विद्या यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयात्सोऽस्या एतत्तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शतं पदं परोरजाय एष तपति नैव केन च नाऽऽप्यं कुत उ एतावत्प्रतिगृह्णीयात् ॥ ६ ॥ तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यद्द्विष्यादसावस्मै कामोसमृद्धीति वा नहैवास्मै स कामः स मृध्यते यस्मा एव मुपतिष्ठतेऽहमदः प्रापमिति वा ॥ ७ ॥ एतद्धवै तज्जनको वैदेहो वुडिलमाश्वतराश्विमुवाचयन्नुहो तद्गायत्री विदब्रूथा अथ कथꣳ हस्ती भूतो वहसीति मुखꣳ ह्यस्याः सम्राड् न विदांचकारेति होवाच तस्या अग्निरेव मुखं यदि ह वा अपि वह्विवाग्नावभ्यादधाति सर्व-

मेव तत्संदहत्येव ५ हैवैवं विद्यद्यपि वह्विव पापं कुरुते सर्वमेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः संभवति ॥ ८ ॥

द्यौऽर्थान इत्यनयोर्यकारः पृथग्गणनीयः तथा च भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराणि गायत्र्याः प्रथमः पादः ऋचो यजूंषि सामानि द्वितीयः प्राणोपानोऽव्यानस्तृतीयः लोकवेदप्राणपादा इति ध्येयमिति यावत् । गायत्र्यर्थों मण्डलान्तर्गतो रजश्शब्दवाच्याखिललोकाधिपतिः पुरुषः सविता चतुर्थः पादः । अथ शब्दात्मिका त्रिपादा गायत्री स्वार्थचतुर्थपदे प्रतिष्ठिता तुर्यपदं तु सत्ये चक्षुषि सत्यं च बलेप्राणे एवं च गायत्र्येव प्राणे प्रतिष्ठिता । एषा च गयान्गायकान् जपतो वागादीन् त्रायते नरकादतो गायत्रीति सवितृदेवता कत्वात्सावित्रीति चोच्यते । केचित्तु वागनुष्टुप् तदुपदेशे च सरस्वती दत्तास्यादिति सावित्रीमनुष्टुभमुपदिशन्त्युपनीय तदयुक्तम् यतो गायत्री प्राणे प्रतिष्ठिता प्राणे चोपदिष्टे सर्वं वागादि दत्तं स्यान्माणवकाय । अथ गायत्री पादत्रिलोकादि प्रतिग्रहं कुर्वतोप्युपासकस्य तत्तत्पादोपासनफल-

मात्रं नश्यति नाधिको दोषो जायते । यदि कश्चि-
त्सति संभवे पादत्रय प्रतिग्रहमपि कुर्यात्तर्हि तस्यापि
तुरीयपादोपास्ति फलं नैव नश्येत तुरीयस्य दान-
प्रतिग्रहा संभवादिति गायत्री वित्स्तुतिः । हे गा-
यात्रि तत्तदुक्तपादैरेकाद्वित्रि चतुष्पदी त्वमसि चि-
द्रूपा तु अपत् नापि ज्ञायसेतो दृश्यतुरीयपदाय
परस्मै ते नमः असौ पाप्मा शत्रुरदस्त्वत्प्राप्ति वि-
घ्नकर्तृत्वंमा प्राप्नोतु इति नमस्कार मन्त्रार्थः ।
यद्युपासकस्यान्यशत्रुद्वेषस्तदा असावदो मा प्राप-
दित्यस्य स्थाने अस्मै शत्रवे देवदत्ताय कामो मास-
मृद्धि इति ब्रूयात् अथवा अहमदो देवदत्ताभिप्रेतं
प्रापमिति । कामसमृद्धिरभीष्टवृद्धिः । अथ गा-
यत्र्युपासको वुडिलोऽस्मि मुनिरिति श्रुत्वा कथं तर्हि
प्रतिग्रहदोषेण हस्ती सन्मां वहसीत्युक्तवान् ज-
नकः ततो मुखाज्ञानादिति तेनोक्तोऽग्निर्मुखं गा-
यत्र्या इत्युवाच पुनस्सः तस्मात्सर्वं पापं दग्ध्वा-
प्नोति क्रममुक्तिं समुखगायत्री वित् ॥ ८ ॥

इति चतुर्दशम् ।

आदित्यमग्निं वोपासकादिर्यथा प्रार्थयति तदा-
हहिरण्मये नेति—

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये पूषन्नेकर्षे यमसूर्यप्राजापत्यव्यूहरश्मीन् समूहतेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि यो सावसौ पुरुषः सोऽहमस्मि वायुरनिलममृतमथेदं भस्मान्त ँ शरीरम् ओम् क्रतो स्मरकृत ँ स्मरक्रतो स्मरकृत ँ स्मर अग्ने नयसुपथाराये अस्मान्विश्वानि देववयुनानि विद्वान् युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ॥ १ ॥

हे सूर्य त्वन्मण्डलेनावृतमुपास्य मार्गद्वारमतस्तद्दर्शनार्थिने मह्यमावरणं तेजोमयं पृथक्कुरु त्वद्रूपं द्रक्ष्यामि। त्वन्मण्डले यः पुरुषः स एवाहमस्म्यक्षिस्थः त्वदभेदोपासक इति यावत्। मम प्राणो वायुं देहो भस्मतां गतो तो दयां कुरु माविलम्बमिति भावः । क्रतुस्संकल्पः हे ओम् मत्संकल्पमयाग्ने यन्मयाकृतमस्ति तत्त्वं स्मरफलप्राप्तये देवयानपथा मां प्रापय हे देव त्वं सर्वेषा-

मुपासनानि जानासि। पापं पृथक्कुरु नमस्करोमि एते च मन्त्रा ईशोपनिषदन्ते चोक्ताः ॥ ४ ॥

इति बृहदारण्यकोपनिषत्प्रसादे पञ्चमोध्यायस्तत्पञ्चदशं ब्राह्मणं च ।

---

अथाब्रह्मप्रधानमुपासनं श्रीमन्थादिकर्म च वक्ष्यन् पञ्चमेऽध्याये प्रतिष्ठतत्वेन प्राणभाव एव उक्तो गायत्र्या न वागादिभावस्तत्र हेतुं ज्येष्ठत्वादि सूचयन् छान्दोग्यपञ्चमाध्यायस्यादावुक्तमेव प्राणोपासनं तावदाह य इति—

यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ १ ॥

ज्येष्ठश्रेष्ठगुणः प्राण इत्युपासीत । प्राणे ज्येष्ठत्वं चक्षुरादिभ्यः पूर्वजत्वमुपासके तूपासकाधीनजीवनत्वमन्येषाम् । श्रेष्ठता तु गुणैः । प्राणश्रेष्ठता तु संवादेन वक्ष्यमाणा ॥ १ ॥

पंचोपासनान्याह य इति—

योह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति वाग्वै वसिष्ठावसिष्ठः स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ॥ २ ॥ यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद ॥ ३ ॥ यो ह वै संपदं वेद स ँ हास्मै पद्यते यं कामं कामयते श्रोत्रं वै संपच्छ्रोत्रे ही मे सर्वे वेदा अभिसंपन्नाः स ँ हास्मै पद्यते यं कामं कामयते य एवं वेद ॥ ४ ॥ यो ह वा आयतनं वेदायतन ँ स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतन ँ स्वानां भवत्यायतनं जनानां य एवं वेद ॥ ५ ॥ यो ह वै प्रजातिं वेद प्रजायते ह प्रजया पशुभीरेतो वै प्रजातिः प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥६॥

वस्ते आच्छादयत्यभिभवतिवाग्मी वाचा वाग्मिनोपि जनानतिशय्येनेति वसिष्ठगुणावाक् ।

दृष्ट्वा हि समे विषमे च स्थितिं कुर्वन्तीति प्रतिष्ठागुणं चक्षुः । श्रोत्रे हि वेदागुरोः सकाशात् पद्यन्ते इति संपद्गुणकं श्रोत्रम् । संकल्पाधीना हीन्द्रियाणां प्रवृत्तिर्विषयाणां भोग्यताचेति सर्वं मन आश्रितमित्यायत न गुणकं मनः । रेतसावीर्येणोपस्थेन्द्रियेण वा जायते जन्तुरिति प्रजातिगुणं रेतः । इत्युपासनाभिस्तत्तद्गुणप्राप्तिः फलं व्यक्तम् ॥ ६ ॥

अथ प्राणश्रेष्ठतादि संवादेनाह तेहेति ।

ते हे मे प्राणा अह ँ श्रेयसे विवदमाना ब्रह्मजग्मुस्तद्धोचुः को नो वसिष्ठ इति तद्धो वाच यस्मिन्वउत्क्रान्तइद ँ शरीरं पापीयो मन्यते सवोवसिष्ठ इति ॥ ७ ॥ वाग्घोच्चक्रामसा संवत्सरं प्रोष्यागत्योवाच कथमशकतमद्दते जीवितुमिति ते हो चुर्यथाकला अवदन्तोवाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वा ँ सोमनसा प्रजायमानारेतसैव मजीविष्मेति प्रविवेशहवाक् ॥ ८ ॥ चक्षुर्होच्चक्रा-

मतत्संवत्सरं प्रोष्यागत्योवाच कथमशकत-
मृते जीवितुमिति ते होचुर्यथान्धा अपश्य-
न्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा
शृण्वन्तः श्रोत्रेण विद्वा ँ सो मनसा प्रजाय-
माना रेतसैवमजीविष्मेति प्रविवेशह चक्षुः ९
श्रोत्र ँ होच्चक्राम तत्संवत्सरं प्रोष्यागत्यो-
वाच कथमशकतमृते जीवितुमिति ते हो-
चुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः
प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वा ँ
सो मनसा प्रजायमानारेतसैवमजीविष्मेति
प्रविवेशह श्रोत्रम् ॥ १० ॥ मनो होच्चक्राम
तत्संवत्सरं प्रोष्यागत्योवाच कथमशकतम-
ृते जीवितुमिति ते होचुर्यथा मुग्धा अ-
विद्वा ँ सो मनसा प्राणन्तः प्राणेन वदन्तो
वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजा-
यमानारेतसैवमजीविष्मेति प्रविवेशह मनः॥
रेतो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच
कथमशकतमृते जीवितुमिति ते होचुर्यथा

क्लीवा अप्रजायमानारेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वा ᳪ सो मनसैवमजीविष्मेति प्रविवेशह रेतः ॥ १२ ॥ अथ ह प्राण उत्क्रमिष्यन् यथा महासुहयः सैन्धवः पड्वीशशङ्कून्संवृहे देव ᳪ हैवेमान्प्राणान्संववर्हते होचुर्मा भगव उत्क्रमीर्नवैशक्ष्यामस्त्वदृते जीवितुमिति तस्योमेवलिंकुरुतेति तथेति॥ १३॥ साहवागुवाच यद्वा अहं वसिष्ठास्मि त्वं तद्वसिष्ठोसीति यद्वा अहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठोसीति चक्षुर्यद्वा अहं संपदस्मित्वं तत्संपदसीति श्रोत्रं यद्वा अहमायतनमस्मि त्वं तदायतनमसीति मनो यद्वा अहं प्रजातिरस्मि त्वं तत्प्रजातिरसीति रेतस्तस्यो मेकिमन्नं किंवास इति यदिदं किंचाऽऽश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्यस्तत्तेन्नमापोवास इति न हवा अस्यानन्नं जग्धं भवति नानन्नं प्रतिगृहीतं य एवमेतदनस्यान्नं वेद त-

द्विद्वा ए सः श्रोत्रिया अशिष्यन्त आचमन्त्यशित्वाचामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते ॥ १४ ॥

प्राणो वागादयश्च पञ्चेतीमे षट् श्रेष्ठोहं न यूयमिति विवादं कुर्वन्तः कोऽस्माकं मध्ये श्रेष्ठ इति ब्रह्माणमूचुः। स च यस्मिन्निर्गते देहोऽस्पृश्यः स्यात्स इत्युवाच। ततो वागिन्द्रियं निर्गत्य देहात्संवत्सरान्ते समागत्य कथं विना मां जीवनं युष्माकमिति प्राणादीनुवाच। ते तु यथा मूकाः प्राणादिभिः प्राणनादि कुर्वन्तो जीवन्ति तथेत्यूचुः। तदा वाग्देहं प्रविश्य पूर्ववत्स्थिता। एवं चक्षुरादिकमपि निर्गम्यागम्य स्थितम्। ततः प्राणो निर्गच्छन्सर्वाणि वागादीनि सिन्धुजोमहानश्वो युगपत्स्वपादबन्धनशङ्कूनिवस्वस्वस्थानादुत्क्रान्तानि चकार। तदा न त्वां विना जीविष्यामो तो मोत्क्रमीस्त्वमिति वागादिवचः श्रुत्वा तर्हि मह्यं करं दत्तेति पुनरुवाच। अथ तथेति प्रतिजज्ञिरे ते। ततो मयि यद्वसिष्ठत्वं गुणस्सतवैव तवानुग्रहेणैवेत्यभिप्रायेण यदहं वसिष्ठास्मि तत्त्वमेव वसिष्ठोसीत्येवं रीत्या वागादयः स्वस्वगुणं करं समर्पितवन्तः।

अथान्नं वस्त्रं च मम किमस्ति तद्ब्रूत यूयमिति प्राणप्रेरिता वागादयऊचुर्यदद्यते प्राणिभिस्तत्सर्वं तेऽन्नं यत्पीयते जलं तद्वस्त्रमिति । सर्वमद्यमानमन्नं पीयमानजलं च वस्त्रं प्राणस्येति दृष्टिः कार्येति भावः । तेन फलन्तु प्राणात्मभावः । निषिद्धभक्षणप्रतिग्रहयोरदोषता फलोक्तिस्तुस्तुत्यर्था । अथ यतो जलं वासस्तस्माद्भोजनस्यादावन्ते चाचमनं कुर्वन्त्यध ऊर्ध्वं च वस्त्राभ्यामाच्छादयामि प्राणमिति भावयन्तो वेद विदः ॥ १४ ॥

इति बृहदारण्यकोपनिषत्प्रसादे षष्ठाध्यायस्य प्रथमं ब्राह्मणम् ।

अथ सर्वसंसारगतिनिरूपणायाख्यायिकामाख्याति श्वेतकेतुरिति—

श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम स आजगाम जैवलिं प्रवाहणं परिचारयमाणं तमुदीक्ष्याभ्युवादकुमारा३ इति स भो३ इति प्रतिशुश्रावानुशिष्ठोन्वसि पित्रेत्योमिति होवाच ॥ १ ॥

श्वेतकेतुर्मुनिः पञ्चालराजं प्रवाहणं सभां जेतुमाजगाम राज्ञा च गर्वमालक्ष्य हे कुमार इत्युक्तो

भो इत्युवाच । पुनरधीत विद्योसि पितुरित्युक्त ओमित्युक्तवान् ॥ १ ॥

अनन्तरवृत्तमाह वेत्थेत्यादिभिः—

वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता३ इति नेति होवाच वेत्थोयथेमं लोकं पुनरापद्यन्ता३ इति नेति हैवोवाच वेत्थो यथाऽसौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न संपूर्यता३ इति नेति हैवोवाच वेत्थोयतिथ्यामाहुत्या ५ हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ती३ इति नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वाऽपि हि न ऋषेर्वचः श्रुतं द्वे सृती अश्रृणवं पितृणामहं देवानामुत मर्त्यानां ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं चेति नाहमत एकंचन वेदेति होवाच ॥ २ ॥ अथैनं वसत्योपमन्त्रयांचक्रे नादृत्य वसतिं कुमारः प्रदुद्राव स

आजगाम पितरं त ँ होवाचेति वाव किल नो भवान्पुराऽनुसिष्टानवोच इति कथ ँ सुमेध इति पञ्चमाप्रश्नान्राजन्यवन्धुरप्राक्षीत्ततो नैकंचन वेदेति कतमेत इती म इति हप्रतीकान्युदाजहार ॥ ३ ॥ स होवाच तथा नस्त्वं तात जानीथा यथा यदहं किंच वेद सर्वमहं तत्तुभ्यमवोचं प्रेहितु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति भवानेव गच्छत्विति स आजगाम गौतमो यत्र प्रवाहणस्य जैवलेरास तस्मा आसनमाहृत्योदकमाहारयां चकाराथ हास्मा अर्घ्यं चकार त ँ होवाच वरं भगवते गौतमायदद्म इति ॥ ४ ॥ स होवाच प्रतिज्ञातोमएष वरो यां तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥ ५ ॥ स होवाच दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति ॥ ६ ॥ स होवाच विज्ञायते हास्ति हिरण्यस्याऽऽपात्तं गो अश्वानां दासीनांप्रवाराणां परिधानस्य मानो भवान्वहोरनन्त-

स्यापर्यन्तस्याभ्यवदान्यो भूदिति स वै गौतमतीर्थेनेच्छासा इत्युपैम्यहं भवन्तमिति वाचाहस्मैव पूर्व उपयन्ति सहोपायन कीर्त्योवास ॥ ७ ॥ स होवाच तथा नस्त्वं गौतम माऽपराधास्तवच पितामहायथेयं विद्येतः पूर्वं न कस्मि ९ श्चन ब्राह्मण उवासतां त्वहं तुभ्यं वक्ष्यामि को हित्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ॥ ८ ॥

मृत्वा गच्छतां यत्र मार्गौ भिद्यते तत् १ पुनर्यथात्र लोके आयान्ति तत् २ मृत्वा गच्छद्भिः परलोकः कुतो न पूर्यते ३ अथ यत्संख्याकाहुत्यां कृतायामापः पुरुषरूपाभूत्वा वदन्तीति ४ किंच देवपितृभेदेन मनुष्याणां द्वौ मार्गौ ताभ्यां चाखिलं जगद्व्याप्तम् ता च मातापित्रोर्द्यावापृथिव्यो ब्रह्माण्डकपालयोर्मध्ये एव स्त इति श्रुतिवचनमस्माकं श्रुतमस्ति तथा च श्रुतिसिद्धमार्गौ तौ केन केन कर्मणायान्तीति च जानासीति पृष्टो राज्ञा पञ्चस्वेक मपि न जानामीत्युवाच मुनिः ॥ २ ॥ ततो वसेत्युक्तो राज्ञा लज्जितो द्रुतमागत्य पितरमधीत विद्योसीति कथमुक्तं भवतेत्युवाच स मुनिः।

ततः कुत एवं वदसि सुबुद्धे इत्यनुयुक्तः पित्रा राज्ञ एतेषु प्रश्नेष्वेकमप्यहं यतो न वेदात इत्युवाच ॥ ३ ॥ ततो यथा ज्ञानं बोधितोसि वत्सराज्ञः प्रश्नास्त्वहमपि न वेदयतो गच्छ राज्ञो ब्रह्मचारिणौ भविष्याबोध्येतुमिति वदन् पिता भवानेव यात्वित्युक्तो गतो राज्ञाऽऽसनेन जलार्घ्याभ्यां वरं ब्रूहीत्युक्तया च सत्कृतो ॥ ४ ॥ मम सुतं यत्पृष्टवानसि तदेव बरं देहीत्युक्तवान् ॥५॥ तत एष तु दैवो बरो मनुष्यभोग्यवरं तु धनादित्वं याचस्वेति राजवचः श्रुत्वा ॥ ६ ॥ धनादिकं तु ममाप्यस्तीति भवतापि ज्ञायतेतो धुनोदारतया सर्वस्य पुत्रपौत्रादिगाम्यभीष्टदाता भूत्वा मां प्रत्येव शठो माभूद्भवानिति वदन् तर्हि न्यायेन विद्यामिच्छस्वेत्युक्तो राज्ञा यतः पूर्वे ब्राह्मणा वचनमात्रेणैवोपयन्त्यध्येतुं क्षत्रियमंत उपगतोस्मि भवत्तमिति कीर्तयन्नुवासन शुश्रुषादि कुर्वन्निति भावः ॥ ७ ॥ ततो यथा तवपूर्वजाममपूर्वजानां तथा ममापराधं क्षमस्वेतः पूर्वं क्षत्रियेष्वेव स्थितामपि विद्यामिमां वक्ष्यामि च तुभ्यमित्युवाच राजा ॥ ८ ॥

अथ चतुर्थाधीनत्वादन्येषां चतुर्थादिकान्युत्त-
राण्याहासावित्यादिभिः

असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा संभवति ॥ ९ ॥ पर्जन्यो वा अग्निर्गौतम तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गारान्ह्रादुनयो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोम ऌ राजानं जुह्वति तस्या आहुत्यै वृष्टिः संभवति ॥ १० ॥ अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समिदग्निर्धूमो रात्रिरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या आहुत्या अन्न ऌ संभवति ॥ ११ ॥ पुरुषो वा अग्निर्गौतम तस्य व्यात्तमेव समित्प्राणो धूमो वागर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मि-

न्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुत्यै रेतः संभवति ॥ १२ ॥ योषा वा अग्निर्गौतम तस्या उपस्थ एव समिल्लोमानि धूमो योनिरर्चिर्यदन्तः करोति तेङ्गारा अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुत्यै पुरुषः संभवति स जीवति यावज्जीवत्यथ यदा म्रियते ॥ १३ ॥ अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो धूमोर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गास्तस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आहुत्यै पुरुषो भास्वरवर्णः संभवति ॥ १४ ॥ ते य एवमेतद्विदुर्येचामी अरण्ये श्रद्धा ँ सत्यमुपासते तेर्चिरभिसंभवन्त्यर्चिषो हरन्ह आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान्वैद्युतान्पुरुषो मानस एत्य ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः

परावतो वसन्ति तेषां न पुनरावृत्तिः ॥१५॥ अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति ते धूममभिसंभवन्ति धूमाद्रात्रिᳪ रात्रेरपक्षीयमाणपक्षमपक्षीयमाण पक्षाद्यान् षण्मासान्दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति ताᳪ स्तत्र देवा यथा सोमᳪराजानमाप्यायस्वापक्षीयस्वेत्येव मेनाᳪ स्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं प्राप्यान्नं भवन्ति ते पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्ते लोकान्प्रत्युत्थायिनस्त एवमेवानुपरिवर्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्द शूकम् ॥ १६ ॥

अग्निहोत्र्यादयो देवास्सन्तस्स्वर्गे वसन्ति हुताश्च सोमाज्याद्या आपोऽपूर्वरूपेण श्रद्धा रूपा भवन्ति देवानाम् । तथा च हे गौतमगोत्र आरुणे स्वर्गलोकरूपाग्नौ देवाः श्रद्धां जुह्वति तया-

चाऽऽहुत्या पितॄणां राजा सोमो जायते । देवरूपोग्निहोत्रथादिश्चन्द्रात्मना परिणमते इति भावः।६। ततो मेघरूपाग्नौ सोमं जुह्वति त एव देवाः अनया चाहुत्या वृष्टिर्जायते चन्द्रस्य रूपे मेघे जलरूपेण परिणमते इति भावः ॥ १० ॥ ततो मर्त्यलोकाग्नौ वृष्टेर्जलस्याहुत्यान्नं जायते ॥ ११ ॥ पुरुषरूपाग्नौ हुतमन्नं च रेतो जायते ॥ १२ ॥ स्त्रीरूपाग्नौ हुतं रेतः पुरुषो जायते ॥ १३ ॥ अथैनं पुरुषं मृतं मुख्याग्नौ क्षिपन्ति तेन दिव्यरूपा जायन्ते ॥१४॥ अयं भावः स्वर्गादि पञ्चसु तथोक्तक्रमेणाग्निभ्यो जातत्वात्स्वस्मिन्नप्यग्निदृष्टिं कुर्वन्ति ये गृहस्थाः कर्मिणः ये च वनस्था हिरण्यगर्भमुपासते ते तत्र तत्रार्चिराद्यभिमानि देवताधिष्ठितमार्गेण विद्युल्लोकं गतास्ततो ब्रह्मणो मनसा जातेन पुरुषेणागत्य ब्रह्मलोकं नीताश्चिरमुत्कृष्टास्सन्तस्तत्र वसन्ति न पुनरत्रायान्ति ॥ १५ ॥ ये तु केवलकर्मिणस्ते यागादिना तत्र तत्र धूमाद्यभिमानि देवताधिष्ठितमार्गेण चन्द्रलोकं यान्ति ताꣳश्च देवा विश्रम्य विश्रम्य कर्मफलं दत्वा दत्वा भोजयन्ति यथा चमसे सोमं दत्वा दत्वा भक्षयन्ति यज्ञे। अथ क्षीणे पुण्ये चन्द्रलोकगाजलमयदेहास्ते

क्रमेण नभो वायु वृष्ट्यन्नरेतो रूपेण परिणमन्तः स्त्रीरूपाग्नौ हुताः पुरुषा भवन्ति । पुनर्यज्ञादिना चन्द्राः पुनश्चन्द्रात्पुरुषा एवं भ्रमन्ति घटीयन्त्रवत्सदा । अथ कर्मोपासनाभ्यां हीनास्तु क्षुद्रामेव कीटपतङ्गसर्पादि योनि मसकृदाप्नुवन्त्यगत्यैवोक्तो भयविधमार्गम् । अत्र पञ्चमेऽग्नौ पञ्चम्यामाहुतौ पुरुषो भवतीति चतुर्थ प्रश्नस्योत्तरम् । पञ्चाग्न्यादि विद्ययार्चिरादिं गतिर्यज्ञादिना धूमादिगतिरिति पञ्चमस्य । मृता अग्नौ क्षिप्यन्ते इत्युक्तया दाहान्ता तुल्या गतिः सर्वेषाम् तत एव तु गतेर्भिद्यते कस्य चिद्दैवः कस्य चित्पैत्रो मार्ग इति प्रथमस्य । चन्द्रादाकाशादिक्रमेणागच्छन्त्यत्रेति द्वितीयस्य । अथ गताः पुनरायान्ति क्षुद्राश्च नैवयान्त्यत्रैव कीटादि भवन्तीति तृतीयस्येति विवेकः ॥ १६ ॥

इति द्वितीयम् ।

अथ यैर्गतिरुक्ता तानि कर्माणि वित्तसाध्यानि वित्तं च महत्त्वं विना न प्राप्यत इति तदर्थं प्राणोपासकस्य मन्थाख्यं कर्म वक्तुमाह स इत्यादि ।

स यः कामयेत महत्प्राप्नुयामित्युदगयन आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमुपसद्

व्रती भूत्वौ दुम्बरेक ँ से चमसेवा सर्वौषधं फलानीति संभृत्य परिसमुह्य परिलिप्याग्नि-मुपसमाधाय परिस्तीर्याऽऽवृताऽऽज्य ँ स ँ स्कृत्यपु ँ सा नक्षत्रेण मन्थ ँ संनीय जुहोति यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चोघ्नन्ति पुरुषस्य कामान् तेभ्योहं भागधेयं जुहोमि ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु स्वाहा । या तिरश्चीनिपद्यते हं विधरणी इति तां त्वा घृतस्य यजेस ँ राधनामहै ँ स्वाहा ॥ १ ॥ ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रवमवनयति प्राणाय स्वाहा व-सिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रवम-वनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रवमवनयति चक्षुषे स्वाहा संपदे स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रवम-वनयति श्रोत्राय स्वाहाऽऽयतनाय स्वाहे-त्यग्नौ हुत्वा मन्थे स ँ स्रवमवनयति मनसे स्वाहा प्रजापत्यै स्वाहेत्यग्नौ हुत्वा मन्थे स ँ

स्रुवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रुवमवनयति ॥ २ ॥ अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रुवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रुवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रुवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रुवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रुवमवनयति भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रुवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रुवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रुवमवनयति भूताय स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रुवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रुवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रूवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रूवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे स ँ स्रूवमवनयति ॥३॥ अथैनमभिमृशति

भ्रमदसि ज्वलदसि पूर्णमसि प्रध्वस्तमस्येक
सभमसि हिं कृतमसि हिं क्रियमाणमस्युद्गीथ
मस्युद्गीयमानमसि श्रावितमसि प्रत्या श्रा-
वितमस्यार्द्रे संदीप्तमसि विभूरसि प्रभूर-
स्यन्नमसि ज्योतिरसि निधनमसि संवर्गो-
सीति ॥ ४ ॥ अथैनमुद्यच्छत्याम ँस्याम ँ
हितेमहि सहि राजेशानोधिपतिः समा ँराज-
शानोधिपतिं करोत्विति ॥ ५ ॥ अथैनमा-
चामति तत्सवितुर्वरेण्यम् मधुवाता ऋतायते
मधुक्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीः
भूः स्वाहा । भर्गो देवस्यधीमहि मधुनक्तमु-
तोष सो मधुमत्पार्थिव ँ रजः मधुद्यौरस्तुनः
पिता भुवः स्वाहा । धियो योनः प्रचोदयात्
मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः मा-
ध्वीर्गावो भवन्तुनः स्वः स्वाहेति । सर्वां च
सावित्री मन्वाह सर्वाश्च मधुमतीरहमे वेद ँ
सर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आ-
चम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्

शिरः संविशति प्रातरादित्यमुपतिष्ठते दिशामेकपुण्डरीकमस्यहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वꣳशं जपति ॥६॥ तꣳ हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ७ ॥ एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ८ ॥ एतमु हैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥९॥ एतमु हैव चूलो भागवित्तिर्जानकय आयस्थूणायान्तेवासिन उक्त्वोवाचापि य एनꣳ शुष्के स्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः पलाशानीति ॥१०॥

एत मुहैव जनकिरायस्थूणः सत्यकामाय जा-
वालायान्ते वासिन उक्त्वोवाचापि य एन ७
शुष्केस्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः
पलाशानीति ॥ ११ ॥ एतमुहैव सत्यकामो
जावालोन्तेवासिभ्यउक्त्वो वाचापि य एन ७
शुष्केस्थाणौ निषिञ्चेज्जायेरञ्छाखाः प्ररोहेयुः
पलाशानीति तमेतंनापुत्राय वाऽनन्ते वासिने
ब्रूयात् ॥ १२ ॥ चतुरौदुम्बरो भवत्यौ दु-
म्बरः स्रवऔदुम्बरश्चमसऔदुम्बर इध्म
औदुम्बर्या उपमन्थन्यौ दशग्राम्याणि धा-
न्यानि भवन्ति व्रीहियवास्तिलमाषा अणु-
प्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च ख-
लकुलाश्च तान् पिष्टान्दधनि मधुनि घृत
उपसिञ्चत्याज्यस्य जुहोति ॥ १३ ॥

यो महत्वमिच्छेत्स उत्तरायणे शुक्लपक्षे शुभेह्नि
पयो व्रतमाचरेत् । तच्च द्वादशाहं पयोभक्षणरू-
पम् । ततस्त्रयो दशेह्नि शुभे उदुम्बरस्य कंसे च-
मसे वा पात्रे दधिमधुघृतं दत्वा व्रीह्याद्यावद्य-

माणा दशनियमेनान्याश्च यथाशक्तिसंभवं ग्रा-
म्यारण्यौषधीः फलानि च समाहृत्यपिष्ट्वोपसि-
च्य तत्रैव पात्रेथ कृतयो रौदुम्बर्योर्मन्थन्यो रेकया
संमथ्य गृह्योक्तरीत्याभूसंस्कारमग्न्युपसमाधानं प-
रिस्तरणं स्थालीपाकविधिनाज्य संस्कारं च कृत्वा
पुन्नाम नक्षत्रे पात्रमग्नेः स्वस्य च मध्ये स्थापयित्वौ
दुम्बरसमिद्भिरग्निं प्रज्वाल्यौदुम्बर श्रुवेणाज्य होमं
कुर्यात्। रेतसे इत्यारभ्यस्वैकैकाहुत्यनन्तरं श्रुवाव-
लिप्ताज्यस्य चमसस्थमन्थद्रव्ये पातनानन्तरमपर
मन्थन्यामन्थनं कार्यम् ततश्चमसस्थद्रव्यस्य भ्र-
मदसीत्यादि मन्त्रेण स्पर्शः आम मिति मन्त्रेण स
पात्रस्य हस्ते ग्रहणम्। ततः पात्रस्थमन्थद्रव्यं च-
तुर्धा विभज्यगायत्र्याः मधुमत्याः व्याहृत्याश्चैकैक
पादेनैकैकभागं समस्ताभिस्ताभिश्चतुर्थं तथा भक्ष-
येद्यथा निश्शेषता स्यात् ॥ ततः सर्वं पात्रं प्रक्षाल्य
तूष्णीं पिबेत् । ततो हस्तौ प्रक्षाल्य शुद्धोदकमा-
चम्याग्नेः पृष्ठदेशं गत्वा पूर्वशिराः शयीत ततः प्र-
भातकाले दिशामिति मन्त्रेणादित्योपस्थानं कृत्वा
येन मार्गेण गतस्तेनैवागत्याग्नेरभिमुखमुपविश्य
तं हैतमुद्दालक इत्यारभ्य तमेतंनापुत्रायेत्यतः प्राक्

येवंशमन्त्रास्तान् जपेत् । भक्षणाय सँस्कृतं मन्थं शुष्कवृक्षे यदि निषिञ्चेत्तर्हि शाखापत्रादि भवेत्तत्रेति मन्थकर्म प्रशंसोक्तिर्न शमन्त्रेषु । अथ विद्याया दानस्य षट् संप्रदानानि शिष्यः श्रोत्रियो मेधावी धनदायी प्रियपुत्रो विद्ययाविद्याया दाता-चेति । तत्र मन्थ विद्यायास्तु शिष्य पुत्रावेव संप्रदाने ॥ १३ ॥

इति तृतीयम् ।

अथ धनार्थं कृतोक्तमन्थाख्य कर्मकेण प्राणोपासकेन कर्तव्यं योग्यपुत्रदं मन्थाख्यं कर्मवक्तुमाहैषा मित्यादि—

एषां वै भूतानां पृथिवीरसः पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ॥ १ ॥ स ह प्रजापति रीक्षां चक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियँ ससृजे ताँ सृष्ट्वाध उपास्त तस्मात्स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत्तेनैनामभ्यसृजत् ॥ २ ॥ तस्या-

वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणो समिद्धो मध्यतस्तौ मुष्कौ सयावान्ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधोपहासंचरत्या सा ँ स्त्रीणा ँ सुकृतं वृङ्क्तेथ य इदमविद्वानधोपहासंचरत्याऽऽस्य स्त्रियः सुकृतं वृञ्जते ॥ ३ ॥

यतः सर्वभूतसारभूतं पुरुषरेतो तस्तस्य योग्यं स्थानं स्त्रियं स सृजे मैथुनंच चक्रे प्रजापतिः तस्मात्तस्यां कण्डिकोक्त वाजपेय रूपतां ज्ञात्वायो मैथुनं चरति स वाजपेय कृतां लोकं स्त्रीणां सुकृतं चाप्नोति अज्ञस्यतु सुकृतं स्त्रियो लभन्ते ॥३॥

उक्तार्थे संमतिमाहैतद्धेति—

एतद्धस्म वै तद्विद्वानुद्दालक आरुणि राहै तद्धस्म वै तद्विद्वान् नाको मौद्गल्य आहैतद्धस्म वै तद्विद्वान्कुमारहारित आह बहवोमर्या ब्राह्मणायनानिरिन्द्रियाविसुकृतोऽस्माल्लोकात्प्रयन्ति य इदम विद्वा ँ सोऽधोपहासं-

चरन्तीति बहुवा इदꣳसुप्तस्य वा जाग्रतो वा रेतः स्कन्दति ॥ ४ ॥

ये वाजपेय समतामज्ञात्वा मैथुने सक्तास्ते सुकृतेनेन्द्रियेण परलोकेन च हीना भवन्ती त्युद्दालकादय आहुः ॥ ४ ॥

अथाधिकृताधिकारत्वाद्धनार्थमन्थं कृत्वा पुत्रार्थं मन्थं चिकीर्षुः पत्न्या ऋतुकालं ब्रह्मचर्येण प्रतीक्षेत । यदि कथंचिद्रेतः स्कन्देत्तत्र कृत्यं सार्द्धकण्डिकयार्द्धेन मैथुनायोपमन्त्रणं चाह—

तदभिमृशेदनुवामन्त्रयेत यन्मेघरेतः पृथिवी मस्कान्त्सीद्यदोषधीरप्यसरद्यदपः इदमहं तद्रेत आददे पुनर्मामैत्विन्द्रियं पुनस्तेजः पुनर्भगः पुनरग्निर्धिष्ण्या यथास्थानं कल्पन्ता मित्यनामिकाङ्गुष्ठाभ्यामादायान्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥ ५ ॥ अथ यद्युदक आत्मानं पश्येत्तदभि मन्त्रयेत मयि तेज इन्द्रियं यशोद्रविणꣳसुकृतमिति श्रीर्हवा एषा स्त्रीणां यन्मलोद्वासास्तस्मान्मलोद्वास संयशस्विनी मभिक्रम्योप मन्त्रयेत॥६॥

यन्मेऽघेत्यादिनानामिकाङ्गुष्ठाभ्यामादाय स्कन्नं रेतः पुनर्मामित्यादिना स्वस्यस्तनयोर्भ्रुवोर्वा मध्ये मार्जयेत् ॥ ५ ॥ यद्यात्मानं पश्येज्जले रेतश्च पातयेत्तदामयीत्यादि सुकृतमित्यन्तमन्त्रं जपेत् । अथात्रैव त्रयोदशकण्डिकार्थोज्ञेयः यदि जाया ऋतुमतीस्यात्तर्हि सा यथा कंसाख्य पात्रेण जलं पिबेद् वृषलेन वृषल्या वा स्पर्शं न गच्छेत् त्रिरात्रान्ते स्नात्वाथाहत वस्त्रं परिधाय व्रीही न वहन्या देवं कुर्यादिति । अथ स्त्रीणां रजस्वलात्वमेव श्रीः तस्मात्स्नातां तां त्रिरात्रान्ते गत्वाऽऽत्राभ्यां पुत्रोत्पादनं कार्यमिति ब्रूयात् ॥ ६ ॥

अनन्तरकृत्यमपरकृत्यं चाह पंचभिः—

साचेदस्मै न दद्यात्काममेनामवक्रीणीयात्साचे दस्मैनैव दद्यात्काममेनां यष्ट्यावा पाणिनावोपहत्यातिक्रामेदिन्द्रियेण ते यशसा यश आदद इत्ययशा एव भवति ॥ ७ ॥ साचे दस्मै दद्यादिन्द्रियेण ते यशसायश आदधामीति यशस्विनावेव भवतः ॥ ८ ॥ स यामिच्छेत्कामयेतमेति तस्या मर्थं निष्ठाय मुखेन मुख ँ संधायोपस्थमस्या अभिमृश्यजपे

दङ्गा दङ्गात्संभवसि हृदयादधि जायसे स-
त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादये मा
ममूं मयीति ॥ ९ ॥ अथ या मिच्छेन्न गर्भं
दधीतेति तस्या मर्थं निष्ठाय मुखेन मुखं
संधायाभिप्राण्याऽपान्यादिन्द्रियेण ते रेतसा
रेत आदद इत्यरेता एव भवति ॥ १० ॥
अथ या मिच्छेद्दधीतेति तस्यामर्थं निष्ठाय
मुखेन मुखं संधायाभिप्राण्याऽपान्या दि-
न्द्रियेण ते रेतसा रेत आदधामीति गर्भि-
ण्येव भवति ॥ ११ ॥

सा यदि नानुकूलास्यान्मैथुनाय तदा वस्त्र भू-
षणादिनानुकूलयेत् । सर्वथा ननुकूलां तु दण्डपा-
ण्यादिना क्रम्येन्द्रियेणेति मन्त्रेण शापरूपेण मै-
थुनं कुर्यात् तेन सा दुर्भगास्यात् ॥ ७ ॥ स्वयम-
नुकूलायान्त्वपरेणेन्द्रियेणेति मन्त्रेण मैथुनं चरेत् ८
अथास्यामयिप्रेमस्याद् द्वेषस्यापगमश्चेति यां स्व
भार्यामिच्छेत्तस्यायोनौ शिश्नं प्रक्षिप्य मुखेन
मुखं संयोज्य योनिं स्पृष्ट्वाङ्गादिति मन्त्रं जपेत् ॥९॥
अथेयं गर्भिणी मा भूदिति या मिच्छेत्तस्यामन-

न्तरोक्तरीत्येन्द्रियेणेति मन्त्रं जपन्स्वरेतसा वायुं विसृज्यास्या रेतो गृह्णामीति भावयेत् ॥ १० ॥

यस्यां गर्भमिच्छेत्तस्यां तु पूर्ववत्कृत्वा मन्त्रं जपन्स्वरेतसास्यारेत आदाय पुत्रोत्पत्ति समर्थं कृत्वोभयरेतः पुनः सिंचामीति भावयेत् ॥ ११ ॥

प्रसङ्गाच्छ्रोत्रियपत्न्याजारस्य दुःखदं कर्माहाथ यस्येति—

अथ यस्य जायायै जारः स्यात्तं चेद् द्विष्यादामपात्रेऽग्नि मुपसमाधाय प्रतिलोम ँ शरबर्हिःस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमाः सर्पिषाक्ता जुहुयान्मम समिद्धेऽहौषी प्राणापानौ त आददेऽसाविति मम समिद्धेऽहौषीः पुत्र पशू ँ स्त आददेऽसाविति मम समिद्धेऽहौषीरिष्टा सुकृते त आददेऽसाविति मम समिद्धेऽहौषीराशापराकाशौत आददेऽसाविति स वा एषनिरिन्द्रियो विसुकृतोऽस्माल्लोकात्प्रैति य मेवं विद्ब्राह्मणः शपति तस्मादेवं विच्छ्रोत्रियस्य दारेण नोपहासमिच्छेदुतह्येवं वित्परो भवति ॥ १२ ॥

पत्न्याजारेद्द्वेषश्चेद पक्वपात्रेऽग्निं संस्थाप्य प्रति-लोमशरैः प्रतिलोमक्रमेण परिस्तरणं कृत्वा घृता-क्तशरेषीकाः प्रतिलोमाज्जुहुयाच्चतुर्भिर्ममेत्यादि फ-डन्त मन्त्रैः । प्रत्येकाहुत्यन्ते च स्व नाम ब्रूयात् । तेन जारः सुकृतेन हीयते तस्मान्न श्रोत्रिय स्त्रि-यासहहासमपि कुर्यात् ॥ १२ ॥

प्रासङ्गिकमुक्त्वाऽऽर्त्तुप्राप्तौ कृत्यमाहाथेति—

अथ यस्य जाया मार्तवं विन्देत् त्र्यहं कꣳसेन पिवेदहतवासानैनां वृषलोन वृ-षल्युपहन्यात् त्रिरात्रान्त आप्लुत्य व्रीही-नवघातयेत् ॥ १३ ॥

उक्तोऽस्या अर्थः ॥ १३ ॥

अथावघातसिद्धतण्डुलैः कृत्यं पञ्चकण्डिका-भिराह—

स य इच्छेत्पुत्रो मे शुक्लो जायेत वेदमनु-ब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाच-यित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयि-तवै ॥ १४ ॥ अथ य इच्छेत्पुत्रो मे कपिलः पिङ्गलो जायेतद्वौ वेदावनुब्रुवीत सर्वमायु-

रियादिति दध्योदनं पाचयित्वा सर्पिष्मन्त मश्नीयाता मीश्वरौ जनयितवै ॥ १५ ॥ अथ य इच्छेत्पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन्वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाता मीश्वरौ ज-नयितवै ॥ १६ ॥ अथ य इच्छेद्दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयाता मीश्वरौ ज-नयितवै ॥ १७ ॥ अथ य इच्छेत्पुत्रो मे प-ण्डितो विगीतः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत सर्वान्वेदाननुब्रुवीत सर्वमा-युरियादिति मा ᳲसौदनं पाचयित्वा सर्पिष्म-न्तमश्नीयाता मीश्वरौ जनयित वा औक्षेण वाऽऽर्षभेण वा ॥ १८ ॥

गौरवर्णं एक वेदाध्यायी शतवर्ष जीवी मे पुत्रो जायेते तीच्छाया मवघातित तण्डुलैः क्षीरे ओ-दनं स्त्रिया पक्त्वा तत्र सर्पिर्दत्वा स्त्रीपुरुषौ भुञ्जी-याताम् तेन तादृशपुत्रजननाय समर्थौ भवेताम् १४ अग्रेतु । दध्ना ओदनपाकः ॥ १५ ॥ जलेनौदन-

पाकः ॥ १६ ॥ दुहितुः पाण्डित्यादीच्छायां तिलेन सहौदनपाकः ॥ १७ ॥ ख्यातः । सभायाजेता । रम्यसँस्कृतभाषणपटुः । यूनोऽधिकवयस्कस्य वा वृषभस्य मांसेन सहौदनपाक इति विशेषः ॥ १८ ॥

अथौदनस्य पाकभक्षणादि विधिमाहाथेति—

अथाभिप्रातरेव स्थालीपाकावृताऽऽज्यं चेष्टित्वा स्थालीपाकस्योपघातं जुहोत्यग्नये स्वाहाऽनुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेतिहुत्वोद्धृत्य प्राश्नाति प्राश्येतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां संजायां पत्या सहेति ॥ १९ ॥

गृह्योक्तस्थालीपाकविधिना प्रातःकाले आज्यं सँस्कृत्य यथा काममोदनं पक्त्वा तत्राज्यं दत्त्वा तत आदायादाय हुत्वा शिष्टचरुमादय स्वयं भुक्त्वोच्छिष्टं पत्न्यै भुक्तये दत्वा हस्तौ प्रक्षाल्य कश्चित्पात्रे जलं पूरयित्वोत्तिष्ठात इति मन्त्रं सकृत्पठित्वा त्रिः पत्नीमभिषिञ्चेत् ॥ १६ ॥

अथ पत्न्याश्लेषणमन्त्रमाहाथेति—

अथैनामभिपद्यतेऽमोहमस्मिसात्व ँ सा-
त्वमस्य मोऽहं सामाहमस्मि ऋक्त्वं द्यौरहं
पृथिवी त्वं तावेहि स ँ रभावहैसहरेतो द-
धावहै पु ँ से पुत्राय वित्तय इति ॥ २० ॥

अमोहमित्यादिर्मन्त्रः ॥ २० ॥

अथ द्वाभ्यां मैथुनविधिमाह—

अथास्या ऊरू विहापयति विजिहीथां
द्यावा पृथिवी इति तस्यामर्थं निष्ठाय मु-
खेन मुख ँ संधाय त्रिरेनामनुलोमामनुमार्ष्टि
विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पि ँ
शतु आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु
ते गर्भं धेहिसिनीवालि गर्भं धेहि पृथुष्टुके
गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ २१
हिरण्मयी अरणीयाभ्यां निर्मन्थतामश्विनौ
तं ते गर्भं हवामहे दशमेमासि सूतये य-
थाग्निगर्भा पृथिवी यथा द्यौ रिन्द्रेण गर्भिणी
वायुर्दिशां यथा गर्भ एवं गर्भं दधामितेऽ-
साविति ॥ २२ ॥

विजिहीथां द्यावापृथिवी इति वदन् पत्न्या ऊर्वोर्विभागं कृत्वा योनौ शिश्नं प्रक्षिप्य मुखे मुखं निधाय पाणिनाशिरः प्रभृत्यनुलोमं पत्न्या त्रिरनुमार्जनं कुर्याद्विष्णुरित्यादि ते सावित्यन्त मन्त्रेण प्रति मार्जनं पठितेन । अन्ते सावितिस्व नाम ब्रूयात् ॥ २२ ॥

सुखेन प्रसवाय प्रसवसमयकृत्यमाह सोष्यन्ती मिति—

सोष्यन्तीं मद्भिरभ्युक्षति यथा वायुः पुष्करिणीꣳ समिङ्गयति सर्वतः एवातेगर्भ एजतु सहावैतु जरायुणा इन्द्रस्यायं व्रजः कृतः सार्गलः स परिश्रयः तमिन्द्रनिर्जहि गर्भेण सावराꣳ सहेति ॥ २३ ॥

यथेत्यादि मन्त्रेण पत्नी मद्भिरभ्युक्षेत् ॥ २३ ॥

जातकर्माह जाते इति—

जातेऽग्निमुपसमाधायाङ्क आधाय कꣳसे पृषदाज्यꣳ संनीय पृषदाज्यस्योपघातं जुहोत्यस्मिन्सहस्रं पुष्पासमेधमानः स्वेगृहे अस्योपसन्द्यां माच्छैत्सीत्प्रजयाच पशुभिश्च

स्वाहा मयि प्राणाᳪ स्त्वयि मनसा जुहोमि स्वाहा यत्कर्मणाऽत्यरीरिचं यद्वान्यून मिहाकरम् अग्निष्टत्स्विष्टकृद्विद्वास्विष्टᳪ सुहुतं करोतुनः स्वाहेति ॥ २४ ॥

कंसे पात्रे घृतमिश्रं दधि कृत्वा पुत्रमङ्के नीत्वा कंसस्थं तत्पृषदाज्यं किंचित्किंचिदादाय सहस्र मित्यादि मन्त्रैर्जुहुयात् ॥ २४ ॥

अथ जातस्य मेधा जनककर्माण्याहाथेति तिसृभिः।

अथास्य दक्षिणं कर्णमभिनिधाय वाग्वागिति त्रिरथदधिमधुघृतᳪ संनीयानन्तर्हितेन जातरूपेण प्राशयति भूस्तेदधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥ २५ ॥ अथास्य नाम करोति वेदोसीति तदस्य तद् गुह्यमेव नाम भवति ॥ २६ ॥ अथैनं मात्रे प्रदायस्तनं प्रयच्छति यस्तेस्तनः स शयो यो मयो भूर्यो रत्नधावसुविद्यः सुदत्रः येन विश्वापुष्यसिवार्याणि सरस्वति तमिहधातवे करिति९७

होमानन्तरमङ्कस्थस्यैव पुत्रस्य दक्षिणकर्णे वागिति त्रिर्जपेत् ततो दधिमधुघृतं हिरण्ये धृत्वा साक्षाद्धिरण्येनैव दधामीत्यन्तैश्चतुर्मन्त्रैश्चतुर्वारप्राशनं पुत्र जिह्वायां कुर्यात् । ततो वेदोसीति च ब्रूयात् वेदेति वा प्रसिद्धं नाम नानेन व्यवहार इति भावः । ततो मातुरङ्के पुत्रं दत्वा पुत्रमुखे मातुः स्तनं दद्यात् यस्ते इत्यादि मन्त्रेण ॥२७॥

अथ पत्न्यै शुभाशीर्दानमेवं विधिनाजातपुत्रस्याभ्युदयं चाहाथेति—

अथास्य मातरमभिमन्त्रयते इलासिमैत्रावरुणी वीरेवीरमजीजनत् सात्वं वीरवती भवयास्मान्वीरवतो करदिति तं वा एतमाहुरतिपितावतोभूरतिपितामहोभूः परमां वत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवं विदो ब्राह्मणस्य पुत्रो जायत इति ॥ २८ ॥

ततः पुत्रस्य मातरं स्पृशन्निलासीत्याद्यकरदित्यन्तं मन्त्रं जपेत् । प्राणोपासकस्यैवं यः पुत्रो जायते स श्रीयशो ब्रह्मतेजोभिः पितरं पितामहं चातिक्रम्य परां काष्ठामति महत्त्वमाप्नोतीत्याहुर्वेदविदः ॥ २८ ॥

इति चतुर्थम् ।

अथान्ते सर्ववाजसनेयवेदाचार्यपरंपरारूपवंशमाख्यातुं पञ्चमब्राह्मणमाहाथेति—

अथ वꣳशः । पौतिमाषीपुत्रः । कात्यायनीपुत्रात्कात्यायनीपुत्रो । गौतमीपुत्राद्गौतमीपुत्रो । भारद्वाजीपुत्राद्भारद्वाजीपुत्रः । पाराशरीपुत्रात्पाराशरीपुत्रः । कात्यायनीपुत्रात्कात्यायनीपुत्रः। कौशिकीपुत्रात्कौशिकीपुत्रः । आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः । काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः ॥ १ ॥ आत्रेयीपुत्रादात्रेयीपुत्रो। गौतमीपुत्राद्गौतमीपुत्रो । भारद्वाजीपुत्राद्भारद्वाजीपुत्रः । पाराशरीपुत्रात्पाराशरीपुत्रो । वात्सीपुत्राद्वात्सीपुत्रः । पाराशरीपुत्रात्पाराशरीपुत्रो । वार्कारुणीपुत्राद्वार्कारुणीपुत्रो । वार्कारुणीपुत्राद्वार्कारुणीपुत्र । आर्तभागीपुत्रादार्तभागीपुत्रः । शौङ्गीपुत्राच्छौङ्गीपुत्रः। सांकृतीपुत्रात्सांकृतीपुत्र । आलम्बायनीपुत्रादालम्बायनीपुत्र । आलम्बीपुत्रादालम्बीपुत्रो । जायन्तीपुत्राज्जायन्तीपुत्रो । माण्डू-

कायनीपुत्रान्माण्डूकायनीपुत्रो । माण्डूकीपु-
त्रान्माण्डूकीपुत्रः। शाण्डिलीपुत्राच्छाण्डिली
पुत्रो । राथीतरीपुत्राद्राथीतरीपुत्रो । भालु-
कीपुत्राद्भालुकीपुत्रः।क्रौञ्चिकीपुत्राभ्यां क्रौ-
ञ्चिकीपुत्रौ । वैदभृतीपुत्राद्वैदभृतीपुत्रः ।
कार्शकेयीपुत्रात्कार्शकेयीपुत्रः । प्राचीनयो-
गीपुत्रात्प्राचीनयोगीपुत्रः सांजीवीपुत्रात्सां-
जीवीपुत्रः । प्राश्नीपुत्रादासुरिवासिनः प्रा-
श्नीपुत्र । आसुरायणादासुरायण । आसुरे-
रासुरिः ॥ २ ॥ याज्ञवल्क्याद्याज्ञवल्क्य ।
उद्दालकादुद्दालकोऽ-। रुणादरुण । उपवेशे-
रुपवेशिः । कुश्रेः कुश्रि-। र्वाजश्रवसो वाज-
श्रवा । जिह्वावतो वाध्योगाज्जिह्वावान्वाध्यो-
गोऽ-। सिताद्वार्षगणादसितोवार्षगणो।हरि-
तात्कश्यपाद्धरितः कश्यपः । शिल्पात्कश्य-
पाच्छिल्पः कश्यपः । कश्यपान्नैध्रुवेः कश्य-
पोनैध्रुवि-। र्वाचोवागऽ-। म्भिण्या अम्भि-
ण्याऽऽ- । दित्यादादित्यानीमानि शुक्लानि
यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाऽऽ-

ख्यायन्ते ॥ ३ ॥ समानमाऽऽसांजीवीपुत्रा-त्सांजीवीपुत्रो । माण्डूकायनेर्माण्डूकायनि-। र्माण्डव्यान्माण्डव्यः । कौत्सात्कौत्सो । मा-हित्थेर्माहित्थि-।वामकक्षायणाद्वामकक्षायणः। शाण्डिल्याच्छाण्डिल्यो।वात्स्याद्वात्स्यः कुश्रेः कुश्रि- । यज्ञवचसो राजस्तम्बायनाद्यज्ञव-चाराजस्तम्बायनस् । तुरात्कावषेयात्तुरः का-वषेयः । प्रजापतेः प्रजापति- । ब्रह्मणो ब्रह्म । स्वयम्भुब्रह्मणे नमः ॥ ४ ॥

चतुर्थकण्डिकागतपञ्चम्यन्त प्रजापतिशब्दार्थो ब्रह्मा हिरण्यगर्भः तमारभ्याधोमुखः पौतिमाषी-पुत्रान्तो वंशः । अत्र वंशवैशद्यहेतुर्मातापीतिसू-चनाय जननीशब्दगर्भेण पञ्चम्यन्तेन पदेनाचार्यः प्रथमान्तेन शिष्य उच्यते । यानीमानि यजूंषि उक्ताचार्यैं रुक्तानि तानि शुक्लानि सर्वदोषरहिता-न्युच्यन्ते याज्ञवल्क्येन ॥३॥ आसांजीवीपुत्रात्सां-जीवीपुत्रपर्यन्तं समानं सर्ववाजसनेयि शाखास्वे-कोवंश इत्यर्थः।ब्रह्मवेदः तत्तु ब्रह्मणः सकाशाज्जातं तद्धृदये स्वयमाविर्भूतमतः स्वयम्भु तस्मै नमः॥४॥

श्रीमत्पाटलिपुत्रनामनगर प्रान्तेपुरे राघवे शाकद्वीपिकुले बभूव विदितो देवोभुवो ब्रह्मवित् आनन्दान्तगणेशसंज्ञ इहयोऽनेकाल्पसद् ग्रन्थकृत् तज्जस्यात्मगुरोः सदात्मनिलयं प्राप्तस्य निर्मायिनः ॥ १ ॥ दयंयाऽनन्तरामस्य मृदुर्ग्रन्थोयमुम्भितः श्रीस्वामिभास्करानन्दैर्वृहदारण्यकेलघुः ॥ २ ॥ विक्रमात् षड्गुणाऽष्टोनद्विसहस्रतमेऽब्दके सहस्ये शुक्लशैवाऽऽब्जे काश्यां दुर्गोपकानने ३ कृशामद्धीः क्व भाष्येण क्व वेदान्ताब्धि मन्थनम् तथाप्य घटितं किंवा गुरुदेवदयालवे ॥ ४ ॥ स्वमन्यच्च तयोर्भावाऽभावौ जानात्यनेकधा धीगतोयस्सवोभूयाद्देवस्तत्त्वाऽवबोधकः ॥ ५ ॥

इति वृहदारण्यकोपनिषत्प्रसादे पंचमब्राह्मणेन षष्ठोऽध्यायः ।

विक्रमाद्राद्गः १९५२ वर्षे पौषमासे शुक्लयोः पक्षयोगयोः शैवस्य चतुर्दशी तिथैः आज्ञयोः सोमदिनमृगशिरोनक्षत्रयोश्च समाहारेश ।

